warriors avenged this insult by attacking him in his camp and killing him there When the Emperor became aware of this happening, he again invited many of his nobles to march against the Mahārājā, but they all refused to do so, till at last Irādatkhān, the eldest son of Shāistakhān, agreed to undertake the task After his departure the Emperor also sent Muhammad Bangash, who joined Irādatkhān in the way, and then they both reached Sarāi Alivardīkhān Hearing of the despatch of the Imperial forces against him, the Mahārājā, with the advice of his minister Raghunāth, sent his family to Jodhpur and then, taking his three eldest sons with him, marched to Sāmbhar Dayā Bahādur a wellknown Brāhman of Ayōdhyā, and Haidarqulī, the governor of Gujrāt, also joined Irādatkhān under the Emperor's orders On the other side Rājā Jayasingh secretly offered the services of his army to help the Mahārājā When the arrival of Irādatkhān at Rewārī became known to the Mahārājā, he also advanced upto Trivēni, a distance of twelve miles only from where the Mughal forces were encamped When the Mahārājā advanced further from Trivēni, Rājā Javasingh, with his own warriors, stepped in between the two armies and sent the Thakurs of Jhalāya, etc to inform the Mahārājā that the Emperor had deputed him (Rājā Jayasingh) to lead the vanguard in order to conclude a treaty with him (the Mahārāja) and further requested that the Mahārājā should retreat to Trivēni to avoid bloodshed They further made it clear that the Emperor s intention was that the Hindus may slaughter their own kinsmen Whereupon the Mahārāja returned to Ajmēr, and ordered Udāvat Amarsingh, son of Kushalsingh, to garrison the fort The Mughals, reaching Ajmēr, tried their best to capture the fort by assault, but to no result They then concluded a treaty through Rājā Javasingh (son-in-law of the Mahārājā), and accordingly the fort was handed over to Rājā Jayasingh Amarsingh left the fort reluctantly to join his master at Mērtā, and when he came down from the fort he was highly honoured by Nowāb Irādatkhān, the Mughal commander Thus the fort of Ajmēr came under the Mughals Thereafter Rājā Jayasingh tried to take Mahārājkumār Abhayasingh to Delhi, but the Mahārājā did not agree to his request The Mughals then proceeded to Riyān, via Budhwārā and pitched their camp there Whereupon the Mahārājā sent the Mahārājkumār and Bhandārī Raghunāth to make a night attack on them When the attacking party reached Dāngavās Rājā Jayasingh again used his influence and persuaded the Mahārājā to cancel his orders of the intended attack The Rājā

further sent a request to the Mahārājā, through his minister Shrichandra, for sending the Mahārājkumār to him, as he was desirous to marry his daughter to the Mahārājkumār When the Mahārājkumār arrived at his camp, he (Rājā Jayasingh) introduced him to Irādatkhān, who paid a return visit to the Mahārājkumār the next morning The Mughal army thereafter left Riyān for Ājmēr Some days later, the Imperial forces left Ajmēr too, leaving behind Haidarqulīkhān in charge of the city, and proceeded to Delhi When they reached Jōbner, Rājā Jayasingh wanted to take the Mahārājkumār to Āmbēr to marry his daughter to him, but the Mughal Officer insisted on taking him first to the Emperor at Delhi The Mahārājkumār also approved of this idea Rājā Jayasingh therefore left for Muttra, and the Mahārājkumār went to Delhi, where he was received with high honours

*The thirty-first canto*

After sending the Mahārājkumār to Rājā Jayasingh for marrying his daughter, the Mahārājā came to Jōdhpur Here after a period of about six and a half months the Chauhān Thākur of Sānchōre arrived at Jōdhpur to give his daughter in marriage to the Mahārājā This ceremony was performed on the 9th day of the bright half of Āshādh, V S 1781(19th June 1724 A D) On the 12th day of the bright half of Āshādha ceremony called "Ratjagā was celebrated and the Mahārāja went to sleep late in the night, which proved to be his eternal sleep Anūpchand, son of Bhandāri Raghunath, sent this sad news to the Mahārājkumār who was then at Delhi through a messenger, who reached there within three days

The body of the Maharājā was cremated on the banks of the river Nāgādari at Mandōr and the funeral pyre was lighted by his son Ānandsingh Further 6 queens 20 Pardāyats (concubines) 4 slave girls, 12 singing girls, 2 Pāsvāns 5 dancing girls, 2 eunuches, 8 Ghōtābardār girls, 5 ordinary slave girls and 1 Rāthōr girl burnt themselves with him on the funeral pyre

*The thirty-second canto*

Mahārājkumār Ānandsingh, as also his younger brothers Rāyasingh and Kishōrsingh, did not return to the city after the

cremation ceremony, but went on a voluntary exile Jōdhā Mōhkamsingh also joined them and they all reached Gōdwār There Thākur Padmasingh received them with due honours and therefore they stayed at Ghānērāo When Bhātī Amarsingh came to know about the death of the Mahārājā and of his daughter becoming suttee after him as also of the departure of her daughter's son Kishōrsingh from Jōdhpur, he wrote a letter to him (Kishōrsingh) Rājā Jayasingh had already, secured the grant of Tōdā in favour of Mahārājkumār Kishōrsingh, therefore at his (Jayasingh's) call, he (Kishōrsingh) left for Delhi after obtaining the permission of his brother

When the messenger reached Delhi and delivered the sad message through Bhandārī Raghunāth, Mahārājkumār Abhayasingh performed all the religious rites The Emperor paid him a condolence visit personally and there installed him on the Gadi of his father He, at the same time honoured him with the title of "Rāj Rājēshvar" After some months, the new Mahārājā (Abhayasingh) left Delhi for Muttra, where Rajā Jayasingh was deputed, and there he was married to the latter's daughter After the marriage, the Mahārājā visited Brindaban, Gōverdhan, etc, holy places of the Hindūs, and then returned to Delhi



# अजितोदयम्

(महाकाव्यम्)

## प्रथमः सर्गः

प्रोद्यन्नूतनयौवनान्वितमथो पृक्तं[1] सदा राधया,
श्रीकृष्णं जलदच्छविं सकरुणापाङ्गच्छटामञ्जुलम् ।
वृन्दारण्यनिकुञ्जधामनिरतं गोपीगणाराधितं,
सान्द्रानन्दरसैकसारसुतनुं भक्त्या नमाम्यन्वहम् ॥१॥

शास्त्रज्ञो[2] न च शाब्दिको[3] ऽस्म्युत महासाहित्यविज्ञोऽस्म्यहं,
नो जानाम्यहमद्भुतार्थविलसत्सत्काव्यसंयोजनाम् ।
देवी काचिदिहाऽब्जयोनितनया[4] पाणिस्थवीणाकल-
क्वाणानन्दरता निरीक्ष्य सुजडं ब्रूते तु मत्कण्ठगा ॥२॥

वाग्देवीममरार्चिताङ्घ्रिकमलामापीनतुङ्गस्तनीं,
वन्दे भक्तिविनम्रवाग्विभवदां निःशेषजाड्यापहाम् ।
हेरम्बं च [5]शितैकदन्तमनिशं सद्बुद्धिविद्याप्रदं,
प्रध्वस्तामितविघ्नराजिमखिलाभीष्टार्थसत्सिद्धिदम् ॥३॥

राज्ञोऽनेकगुणार्णवस्य सकलक्षोणीशचूडामणे
राठोडान्वयजाम्बुजव्रजवनप्रोल्लासकाहर्मणेः[6] ।
वक्ष्ये चित्रमथाऽजितस्य नृपतेः प्रीत्या चरित्रं शुभं,
यद्यस्मि प्रतिबद्धवागपि मुदा वाग्देवताप्रेरितः ॥४॥

---

१ पृक्तं संयुक्तम् । २ शास्त्रज्ञो दार्शनिकः ।
३ शाब्दिको वैयाकरणः । ४ सरस्वती ।
५ शितं तीक्ष्णम् । ६ राठोडान्वयजाः राठोडवंशीयाः ते एव अम्बुजानि, तेषां व्रजः समूहः स एव वनम्, तस्य प्रोल्लासकः विकासकः, अहर्मणिः सूर्यः, तस्य । एतेन प्रस्तूयमानस्य महाराजस्याऽजितसिंहदेवस्य स्ववंशीयानामानन्ददायित्वं शिरोमणित्वञ्च प्रदर्शितम् ।

अस्ति क्षितौ हृतसमत्रिदिवाभिमानं,[1]
सम्यग्गवाक्षनिकरैरुपराजमानम् ।
शश्वत्सुहृज्जनमनोनयनानुपेयं,
द्रङ्ग[2] च योधपुरमित्यभिधानगेयम् ॥५॥[3]

विद्वद्द्विजोच्चरितवेदपुराणघोष-
प्रध्वस्तसर्वजनताघचयं त्वजस्रम् ।
क्षत्रप्रवीरनिचयैरभितोऽभिगुप्त,
सुश्रेणिसश्रितपथ सुमहोत्सवाढ्यम् ॥६॥ युग्मम् ।

चत्वार एव नगरे वसुधामराद्या[4]
वर्णाश्च यत्र निजधर्मरता. सदैव ।
पात्यन्वहं मरुधरा गजसिंहसूनु-
स्तत्रैव सद्गुणनिधिर्यशवन्तसिंह ॥७॥

शौर्याद्धृताखिलविपक्षगणाभिमान ,
सौन्दर्यतर्जितसुपुष्पशराभिधान. ।
शश्वन्नमन्नृपतिवर्यकिरीटमाला-
सरञ्जिताङ्घ्रिसरसीरुहपल्लवाग्रः ॥८॥युग्मम् ।

धर्मावतारमिह य मनुजा ब्रुवन्ति,
धर्मेण सत्यभरशीलसमुच्चयेन ।
क्षान्त्याऽऽर्जवेन विनयेन नयेन भक्त्या,
दानेन पुण्ययशसा यशवन्तसिंहम् ॥९॥

---

१ सम सर्वपर्याय । २ द्रङ्गो नगरविशेष । अर्धर्चादित्वादस्य क्लीबत्वमत्र प्रयुक्तम् । स च "कर्वटादधमो द्रङ्ग पत्तनादुत्तमश्च स " इति वाचस्पत्युक्तलक्षण ।

३ अत्र श्लोके पादान्तानुप्रास । ईदृशस्थलेष्वग्रेऽपि ज्ञेयम् ।

४ वसुधाऽमराद्या ब्राह्मणादय ।

श्रीमान्नृपः स कमलायतपत्रनेत्रा-
मुद्वाह्य यादवमुनामकरोत् सुमुख्याम् ।
अन्यासु राजतनयासु वराङ्गनासु,
गाम्भीर्यधैर्यनिलय[1] बहुधा विचार्य ॥१०॥

आवारिधिक्षितिधव.[2] प्रथित पृथिव्या-
मोरङ्गजेब इति शाहिजहाँसुतोऽभूत् ।
दिल्लीपुर समधिगम्य सुरेन्द्रवत् स,
क्षोणीं शशास तु तदा यवनान्वयार्क ॥११॥

क्षत्राश्च[3] ये भुवि पठान-मुगल्ल-शेखा-
श्चक्रुश्च सैयदगणास्तदुपासना ते ।
ये केऽपि दूरतरगा यवनास्तु तस्य,
स्वप्नेऽप्यघ[4] तु न कदाचिदचिन्तयश्च ॥१२॥

आसीत् तु मीरुजुमलाख्य इति प्रसिद्धो,
ऽमीरुल्नबाब[5] इह तस्य सुतो नवाब ।
नाम्ना महम्मद-अमीति च तन्निदेशात्,[6]
काबिल्लनामनगरं स शशास पूर्वम् ॥१३॥

---

१ गाम्भीर्यधैर्य-निलय (गृह) इत्येतद्विशेषण 'यादवमुनाम्'इत्यस्य । अन्यासु वराङ्गनासु (मनीष्वपि) गाम्भीर्यधैर्यशालित्वेन मुना सुमुख्यामकरोदिति योजना । इत्यनेन गुणानुरागप्राधान्य राज्ञो व्यक्तम् ।

२ पतिशब्द स्वाम्यर्थस्याऽपि अभिधायक त्यक्त्वा प्रियमात्रताभिधायकस्य धवशब्दस्य प्रयोगाद् भूमिशासनानुरागित्व औरङ्गजेबस्य व्यक्त प्राधान्येन कविना, तेन विषयानुरागस्याऽप्राधान्य फलितम् ।

३ क्षत्रशब्दोऽत्र क्षत (विपत्)त्राणपरत्वेन राजार्थमात्रोपलक्षण ।

४ अघ पापमनिष्टमित्यर्थ ।

५ अत्र नबाबशब्देन पारसीकभाषाया 'उमरा' शब्दो व्यपदिष्ट ।

६ औरगजेबस्याज्ञया ।

औरङ्गजेव इह तं स्वयमाजुहाव,
सद्यस्त्वमेहि न विधेहि विलम्बमत्र ।
लब्ध्वा निदेशमधिपस्य तु सावरोधः,[1]
सैन्यैः समं त्वथ नबाबवरः प्रतस्थे ।।१४।।

तत्रत्यभूधरतटेषु तुदेगुलामा,[2]
नाम्नी हि या विषममार्गगताऽस्ति घाटी ।
आयान्तमेक्ष्य[3] तु नवाबवरं पठाणा-
स्तस्यां तदा युयुधिरे सह तेन दर्पात् ।।१५।।

ते तद्धनं परिविलुण्ठ्य च रत्नपुञ्जं,
तद्गेहिनीं सतनया[4] परिगृह्य जग्मुः ।
त्यक्तस्तु तैरथ च शीघ्रगति श्वसन् स,
प्रत्याजगाम सहसैव तु हिन्दुदेशम्[5] ।।१६।।

स्वान्ते[6] विमृश्य सुचिरं यशवन्तसिंह-
नाम्ने नृपाय निजहार्दमथाऽभिलिख्य ।
विज्ञप्तिपत्रमददादिति मारवेन्द्र[7] !
त्वत्पादपद्मविनतं परिपाहि राजन् ।।१७।।

राजेन्द्र ! सर्वयवनाधिपतेर्निदेशात्,
काबिल्लसज्ञनगरादहमाव्रजन् वै ।
पेशोर[8] सज्ञनगरात् परतः सुदूरं,
या शैलदुर्विषममार्गगताऽस्ति घाटी ।।१८।।

---

१ सावरोधः अन्तःपुरसहितः । २ 'तुदगुलाम' इति नाम्नी ।
३ दृष्ट्वा । ४ पुत्री सहिताम् ।
५ हिन्दुस्थानम् । ६ मनसि ।
७ मरुणामयः मारवः (मारवाडजनपदः) तस्य इन्द्रोऽधिपतिः ।
८ पेशावर ।

तस्यां निरुध्य सुचिरं तु पठाणदुष्टा,
हृत्वागमन् मम वधू तनया धनं च ।
मुक्तस्तु तैश्च कतिभिश्चिदहोभिरत्रा-
ऽऽयातोऽस्मि ते करुणयैव लभे[1] स्वभार्याम् ॥१९॥

तातस्त्वमेव विदितोऽसि पतिर्गतिर्मे,
नून त्वदन्यमहमत्र लभे न कञ्चित् ।
देहि त्वमेत्य सहसा परिमोच्य तेभ्यो
नूपालभालतिलकाऽद्य तु मत्कलत्रम् ॥२०॥

विज्ञापितस्त्वतितरा नृपति स तेन,
सेना सवीरनिचयामकरोत् सुसज्जाम् ।
राज्या सम श्रुतिविगर्हितमुग्रसिन्धु,
सौवीरदेशमथ वीतभय प्रतस्थे ॥२१॥

यज्ञैस्तपोभिरपि चोग्रतरैर्न योगै-
स्तीर्थावगाहनपरैर्न च नूप्रदानै ।
नो सद्व्रतैर्न गजवाजिसुवर्णदानै,
कन्यान्नदाननिरतैर्गृहदैर्न लभ्यम् ॥२२॥

यल्लभ्यते नृभिरिहाभयदं सदैव,
श्रुत्वेति वेदवचन नरराजवर्य ।
विप्रादिभिस्तु मनुजैरविलङ्घनीया-
मुत्तीर्णवान् स तटिनीं किल सिन्धुनाम्नीम् ॥२३॥युग्मम्

श्रुत्वागतं नृपवर रिपवस्तदीयाः,
सोपायना[1] खलु तदङ्घ्रियुग प्रपन्ना ।
प्रोचुर्नरेन्द्र ! शरणागतवत्सलेन्द्र !
पाहि प्रभो ! मरपते ! यशवन्तसिंह ! ॥२४॥

---

१ आसन्नभविष्यदर्थे लट् ।

प्राग् यैर्महम्मदअमी[1] युधि सविजित्य,
दाराः सुता अपहृता गिरिषु स्वयं ते ।
त्रासेन तस्य तु परोक्षत एव सन्धिं,
चक्रुर्नृपेण ददुराशु च तत्कुटुम्बम् ॥२५॥

तेभ्योऽभिगृह्य नृपतिस्त्वथ तत्कुटुम्बं,
सत्कृत्य सद्वसनभूषणभक्ष्यभोज्यैः ।
दत्त्वा नृयानमथ सार्थचयं तु भर्तुः,
पार्श्वं ह्यमूमुचदिति[2] ससुतां वधूं[3] च ॥२६॥

दत्त्वाऽभयं प्रणतिनम्रशिरोधरेभ्य-
स्तेभ्योऽथ गर्विततरान् समरे निहत्य ।
तद्दिग्जयं नृपवरः सुभटैर्विधाय,
पेशोरनाम्नि नगरे वसतिं चकार ॥२७॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये प्रथमः सर्गः
समाप्तः ।



---

१ अमीतिशब्देन 'अमीन' इति लक्ष्यते ।

२ अमूमुचद् व्यसर्जयदित्यर्थः ।

३ नवावपत्नीम् ।

## द्वितीयः सर्गः ।

अत्रान्तरे दिविगतः परमेष्ठिसूनु-[1]
गयिन् हरिं विरणयन्[2] महतीं[3] विपञ्चीम् ।
दृष्ट्वा तमागतमथाशु निजासनाच्च,
शक्रोऽवरुह्य मुनिसम्मुखमाजगाम ॥१॥

कृत्वाऽर्घ्यपाद्यमनु नम्रतयाऽभिवाद्य,
दिव्यासने कनकरत्नमये निवेश्य ।
वाक्य जगाद मघवा त्वरया कुतोऽत्र,
मत्पावनाय भगवन् ! समुपागतोऽसि ॥२॥

श्रुत्वेत्युवाच मुनिरेव स तीर्थराजा-
दत्रापुनैव तु सुरेन्द्र ! समागतोऽहम् ।
हा कष्टमस्ति भुवि यच्छृणु तद् ब्रवीमि,
प्रागेव तत्प्रतिकृतिं[4] कुरु मा विलम्बम् ॥३॥

दिल्लीश्वरोऽस्ति यवनाधिपतिर्बलीया-
नौरङ्गजेब इति तेन कृत निकृष्टम् ।
ध्वस्तस्तथाऽक्षयवटो बहुधा प्रयागे,
श्रीविश्वनाथभवन समभञ्जि काश्याम् ॥४॥

श्रीकेशवालयमिह प्रथित पृथिव्यां,
यन्माथुर तदपि विप्रकृत हठेन ।

---

१ नारद । २ नादयन् । विशिष्टो रणो नादो यस्या सा विरणा, ता करोतीति नामधातवीयो णिच् । ३ महतीनाम्नीम् (विपञ्ची वीणाम्) । ४ तत्प्रतीकारम् ।

यद् गोकुलेशसदन किल गोकुले वै,
वृन्दावने विदितमप्यनु नाशितं च ॥५॥

क्षेत्र कुरोरपि भरन् वहुमृत्स्नयाऽथ,[1]
ज्वालामुखीभवनमप्यरुधत् स मन्द. ।
म्लेच्छात्मिका हृदि चिकीर्षति भूमिमेता,
शक्नोति नो मरुपतेर्भयतस्तु कर्तुम् ॥६॥

नायु. परन्तु यशवन्तनृपस्य किञ्चित्.
पश्यामि तेन च नृणामपि भूरिविघ्नम् ।
देवालयाश्च भुवि तीर्थवराणि यानि.
नङ्क्ष्यन्ति नूनमपि चैव हि धर्मसेतु ॥७॥

श्रुत्वा स धातृतनयादथ[2] वै सुरेन्द्रो
ध्यात्वा सुरै· सममियाय तु सत्यलोकम् ।
सिद्धै· सदस्यभिगत द्रुहिण तदाराद्,[3]
दृष्ट्वा प्रणेमुरमरा विनयेन सेन्द्रा ॥८॥

प्रोत्थाय मूर्ध्न्यभिनिधाय कराञ्जलिं ते,
प्रोच्चैरथोचुरखिल मुनिनोदित तत् ।
श्रुत्वा विधि सह सुतैरपि नारदाद्यै.,
क्षीराब्धितीरमगमत्त्वरया ससिद्धै. ॥९॥

तस्थुस्तु तत्र विधिवत्प्रणिपत्य सर्वे,
बद्ध्वा कराञ्जलिपुटानि पर विनम्रा· ।
अस्तौत् सगद्गदगिरा गतसाध्वसाश्च,
नारायणं [4]सुरगुरुर्जगदेकहेतुम् ॥१०॥

---

१ प्रशस्तमृत्तिकया । २ नारदात् ।
३ आराद् दूरात् । ४ सुरज्येष्ठो ब्रह्मा ।

श्रीब्रह्मोवाच

नौमीश[1] ! तेऽखिलजगद्भयभञ्जनाय,
तापत्रयोपशमनाय निरञ्जनाय ।
ज्योतिर्मयाय महते[2] बृहतेऽणवे वा-
ऽनन्ताय सर्वनिगमाय गुणार्णवाय ॥११॥

मायाविनोदविलसद्गुणविग्रहाय,
लक्ष्मीसुलालितपदे च नमोऽस्तु नित्यम् ।
भवतेच्छयाऽऽत्तवपुषे परमात्मने च,
नित्यात्मने तु खलु चिद्घनमूर्तये ते ॥१२॥

नौमीड्य ! ते जगदघौघविनाशनाय,
दुर्दैत्यवशशमनोद्यतमानसाय ।
नारायणाय मधुकैटभभञ्जनाय,
धर्मद्विडोघशमनाय शमाय भूम्ने ॥१३॥

श्रीमन् ! प्रभोऽद्य यवनेन कृत निकृष्ट,
शक्राय तत् कथितमेत्य सुरर्षिणा वै ।
तस्माज्जवेन तव पादसरोजमाप्ता,
कार्यं यदत्र कुरु देव! दयाम्बुराशे ! ॥१४॥

तावद् बभूव गगने ह्यशरीरिणी वाग्,
ब्रह्माणमाह घनगर्जनवद् विबोध्य ।
ज्ञात किलेति भवदागमनात्पुरैव,
विज्ञापनेन तव वेदनिधे ! क्रिमत्र ? ॥१५॥

म्लेच्छोऽयमस्ति खलु दुष्टतर पृथिव्या-
मुग्रं[3] प्रतोष्य तपसोग्रतरेण सम्यक् ।
प्राग् जन्मनि त्वरितलब्धवरो महेशा-
त्तस्मादवध्यतर एव ममापि नूनम् ॥१६॥

---

१ धातूनामनेकार्थत्वान्नमामीत्यर्थं, अत एव कर्मस्थाने तादर्थ्ये चतुर्थी
२ बृहत पृथक् प्रयोगात् पूज्यार्थोऽत्र महच्छब्द । ३ शिवम् ।

विज्ञापन च वितथ न भवेद् विधे! ते,
नाह कदापि तु भवामि कलौ युगेऽस्मिन् ।
ब्रू हि त्वमेनमिति वृत्रहण विरिञ्चे!
पुत्रत्वमेतु यशवन्तमहीभुजोऽसौ ॥१७॥

लोकेश ! सशृणु पुरैव किलैतदर्थ-
मस्मन्निदेशत इत. खलु कश्यपोऽपि ।
जात. क्षितौ तु यशवन्त इति प्रसिद्धो
या यादवेन्द्रतनयाऽदितिरेव साऽस्ति ॥१८॥

तद्गर्भमेत्य भविता भुवि सार्वभौम',
सद्धर्मरक्षणपर खलहृत् सुरेशः ।
अस्मिंस्तु यूनि सति सर्वसुरालयानि,
स्थास्यन्ति तीर्थपटलान्यपि यानि तानि ॥१९॥

प्रोच्याऽब्जयोनिमिति वाग् विरराम तत्र,
ब्रह्मा दिवस्पतिमथापि यथावदुक्त्वा ।
देवान् विसृज्य तदनु स्वयमात्मधाम,
सोऽभ्याजगाम खलु हसविमानसंस्थ' ॥२०॥

देवेश्वर' स्वयमथ त्वरया तदैव,
ध्यात्वा स्वचेतसि चिर त्ववगम्य सारम् ।
दुर्गम्यके कनपथे खलु हिङ्गुलाया ,
पीठेऽभ्यगाद्धरिहयोऽतितरा विविक्ते ॥२१॥

दुर्म्लेच्छवशशमनोद्यतमानसोऽसौ,
विक्रीडितुं भुवि सुरैश्च सुराङ्गनाभि. ।
बद्ध्वाऽञ्जलिं शिरसि नम्रतया तदानी-
मस्तौत्तु तत्र वचसा परमा भवानीम् ॥२२॥

प्रपञ्चजननात् पुरा नवरवात्मनाह्लादिनी,
निगूढपदसश्रिता नियतमेव वाग्वादिनी ।

चिदेकरसनिर्भरा सदसदात्मिका मेऽन्वह,
कृपीट खलु हिङ्गुला[1] परममङ्गला मङ्गलम् ॥२३॥

विरञ्चिहरिशङ्कराऽनवगतात्मतत्त्वा परा,
जगत्स्थितिलयोद्भवप्रतिविधानदक्षाऽध्वरा ।
मरालगतिमन्थरा सकलशास्त्रगा मेऽन्वह,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥२४॥

रणत्कनकनूपुरा क्वणदनर्घ्यकाञ्चीवरा,
लसद्वलयकङ्कणाऽङ्गदधरा सुतुङ्गस्तनी ।
महर्घ्यमणिभूषणा कनककुण्डला मेऽन्वह,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥२५॥

स्फुरद्वदनकान्तिविक्षपितशारदेन्दुप्रभा,
समुद्यदमितप्रभाकरनिभारुणाङ्गी शुभा ।
सुमन्दविशदस्मिताहृततडित्प्रभा मेऽन्वह,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥२६॥

सुविद्रुमनिभारुणाधरपुटा सुदन्तच्छवि-
श्चलत्सुभगमौक्तिकप्रतिविशोभिनासापुटा ।
प्रफुल्लजलजच्छदायतनिभेक्षणा मेऽन्वह,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥२७॥

परा परतमा शिवा शिवतमात्मिका शाङ्करी,
जगज्जननिका जयास्पदमशेषविश्वम्भरी ।
जया च विजयाऽभया त्रिपुरसुन्दरी मेऽन्वह,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥२८॥

भवाम्बुनिधिविप्लुताखिलजगज्जनोत्तारण-
क्षमाङ्घ्रिकमलाक्षरा निखिलबीजमन्त्रात्मिका ।

१ हिङ्गुलाजेति भगवत्या प्रान्तप्रसिद्ध नाम ।

समुत्थवरयौवनाद्भुतकलेवरा मेऽन्वहं,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥२६॥

प्रकर्षतरचातुरीभरनिधानसीमोत्कृपा-
कटाक्षलहरिच्छटानिखिलविश्वसंजीविनी ।
नताऽभयगतिप्रदा निजजनेष्टदा मेऽन्वह,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥३०॥

वियच्छ्वसन[1]- वह्निवा-[2]क्षिति पयोदवारानिधि-
क्षपाकरदिवाकरग्रहगणप्रभेदात्मिका ।
विदिग्दिगचलाबलाद्यखिलरूपिणी मेऽन्वहं,
कृपीट खलु हिङ्गुला परममङ्गला मङ्गलम् ॥३१॥

इत्थ स्तुवत्यथ मघोन्यजिता तदैव,
तद्दृष्टिगोचरपथे समदृश्यतैषा ।
प्रोद्भूतभूरितरधामचयावभास-
प्रद्योतिताखिलककुब्-गगनान्तराला ॥३२॥

दृष्ट्वा ससम्भ्रमतया स विनम्रमौलि.,
शक्रो हि दण्डवदल ह्यपतद्धरायाम् ।
श्रीहिङ्गुलापि ललिताक्षरसंस्कृत तु,
वाक्य जगाद घनगर्जितया गिरा तम् ॥३३॥

एषा परा तु भवताऽत्र कृता स्तुतिर्मे,
यस्माद् ध्रुव समधिगम्य सुशुद्धभावात् ।
ज्ञातं पुरैव मघवश्च समीहित ते,
तत्तद् भविष्यति पर खलु हृद्गत यत् ॥३४॥

एव प्रदिश्य तु तदैव दिवस्पति सा-
ऽप्यन्तर्दधेऽथ स सुरानिदमाह वज्री ।

१ श्वसनो वायु । २ वा जलम् ।

अस्मत्प्रियार्थमिह नाकनिवासिनश्च,
सर्वाः स्त्रियश्च नितरामिह सम्भवन्तु ॥३५॥

प्रोच्येति देवनिकरं जटिलस्वरूपं,
धृत्वा तथा कलपयत्स्यितहिङ्गुलायाः।
पीठाज्जगाम मघवा नृपतिस्तु यत्र,
राठोड़वंशतिलको यशवन्तसिंह. ॥३६॥

इति श्रीमद्भट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये द्वितीय सर्ग
समाप्त ।



## तृतीयः सर्गः ।

तत्रैव तेन नरपेण सुताप्तिहेतोः
पूर्णेन्दुबिम्बवदना नरराजपुत्री ।
उद्वाहिता सुविधिनाऽग्निसमक्षमेव,
त्रस्तैणबालनयना रुचिराङ्गरागा ॥१॥

श्रीमद्यशोधरमहीपवरस्य तस्य,
राज्यं चिरं हि परिपालयतः सतस्तु ।
भूयांस एव दिवसा इव वत्सरा वै,
जग्मुः सुखेन महताऽविदितास्तदानीम् ॥२॥

नापत्यमाप परमेष गृहाश्रमद्रो[१]
र्यत् सत्फलं खलु सशल्य इवानुकालम् ।
चित्तेऽथ तेन महतीमधृतिं दधौ स,
मूर्धाभिषिक्तनिकरार्चितपादपद्मः[२] ॥३॥

नैकोऽपि मे सुतनयः स्वकुलातपत्रं,
स्कन्दो द्वितीय इव सगरलब्धकीर्तिः ।
आश्रित्य यं घनतरं लतिकेव तिष्ठेत्,
प्रत्यन्वहं सुखभरैः सह राज्यलक्ष्मीः ॥४॥

मज्जीवितं वसुचयः सकला समृद्धिः,
सद्राज्यमेतदखिलं चपलास्तुरंगाः ।
सद्रत्नभूतिरखिलास्तनयेन हीनाः,
स्वप्नोपमा इव न चिन्तयतः सुखाय ॥५॥

---

१ गृहाश्रमो गार्हस्थ्यं तदेव द्रुर्वृक्षस्तस्य । २ मूर्धाभिषिक्ता क्षत्रियाः ।

सूर्यं विना दिनगण सदनं विनाऽर्थ-
मृद्धिर्विना वितरण सुवचो विना वै ।
सद् गौरव सरसिजं च विना सरो हि,
सुश्रीकलामपि[1] न याति कुलं विपुत्रम् ।।६।।

एतत्प्रसिद्धमपि यत् सुकुल वरिष्ठ,[2]
नि श्रीकमेव निरपत्यतया यविष्ठम्[3] ।
किं वारिपूर्णमपि निष्कमलाकर यत्,
सम्यग् विभाति ननु दीर्घतर सरोऽत्र ?।।७।।

इत्थ विचिन्तयति सोऽनुदिनं महीपो
गेह यथार्थफलित न सुत विना मे ।
राज्य सुरेप्सितमिद मृगतृष्णिकाभ,
कोष्ण पिबन्ति पितर सलिल मदीया ।।८।।

एव विचिन्तयति शश्वदल नृपाले,
प्रादुर्बभूव पुरुष पुरतो नृपस्य ।
श्याम पिशङ्गवसन स्मितशोभितास्यो
राजीवपत्रनयनोऽसितवक्रकेश ।।९।।

प्रोच्चै स्फुरत्सुमणिनूपुरशिञ्जिताङ्घ्रि ,
काञ्चीकलापविलसत्पृथुसत्कटिश्च ।
सत्कङ्कणाङ्गदविशोभिचतुर्भुजाढ्य-
श्चक्राम्बुजाब्धिज[4]गदाविलसत्कराब्ज ।।१०।।

श्रीवत्सशोभिहृदयो धृतकौस्तुभश्च,
कण्ठस्थभव्यवनमाल्यविचित्रिताङ्गः ।
हारेण चापि विलसन्मणिकुण्डलाढ्यो
रत्नोज्ज्वलत्कनकशोभिकिरीटमौलि ।।११।।

---

१ सुशोभनाया श्रिया कला षोडशभागमपि । २ महत्तमम् ।
३ अल्पतमम् । ४ अब्धिज शङ्ख ।

प्रेम्णा प्रसादसुमुखो विलसत्स्वधाम-
प्रोद्भासिताखिलककुब्गगनान्तराल ।
स्थित्वा नृपस्य पुरतस्त्रुटिमात्रमेव-
मन्तर्दधे सपदि तस्य च पश्यतो द्राक् ॥१२॥

आश्चर्यमेतदखिल हि निरीक्ष्य भूपः,
स्वप्नो नु सत्यमिति किं स्वहृदा व्यचिन्तत् ।
तावद् बभूव किल वागशरीरिणी खे-
ऽप्याश्वास्य भूपतिवरं वचनं ह्युवाच ॥१३॥

धैर्य विधेहि भविता खलु देवराजो
मा माऽनुशोच नरपाल[1] किलौरसस्ते ।
म्लेच्छान्धकारशमनोद्यतसत्प्रतापो
भूपो भविष्यति भुवीह स राजराज ॥१४॥

रूपं हि मेऽद्भुतमलौकिकमेतदेव,
त्वत्प्रत्ययार्थमवनीश[1] मया व्यदर्शि ।
उद्धर्मपक्षदलनोद्यतहृत्सरोजः,[2]
सूनुर्भविष्यति रिपुक्षयकृन्नृपेश[1] ॥१५॥

केचिद् गुहान्तरगता· किल मत्स्वरूपं,
ध्यायन्ति योगनिपुणा जितमानसा ये ।
नाथामि चेतसि परं यतता[3] प्रयत्नात्,
पश्यन्ति बोधविकलाः कुत एव नूनम् ॥१६॥

पश्चात् सुतो हि भविता नरुवंशजाया·,
सुस्थास्यति क्षितितलेऽत्र तु किंचिदेव ।

---

१ अत्र कालम् । २ उन्मुक्तधर्मपक्षाणा (नराणा) दलनाय नाशनाय, अग्रे स्फुटम् । ३ यतता यतमानाना चेतसि नाथामि ऐश्वर्येण प्रकटीभवामीति योजना । नाथेराशिष्येवात्मनेपदित्वादत्र परस्मैपदम् । 'यतना' इत्यत्र तु अनुदात्तेत्वनिमित्तस्यात्मनेपदस्यानित्यत्वान् परस्मैपदित्वमस्य प्रकल्प्य शतृप्रत्यय कृत इति समाधेयम् ।

प्रोच्यैत्थमेव विरराम तदैव सा वाग्,
यद् भावि तन्न निजगाद नृपाय किंचित् ॥१७॥

श्रुत्वैतदेव वचन यशवन्तसिंहो
ध्यात्वा स्वचेतसि चिर किल तत्स्वरूपम् ।
नम्रं प्रणाममकरोद् भुवि दण्डवच्च,
स्वान्ते परां मुदमवाप महीश्वर सः ॥१८॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये तृतीय सर्ग
समाप्त ।

# चतुर्थः सर्गः

जाते तु पुष्पसमयेऽथ चतुर्दशेऽह्नि,
श्रीयादवेन्द्रतनया नृपतेर्मनस्तः ।
गर्भं दधावमितधामचयावभासं,[1]
प्राचीव षोडशकलं शरदः शशाङ्कम् ॥१॥

संन्यासिनो द्विजजना हरिभक्तसङ्घा',
सम्भोजिताः सकलभोज्यवरैर्नृपेण ।
दानानि यानि कथितानि मुनीश्वराद्यै–
र्दत्तानि तानि विधिवद् द्विजपुंगवेभ्यः ॥२॥

तेऽप्याशिषो नरपतिं प्रति योजयन्तो
जग्मु. स्वकीयभवनानि सुशुद्धचित्ताः ।
सर्वे महीपसहिता. सह राजपत्न्या,
गर्भविधानसमयान्मुदमापुरार्याः ॥३॥

स्वर्गेऽपि देवनिकरा निखिलाः समेत्य,
शक्राज्ञयाऽवतरितुं मुदितास्तदाऽसन् ।
तावद् विमृश्य विबुधास्तु[2] भृशं शुचार्ताः,
सर्वे मिथस्त्वरितमूचुरिदं वचो वै ॥४॥

जिष्णु[3]र्धरामधिगतो वयमप्यशेषा.,
सयातुमुत्कमनस' स्म इहाद्य तावत् ।
त्राता भविष्यति न कश्चिदिवस्य चेति,
प्रोच्येत्यगुर्निवसतिं परमेष्ठिनस्ते ॥५॥

---

१ अमितोऽपरिमितो यो धामचय तेज पुञ्जस्तेन अवभासते दीप्यते तम् ।
२ विबुधा इति देववाचक साकूत पदम्, तेन विशिष्टा बुद्धिमन्तो ये देवास्ते इति व्यज्यते । तु इत्यव्ययमपि अत्रत्य पूर्वोक्तदेवापेक्षया भिन्नता ज्ञापयति ।
३ जिष्णुरिन्द्र ।

दूरादुपेत्य सदसि स्थितमात्मयोनिं,
दृष्ट्वा प्रणेमुरमरा भुवि दण्डवद् वै ।
धाताऽऽह देवनिकरान्नतकधरांस्तु,
ब्रूताऽधुनाऽत्र विबुधाः! कथमागताः स्थ? ॥६॥

श्रुत्वा विधेर्वचनमाश्रिति ते तमूचु–
र्ब्रह्मन्! धरामधिगतः खलु वासवस्तु ।
यास्यन् स्वयं च सुरराजवरस्तु सोऽस्मा–
नाज्ञापयद् भुवि भवन्त्वनु मां भवन्तः ॥७॥

तस्माद् वयं त्रिदिवतो भुवि गन्तुकामाः,
स्वर्लोकरक्षकमतो भगवन्! विधेहि ।
इत्थं निशम्य भगवान् कमलासनोऽपि,
ध्यात्वा यथावदवगम्य च तानुवाच ॥८॥

भो भोः सुराः! व्रजत भूवलयं तु यूयं,
नानाकुलेषु विशदेषु च जन्म धत्त ।
तावद् विधास्यति खलु त्रिदिवस्य रक्षां,
भूत्वा त्रिविष्टपपतिर्यशवन्तसिंह ॥९॥

त्रैमासिकं तु परमायुरिहास्ति[1] तस्य,
शेषं तु तावदनुपश्यत सर्व एव ।
दिव्यं विमानवरमेव ततः प्रगृह्य,
तं स्वानयध्वमिह नाकपतिं विधातुम् ॥१०॥

तत्र स्थितस्य नृपतेर्मुदितस्य चास्य,
पुत्रोत्सवेन कतिचिद्दिवसा व्यतीयुः ।
अस्वास्थ्यमस्य नृपतेर्हि ततो बभूव,
यस्माद् बभूवुरतिदुर्मनसः पुमांसः ॥११॥

---

१ परं इत परमित्यर्थः । शेषमायु त्रैमासिकमिति योजना ।

स्थित्वाऽथ तेन नरपेण विना नृशंसाः!
सप्ताधयिष्यथ शुभं भुवने कमर्थम् ? ।।२२।।

एवं विलप्य सुचिरं विरराम राज्ञी,
कान्त दिव गतमनुव्रजितुं च येते[1] ।
सामन्तमन्त्रिनिचयैं प्रतिवारिताऽपि,
सा प्राचलत् स्वनियमान्मनसापि नेषत्[2]।।२३।।

राज्ञी दृढेन मनसा शुचिवस्त्रयुक्ता,
यावच्चिता समधिरोढुमभूत् सयत्ना ।
'विध्युत्क्रमोऽह[3]! भवतीति' मुखे मुखे वा-
गुत्तिष्ठति स्म परिलोकयना जनानाम् ।।२४।।

भर्तारमन्वयितुमिच्छुमुदीक्ष्य देवा-
स्ता म्लानहृत्कमलकुड्मलकास्तदानीम् ।
तद्गर्भहानिमपि चेतसि चिन्तयन्त
आजग्मुरम्बुदतिरस्करिणीं[4] धरन्तः ।।२५।।

बद्ध्वाऽञ्जलि विनतवक्त्रवराऽसदेश ,
प्रावोचदाशु लखधीरसुत. प्रवीर ।
मध्यस्वरामुदयसिह इति प्रशस्ता,
वाणीं सुधामिव शुभाक्षरसंस्कृता ताम् ।।२६।।

मातस्त्वदीयजठरे ननु कैटभारे-
रशावतार इव गर्भ उपेक्ष्य तं त्वम् ।
भर्त्रा समं हि गमनाय समुत्सुकाऽसि,
तत् कि ब्रवीमि भवदीयमतेः प्रभावम्? ।।२७।।

---

१ येते यत्न कृतवती । २ मनसा ईषत् किञ्चिदपि सा स्वनियमात् निज-प्रतिज्ञात न प्राचलदिति योजना । ३ अह! इत्याक्षेपे खेदे वा । विधे कर्तव्यस्य उत्क्रमो वैपरीत्य भवतीति वागुत्तिष्ठति स्म । ४ अम्बुदो मेघ एव तिरस्करिणी जवनिका ता धरन्त ।

वर्मायिते[1] मरुपतौ त्रिदिव प्रयाते,
प्राणिप्ररक्षणपरे विगतासुकल्पम्[2] ।
त्वद्गर्भगेण नरपेण विना नु विश्व-
मुज्जीवयिष्यति नरो! गतचेतन कः ? ॥२८॥

या गुर्विणी[3] जगति भर्तरि सपरेते,
तेन[4] व्रजेन्नहि सम नियत स्थिताऽत्र ।
सा तन्वती स्वपतिधर्ममजस्रमुच्चै ,
शोभा लभेत विमलेन सतीव्रतेन ॥२९॥

चेद् गर्भिणी दहति वर्ष्म[5] मृते स्वनाथे,
पापेन सा स्पृशति बालवधोद्भवेन,
इत्यस्ति वेदगदित विदित न ते किं ?,
दु साहस प्रकुरुथा इति मा स्म मात.! ॥३०॥

एतन्निशम्य वचनं यदुराजपुत्र्या,
शुग्-मोचनाय कथमप्यथ बाढमुक्ते[6] ।
ऊचुर्जना जय जयेति रव समन्ता-
त्तान्निर्जरा जलकणैश्च शनैरसिञ्चन् ॥३१॥

आश्वास्य वाक्यनिकरैरथ तां च दिव्य-
विच्छित्तिमाशु[7] शिविका भटमन्त्रिवर्याः ।
क्षौमावृतामरचयस्त्वरया ततो वै,
शोकोद्गताश्रुकणमम्प्लुतलोचनास्ते ॥३२॥

स्नातानुलेपिततरा शुचि वस्त्रयुक्ता,
सत्पुष्पमाल्यभरशोभितहृत्प्रदेशाम् ।
तत्र न्यवीविशदधीशतनुं च सर्वे,
स्नात्वा सुपुण्यसलिलेन सुमन्त्रिवीराः ॥३३॥

---

१ वर्मायिते कवचोपमे २ विगतासुकल्प मृतप्रायमित्यर्थं । ३ गर्भिणी ।
४ तेन भर्त्रा । ५ शरीरम् ६ बाढ स्वीकारे । ७ दिव्या विच्छित्ती रचनाविशेषो यस्या सा ता शिविकाम् ।

भव्योत्सवेन शिविकां भटमन्त्रिमुख्या
नीत्वा वहिः सकलवाद्यभरेण राज्ञः ।
प्लक्षादि-काष्ठनिचयेन विधानयुक्तां,
राज्ञोऽग्निसंस्कृतिमकार्षु रपात्तधैर्याः ॥३४॥

तावत् सुरा अपि विमानवरे निवेश्य,
भूपालवर्यमभिवाञ्छितवाद्यघोषैः ।
स्वर्गाङ्गनाभिरभित परिवीज्यमानं,
सच्चामरैरमरलोकमनेषत द्राक् ॥३५॥

तत्राऽस्ति मन्त्रनिपुणो हरिकृष्णदान ,
कायस्थवंशतिलक' किल मन्त्रिवर्यः ।
सिन्धुप्ररोधनभयात्[1] त्वरयोष्ट्रवाहं,
नप्रैषयत्तदनु योधपुरे प्रशस्ते ॥३६॥

उष्णीषमप्यथ नृपस्य तु राघवाय,
दत्त्वा चराय विधिवच्च विलिख्य पत्रम् ।
संप्रैषयत् स तु सुशीघ्रगमं तयोष्ट्र-
मारुह्य योधपुरनाम पुरं जगाम ॥३७॥

आसन्तदार्कपरिवेषयुता दिशोऽपि,
प्रोद्भूतधूलिभरभूतघनान्धकारा. ।
आकाशमाप मलिनत्वमहश्च रौक्ष्यं,
दुर्लक्षणानि हि सुराजमृतिर्व्यनक्ति ॥३८॥

तद्भस्म विप्रयुगलेन सुरापगायां,
प्राक्षेपयन्नृपवरस्य स मन्त्रिवर्यः ।
तस्यां चिताभुवि शुभं विमलोपलौघै.,
सत्स्थण्डिल ह्यनुपमेयमकारयत् सः ॥३९॥

१ सिन्धोर्नद्या (प्रवाहवृद्धिजन्यात्) निरोधनात् प्रतिबन्धाद् भय तस्मात् ।

कृत्वौर्ध्वदैहिकमथाऽधिपतेस्तदा ते,
प्रोचुर्मिथोऽद्य, शृणुताऽयि नरेन्द्रभक्ता ।
अस्मान् प्ररक्षति नृप खलु गर्भसस्थ-
स्तन्नैव शोच्यमधुनाऽत्र विधौ भवद्भिः ॥४०॥

इत्थ विमृश्य निखिला भटमन्त्रिवर्या
गर्भस्थित हि सममसत त नृपालम् ।
सर्वेऽपि तत्र कतिचिद् दिवसानुषित्वा,
सिन्धु हि तेरुरतिशौर्यमद वहन्त ॥४१॥

तत्सिन्धुसतरणजादुदरार्तियोगात्,
प्राप्ते प्रसूत्यवसरे हि नरुसुताया. ।
लाहोरपत्तनवरे वसति प्रचक्रु-
स्तस्याः प्रसूतिमनुवासरमीक्षमाणा. ॥४२॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये चतुर्थ सर्ग
समाप्त ।

# पञ्चमः सर्गः

उष्ट्री[1] स योधपुरमेत्य सुमन्त्रिणोऽदा-
दुष्णीषक नृपवरस्य च पत्रमन्यत् ।
ज्ञात्वा नृपं मृतमनन्यगतिः सुमन्त्री,
प्रागाद् रुदन् पुरजनैः सह राजवेश्म ।।१।।

तेषामतीव करुणस्वरमुग्रमुग्र-
माक्रन्दमेनमतिमन्दमनःप्रसादाः ।
अन्तःपुरान्तरचराश्च निशम्य नार्यः,
सर्वाः समीयुरभितः[2]श्च्युतकेशवेशाः[3] ।।२।।

प्रेयस्यमूषु[4] यशवन्तनृपस्य पत्नी,
चन्द्रावतस्य तनया विनयान्विता या ।
श्रुत्वा प्रियस्य निधनं[5] निधनं स्वकीयं,
सा साध्वमन्यत च मर्तुमथोद्यताऽभूत् ।।३।।

स्नात्वा सुपुण्यसलिले परिधाय वस्त्रं,
कृत्वाऽनुलेपनमथ प्रतिभूष्य गात्रम् ।
आरुह्य चारु नरयानवरं स्वसौधाद्,
भेरीमृदङ्गनिनदैः सह निर्ययौ सा ।।४।।

सा गाश्च काञ्चनयुता अददाद् द्विजेभ्यः,
सद्रत्नभूषणमणीन् वसनान्यभीक्ष्णम् ।
सद्वारणं च तुरगान्नरयानमन्यत्[6] ,
सोपस्करं गृहवरं च तिलादिराशीन् ।।५।।

---

१ उष्ट्री उष्ट्रारोही, मत्वर्थीय इनि । २ अभित समन्तात् ।
३ च्युता विस्रस्ता केशा वेशाश्च येषा तेऽन्तःपुरचरा मनुजा (षण्ढादय)। केशवेश केशरचनाविशेषो यासा ता सर्वा नार्यं इत्युभयत्राऽपि इत्येतत्पद योजनीयम् । ४ अमूषु अन्तःपुरचरीषु नारीषु (राज्ञीषु) प्रेयसी प्रियतरा । ५ निधन मरणम् । ६ अन्यदिति समुच्चयार्थज्ञापन-मात्राथ विवक्षितम् ।

तस्याश्चतुर्दश च सत्य इवाऽनुचर्यं,
शय्यासनादिषु सुकर्मसु या नियुक्ताः ।
ता अप्यहो नृपयशो मधुरस्वरेण,
गायन्त्य उत्कमनसो निरयुः स्वपत्या[1] ॥६॥

मण्डोवरे गिरिवरे स्वजनैः समेतैः,
प्लक्षागुरुप्रभवकाष्ठचयेन गेहे ।
निर्मापिते महति तत्र यथोपयोग,
नत्वा हरिं दिनकर विविशुस्ततस्ताः ॥७॥

तूलासने समुपविश्य तु तत्र राज्ञो,
पद्मासन तु विधिवत्प्रविधाय सम्यक् ।
उष्णीषक नृपवरस्य तु सा गृहीत्वा,
ध्यान चकार विधिवद् गुरुणोपदिष्टम् ॥८॥

ध्यात्वा नृपं नृपवधू परिचारिकाश्च,
दग्ध्वाऽग्निना निजतनु त्रिदिव प्रयाताः ।
तत्राऽप्य[2] भूपतिवर यशवन्तसिंह,
कान्त नितान्तममुना[3] सह ता विजह्रुः ॥९॥

ब्रह्मा विबुध्य नृपतिं दिवमागत त,
गुर्वादिभिश्च परिमन्त्र्य सुरैस्तदानीम् ।
चन्द्रावतस्य तनया तु शची विधाय,
चक्रे नृप सुरपतिं च ययौ स्वलोकम् ॥१०॥

यावत्तृतीयदिवसेऽस्थिचयोत्तर त-
मुष्णीषक नृपवरस्य तदासनं च ।
दृष्ट्वाऽतिविस्मयमवापुरहो[4] किमेतत् ?
तावद् बभूव गगनेऽप्यशरीरिणी वाक् ॥११॥

---

१ स्वस्य पत्या स्वामिन्या चन्द्रावतपुत्र्या (सह) निरयु मृत्यवे निरगच्छन्नित्यर्थं । २ तत्र त्रिदिवे । ३ अमुना कान्तेन यशवन्तसिंहस्यात्मनेत्यर्थ । ४ जना इति शेष ।

उष्णीष एष इदमासनमप्यहो य-
न्नैवाग्निसादजनि तच्छृणुत प्रभावम् ।
सूनुर्भविष्यति नृपस्य महोग्रधामा,
वैपक्षपक्ष[1]दलनोऽजितसिंहनामा ॥१२॥

उष्णीषमक्षयतरं हि तदर्थमेतद्,
दिव्यासनं च विधिकल्पितमेतदच्छम् ।
तत्पृष्ठतः स[2] भविता मघवावतारी,
युद्धेऽजितो रिपुगणैः श्रुतिधर्मचारी ॥१३॥

कालेन केनचन केसरिसिंहनामा,
कायस्थमस्तकमणिः सुगुणैकधामा ।
सम्प्राप्य तत्र[3] मरुराष्ट्रधराधिकार,
शास्ति स्म रक्षति तथा प्रकृतीर्विपद्भ्य ॥१४॥

ये वै मरुक्षितितले यशवन्तसिंह-
भृत्याः स्म सन्ति खलु तानथ मन्त्रिवर्य ।
आहूय वीरनिचयानपि तैर्विमन्त्र्य,
श्रीमेडतावरपुरं त्वरया जगाम ॥१५॥

चम्पान्वयी[4] विदितकीर्तिरपि प्रवीरः,
शस्त्रास्त्रमार्गनिपुणो रणजित् सुधीर. ।
सोनगसिंह[5] इति विट्ठलदाससूनु-
र्य. सर्वदा विजितवैरिगणाभिमानी ॥१६॥

चम्पात्मजैर्विपुलवीरवरैस्तयोग्रै-
र्युद्धोत्सुकैर्विविधशस्त्रधरै. सहैव ।

---

१ विपक्षाणां शत्रूणामयं (पक्ष) वैपक्ष । २ सोऽजितसिंह ।
३ तत्र योधपुरे । ४ चम्पान्वयी चांपावतकुलोत्पन्न ।
५ सोनगसिंहनामा ।

शौर्योन्नतोद्धतमदश्च[1] समत्सर म
सर्वै· समेत्य सह योधपुरे ह्यतिष्ठत् ।।१७।। युग्मम्।।

भाटी[2]-भटैरभिमत मुरताणसूनु-
विख्यातकीर्तिरपि वै रघुनाथसिंह· ।
सन्मन्त्रतत्त्वनिपुणो वदतां वरेण्य-
स्ताहग्गुणैरपि तथैव च रामभाटी ।।१८।।

ऊदान्वयी सुविदितोऽथ दयालुदास-
सूनुर्जितारिनिकरो नरसिंहदास ।
दाक्षिण्यदाननिरतो वलिरामपुत्रः,
सद्भक्तिमान् समरजित्किल राजसिंह· ।।१९।।

प्रायागदासिरपि[3] विश्रुतकीर्तिरन्य
ऊदान्वयी समरजित् किल रूपसिंह ।
तस्याऽनुजो दृढतनुर्जितशत्रुपक्षो
दाक्षिण्यदाननिरतोऽप्यथ कृष्णसिंह ।।२०।।

नानाकुलोद्भवभटा समरोत्सुकाश्च,
शस्त्रास्त्रमार्गनिपुणा रणकोविदाश्च,
इत्यादयोऽपि च परे बहव· समीयु,
श्रीमेडतापुरवर सह मन्त्रिणा वै ।।२१।। कलापकम् ।।

काविल्लजो भटवरो यवनेशभृत्य,
श्रीमीरखान इति नामधरस्तदानीम् ।
स्वस्वामिने सुविधिना परिलिख्य पत्र,
सर्वं व्यजिज्ञपदिद यशवन्तवृत्तम् ।।२२।।

---

१ शौर्योन्नतश्चासौ उद्धतमदश्चेति कर्मधारय· । २ 'भाटी'ति क्षत्रियान्तर्गताऽवान्तरजाति, तयोपलक्षिता भटा योधास्तै ।

३ प्रयागदासस्यापत्य तत्पुत्र इत्यर्थ ।

तत्पत्रमर्म निखिलं परिबुध्य सम्यग्,
म्लेच्छाधिपो निजसदःस्थितभृत्यवर्यान् ।
पादौ प्रसार्य सुचिरं बहुधाऽभिनन्द-
न्नुच्छ्वसय दीर्घमिति दृप्तवचो बभाषे ॥२३॥

शैलायितस्य[1] किल तस्य नृपस्य भारैः,
क्लिष्टं मदीयहृदयस्थलमद्य यावत् ।
पादौ प्रसारयितुमप्यमुतोऽवकाशो
न क्वाऽप्यभून्न च मनोरथसिद्धिरस्मात् ॥२४॥

भारो बताऽद्य विधिना ह्यवतारितो मे,
विष्वग् ममाऽङ्घ्रिपरिचालनमद्य सिद्धम् ।
जातो मनोरथ इतः सफलोऽखिलोऽपि,
निःशङ्कमात्मरुचितं तदितः करिष्ये ॥२५॥

कायस्थवंशतिलकः किल पारसीज्ञो
वृत्तान्तलेखनपरो यशवन्तभृत्यः ।
श्रीश्यामदास इति नाममतस्तदानीं,
म्लेच्छाधिपं प्रतिदिनं नितरामुपास्त ॥२६॥

भर्तुः स मृत्युमुपलक्ष्य तदैव गत्वा,
तं सव्यजिज्ञपदशेषमपि प्रवृत्तम् ।
औरङ्गजेब यवनाधिपतिप्रकाण्ड!
राज्ञो मरुस्थलपतेरिति वृत्तमन्त्यम्[2] ॥२७॥

पृथ्वीश्वरस्य यशवन्तहरेस्तथाऽन्त-
र्वत्न्यौ[3] स्त्रियाविति च निश्चितमस्ति नूनम् ।
म्लेच्छाधिपस्य वचनश्रवणं तदन्त्य,[4]
हृद्यर्पितं प्रखरशल्यमिवाशु जज्ञे ॥२८॥

---

१ शैलायितस्य पर्वतोपमस्य । २ अन्त्य अन्तिमकालिकम् ।
३ अन्तर्वत्न्यौ गर्भिण्यौ । ४ अन्त्य अन्तिम अर्थात् स्त्रियौ अन्तर्वत्न्यौ (गर्भिण्यौ) इत्येवरूपम् ।

तावद् विमृश्य सुचिरं हृदि सविबुध्य,
भृत्यं स गुर्ज्जधरमित्यवदद् विविक्ते[1] ।
सस्त्रीक एत्य यशवन्तहरेस्तथाऽन्त-
र्वत्न्यौ स्त्रियौ स्त उत नो इति निश्चिनु त्वम् ।।२९।।

लब्ध्वा निदेशमथ सोऽपि वधूसहायो,
लाहोरमेत्य खलु तद्भटमन्त्रिभिश्च ।
सगत्य चाऽनुदिनदर्शितया विनीत्या,
नीत्या तथाऽऽरभत मार्मिककर्म कर्तुम् ।।३०।।

कश्चित् प्रयाप्य समयं भटमन्त्रिणा स,
विश्वासभाजनमभूद् गृहिणीसमेतः ।
अन्त पुराङ्गणचरीं किल तस्य पत्नीं,
तं द्वारपालमथ ते विदधुर्विशङ्काः ।।३१।।

श्रुत्वा नृपस्य मरणं यवनाधिराज
इस्तारखानमजमेरपुरे नियुक्तम् ।
नव्वाबमाशु निजभृत्यमिति न्यदिक्षद्,
मद्धस्तगा मरुधरा कुरु तत्र गत्वा ।।३२।।

इस्तारखान इति तस्य महानिदेश-
मौरङ्गजेवनरपालपतेस्तदानीम् ।
लब्ध्वा निधाय शिरसि स्वबलाभिगुप्तः,
श्रीमेडतापुरवरं त्वरया जगाम ।।३३।।

क्षत्रास्तमागतमवेत्य सुसज्ज्य सर्वे,
तत्सम्मुख सपदि जग्मुरहीनसत्त्वा ।
म्लेच्छस्तदाशयमवाप्य वहिस्तटाके,
चक्रे निवासमरिसङ्घभयाद् विषण्णः ।।३४।।

---

१ विविक्ते छन्ने ।

दृष्ट्वा तदाऽरिनिवयं मनसा विचिन्त्य,
पत्रं विलिख्य विधिवद् विनयेन युक्तम् ।
स प्रैषयज्झटिति सर्वधराधिपाय,
दूतस्ततो विनयनम्रतया ददौ तत् ॥३५॥

आदिष्टवान् सरविलन्द-नवाबमीशो,
भ्रूक्षेपणात् स तदवेत्य च तन्निदेशम् ।
आधाय तच्छिरसि पत्रवरं विनम्र-
स्तद्वाचनाय यवनेशपुरः प्रवृत्तः ॥३६॥

श्रीमन् ! प्रभो ! शृणु समग्रधराधिपेन्द्र !
युष्मन्निदेशमनुगृह्य समागतोऽस्मि ।
क्षत्रा हि सन्ति बहवो मिलितास्तथाऽत्र,
युद्धोत्सुका परमशौर्यमदोद्धताश्च ॥३७॥

तान् वक्ष्यहं तु मरुदेशधराधिकार,
दिल्लीश्वराय सुसमर्प्य स सेवनीयः ।
अस्माद् भविष्यति हि वः कुशलं च रक्षा,
नो चेद् बलं बहुतरं पुनरेष्यतीह ॥३८॥

मा हन्तुमत्र मनसाऽरिगणः प्रवृत्तः,
साम्नैव कर्तुमशकं परमात्मरक्षाम् ।
दृप्ता वदन्ति किल ते यवनाधिपोऽपि,
चेदापतेत्तदपि नैव वयं बिभीमः ।

अद्याऽप्यहो समशक[१] न पुरं प्रवेष्टुं,
भीतः स्थितोऽस्मि बहिरेव विरोधिवर्गात् ।
चञ्चुप्रवेशमपि कर्तुमिहोत्सहे नो,
कार्यं यदत्र खलु तत् करणीयमाशु ॥४०॥

---

१ न समशक नाहं शक्तवान् ।

श्रुत्वेति भृत्यलिखितं यवनाधिनाथ,
कोपादतीव सपदि स्फुरिताधरोष्ठ ।
सभारमप्यथ विधाय स सर्वमाशु,
प्रागात्ततो मरुधरां यवनप्रवीरैः ॥४१॥

द्वाविंशतिप्रमितयोधनवाबवर्या-
स्तत्सङ्गिनोऽपि धृतयुद्धधुरानियुक्ता[१] ।
अग्रेसर किल वहादुरखाँनवाब,
कृत्वा जगाम मरुदेशजिगीषया स ॥४२॥

श्रुत्वाऽऽपतन्तमथ त तु वहादुर ते,
दिल्लीश्वर तदनु योधपुरस्य भृत्याः ।
प्रोचुः परस्परमिहैव रिपु विजित्य,
कीर्ति क्षितौ वितनुयाम दिव जयेम ॥४३॥

सन्मन्त्रिणा सह तदा रघुनाथमिह,
समन्त्र्य वीरनिवहानथ तानुवाच ।
राज्यौ स्त एव निकटप्रसवे ततोऽद्य,
श्वो वा परश्व उत सभविता कुमारः ॥४४॥

दूराऽधुना नृपचमूः सुतरा[२] च राज्ञी-
क्षत्रप्रवीरनिचया सकुटुम्बवर्गा. ।
तिष्ठाम एव वयमत्र समं समेता,
स्थास्याम उत्तरतर[३] च धृतावधाना. ॥४५॥

गत्वाऽचिरादिति[४] बहादुरखाँ-समीप,
सधानमेव[५] कुरुताशु यथाकथचित् ।
यावत् समेष्यति तदीयचमू सुखेन,
तावद् भविष्यति मरुक्षितिपालबालः ॥४६॥

---

१ धृता युद्धस्य धूर्भारो यैस्ते तथोक्ता । "ऋत्वपूरब्धू ' इत्य ।
२ सुतरामित्यनेन शत्रुपक्षदर्शित-क्लेशराहित्य सूचितम् । ३ उत्तरतर अग्रे भाविनि कालेऽपीत्यर्थ । ४ इति कारणात् । ५ सधान सधिम् ।

जाते सुतेऽथ यशवन्तनृपस्य नूनं,
सस्वामिकः किल भविष्यति देश एषः ।
भृत्यैः कृतो भवति भर्तरि वै विरोध-
स्सन्धिस्ततः समुचितो न तु विग्रहोऽत्र ॥४७॥

निश्चित्य मन्त्रसुभटैरिति तत्पुरस्तात्,
सद्भाटिने भटवराय तु रामनाम्ने ।
सन्मन्त्रतत्त्वनिपुणाय धुरं प्रदाय,
दत्त्वा तथार्थनिचयं मुमुचे स तेन ॥४८॥

औदिर्भटस्तु[1] बलिरामसुतः प्रवीरः,
श्रीराजसिंह इति वै विदितः स्वनाम्ना ।
औदावतिर्भटवरो नरसिंहदासो
दायालदासिरथ शस्त्रभृतां वरेण्यः ॥४९॥

प्रायागदासिरथ विश्रुतकीर्तिरन्य
ऊदान्वयी समरजित् किल रूपसिंहः ।
तस्यानुजः समरनिर्जितशत्रुपक्षो
दाक्षिण्यदाननिरतोऽप्यथ कृष्णसिंहः ॥५०॥

इत्यादि-सत्कुल-भवान् समरोत्सुकांश्च,
कृत्वेति पञ्चशतकप्रमितान् सहायान् ।
रामो विसृष्ट इति तेन शुभे मुहूर्ते,
प्रोग्रैः सुवीरनिकरैः सह प्रतस्थे ॥५१॥ तिलकम् ॥

रामश्च मन्त्रिसुभटैः सह सन्नियुक्तो
गत्वा बहादुरमथो समयं विधाय ।
तस्मै ददौ मरुधरां स नवाबवर्यं,
स्वीकृत्य तामकृत देशमथात्मसाच्च ॥५२॥

सादुल्लसंज्ञमयुजत्[1] स तु शेखवर्यम् ।
स्थित्वा स तत्पुरवर सहसोद्धतो वसन्,
संनद्धशेखनिकरैः सह वै शशास ।।५३।।

सादुल्लसंज्ञमुपवेश्य च मेडताख्ये,
स्थित्वा स्वय तु कतिचिद्दिवसानि तत्र ।
सद्य. प्रयाणमकरोत् पुरत ससैन्य.
पीपाडमेत्य च वहादुरखाँ ह्यतिष्ठत् ।।५४।।

देवालया सुवहुशोऽपि च यत्र यत्र,
देशे मरुस्थलवरे किल तत्र तत्र ।
विध्वसिता बत नवाबबहादुरेण,
हा! कष्टमेव विहित विधिना तदानीम् ।।५५।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये पञ्चम सर्ग
समाप्त ।

---

१ स नवाव शेखवर्यं सादुल्लाखानमयुजत् शासनाय नियुङ्क्ते स्मेत्यर्थं ।

# षष्ठः सर्गः

अत्रान्तरे किल नरुकनृपात्मजाताऽऽ-
सन्ने प्रसूतिसमये सति सूतिवार्त्तैः ।
लाहोरपत्तनवरे परिपीडिताऽभूत्,
सूर्योदयात् स[1] उदयं पुनराप यावत् ॥१॥

सर्वेषु सैन्यनिकरेषु बहिःस्थितेषु,
म्लेच्छः स गुर्जधर एव धृतावधानः ।
द्वारेऽवरोधवसतेः स्थितवांस्तदानी-
मन्यन्तरेऽपि च बभूव तदीयपत्नी ॥२॥

तत्काल एव किल सन्निहितप्रसूतिः,
श्रीयादवस्य तनयाऽपि तदीययाऽऽर्त्या ।
त्यक्त्वा धृतिं प्रसववेदनयाऽऽकुलाऽभू-
देकापदापदमहो अपरां प्रसूते ॥३॥

यः श्वोऽद्य वाथ भविता तनयो मदीयो,
नूनं भविष्यति स एव मरुस्थलेशः ।
प्राणान्तकष्टमधुनाऽनुभवाम्यहं तु
जातेन तेन मयि किं नु सुतेन पश्चात् ? ॥४॥

तस्यामिति व्यथितचेतसि चिन्तयन्त्यां,
तां हिङ्गुलाऽकथयदक्षिपथावतीर्णा ।
मा मा विषीद धर धैर्यमिहाऽधुनैव,
प्राक् ते भविष्यति सुतो मरुदेशनाथ ॥५॥

जातेन तेन तनयेन नयेन राज्य-
लक्ष्मीरिव त्वमुपयास्यसि पूर्णशोभाम् ।
यो भूमिपानविनयानखिलान् पृथिव्यां,
शासिष्यति प्रतिदिनं त्वजितो विपक्षैः ॥६॥

---

१ सूर्योदयात् प्रथमात्, स सूर्यं पुन अन्येद्यु सदन्वितमित्यर्थः । उदय आप तावत् समय यावत् । अष्टप्रहरमित पूर्णमेकमहोरात्रमित्यर्थः ।

यो वै विजित्य सकलानपि भूमिमेता,
धर्मं धरिष्यति हि धर्मधुरन्धरः सन् ।
पृथ्वीश्वरत्वमुपयास्यति चोरुधामा,
युद्धे परैरविजितोऽजितसिंहनामा ॥७॥

साऽन्तर्दधे भगवतीति निदिश्य राज्ञीं,
साऽपि प्रमोदमतुलं धरति स्म चित्ते ।
स्वप्नेऽब्जहारमनु मीनयुगं ददर्श,
पूर्णं च कुम्भमथ कल्पतरुं फलाढ्यम् ॥८॥

देहे च वामनयनं किल वामबाहु-
र्वामोरुरस्फुरदजस्रमथो महिष्याः ।
प्राप्ते प्रसूतिसमयेऽथ समीपमेव,
वर्षेऽसुवह्नितुरगेन्दुमिते[1] प्रसिद्धे ॥९॥

प्राप्ते वसन्तसमये किल चैत्रमासे,
पक्षेऽसिते शुभतरे च तिथौ चतुर्थ्याम् ।
कुम्भं गते च खरधामनि[2] सौम्यवारे,
स्वातौ पुनर्मकरनाम्नि शुभे च लग्ने ॥१०॥

रामाश्विसज्ञसहितेषु[3] गताशकेषु
सूर्योदयादनलवायुघटीष्वितासु[4] ।
तेजोनिधेरजितसिंहनृपस्य जन्म,
लाहोरनाम्नि नगरे प्रवभूव भव्ये ॥११॥

नूनं चतुर्ष्वपि च केन्द्रगृहेषु सस्थैः,
खेटै[5] कियद्भिरपि सूचितभाग्यराशिम् ॥१२॥

---

१ 'अङ्कानां वामतो गतिरिति' वचनात् (१७३५) मिते वर्षे (वैक्रमे)
२ खरधामनि सूर्ये । ३ रामाश्विसज्ञसहितेषु २३ मितेषु ।
४ अनलवायुघटीषु ५३ घटीषु । ५ खेटैः ग्रहैः ।

सा सप्तमासिकमहो सुषुवे कुमारं,
शक्तित्रयीव[1] नृपतेः परमाक्षयार्थम् ॥१२॥

आसीत् तदोत्सव इहातुलितः प्रहर्षा-
दुत्कर्षतश्च दिवि दुन्दुभयो विनेदुः ।
पुण्या ववुश्च मरुतः ककुभः प्रसेदु-
र्वह्निः प्रदक्षिणमुखो हुतमाददे च ॥१३॥

पुंसां मनांसि विरजांसि सरांसि चास-
न्नद्यः प्रसन्नसलिला अवहंस्तदानीम् ।
भव्यो भवो[2] हि महतामिह तादृशा तु,
नूनं महाभ्युदयकारक एव स[3] स्यात् ॥१४॥

बालस्य तस्य जनुषः समकालमेव,
तस्मिन् प्रसूतिभवने परिदीप्यमानाः ।
दीपा बभूवुरभितो हृतकान्तिसारा-
स्तारा इवोषसि नवाऽरुणदर्शनेन ॥१५॥

तज्जन्मवृत्तमखिलं हि सुधायमानं,
श्रुत्वा जना मनसि सम्मुदिता अभूवन् ।
अभ्यागता उपगता अथ याचकाश्च,
प्राप्यार्थमिष्टमवदञ्जयशब्दमुच्चैः ॥१६॥

नाडीयुगोत्तरमथ[4] क्षितिपालपत्नी,
श्रीमन्नरूकतनयं तनयं ह्यसोष्ट ।
सामन्तमन्त्रिनिवहाः सह भूमिदेवैः,
श्रुत्वा परां मुदमवापुरुदारचित्ताः ॥१७॥

चाँदेर्मुहोकमभटस्य[5] वधूर्वहेली,
कन्यामजीजनदुमाशभवां तदानीम् ।

---

१ शक्तीनां प्रभावोत्साह-मन्त्रजभेदेन त्रिविधत्वम् । 'शक्तयस्तिस्रः प्रभावोत्साह-मन्त्रजाः' इत्यमरः । २ भवो जन्म । ३ सः भवः (जन्म) । ४ घटीद्वयानन्तरम् । ५ चाँदावतस्य ।

सा म्लेच्छनंघमनुमोहयितुं विनिन्द्य-
मिन्दो कलेव ववृधे सितपक्षगन्व ॥१८॥

म्लेच्छः स गुर्ज्जरधर आशु तदोपसृत्य,
तद्द्वारमेव सवनुक उपासताद ।
वृत्तं तदेतदखिलं सुतजन्मनरच,
श्रुत्वा परं स्वहृदि विस्मयमाजगाम ॥१९॥

सम्प्रैषयत् सचिव उष्ट्रचरेण सार्धं,
पत्रं विलिख्य विधिवद् हरिकृष्णदास ।
पीपाडमेत्य तु स औष्ट्रिक आशु पत्र,
तत्प्राददात् प्रकथयन्नृपजन्मवृत्तम् ॥२०॥

मन्त्रीश्वरस्तदिह केसरिसिंहनामा,
भाटीकुलस्य च मणी रघुनाथसिंह ।
श्रुत्वा परां मुदमितौ ददतुश्च तस्मै,
द्रव्याणि चारुवसनानि च भूषणानि ॥२१॥

श्रुत्वा बहादुरनवाबवरो नृपस्य,
पुत्रोद्भवं प्रमुदितोऽतितरां बभूव ।
प्रादात् सुवर्णरचिताश्च शतार्द्धमुद्रा
वार्ताहराय वसनानि च रावबार ॥२२॥

कृत्वा प्रयाणमगमत्त्वरया नवाब,
गेमान्सिगावरसरस्तटमावनस्य[1] ।
आसीच्च चापिरिह[2] योधपुरे तदानीं,
सोनङ्गसिंह इति विट्ठलदाससूनुः ॥२३॥

---

१ गेमावनजी का तालाव । २. चौपासन ।

म्लेच्छस्तमुत्सुकतरं रणसंगमाय,
श्रुत्वेत्युवाच रघुनाथमुखान् भटांस्तान् ।
योऽस्माभिरत्र सह सन्धिरकारि सर्वैः,
सोनङ्गसिहकमृते न स सार्थकः स्यात् ॥२४॥

तस्माद्धि त द्रुततरं खलु मत्समक्ष-
मानीय साधयत मे सह तेन सन्धिम् ।
श्रुत्वेति ते जगदुरेनमहो ! क्षमस्व,
नाऽस्मद् मनागपि पृथक् स[1] महानुभाव ॥२५॥

स स्माऽऽह तान्ननु स चेन्न पृथग् भवद्भ्यः,
का हानिरस्ति पुरतस्तदुपागमस्य ? ।
अस्त्वेवमित्यमु[2]मुदीर्य भटास्तमेत्य,[3]
प्रोचुः समग्रमपि नाम वहादुरोक्तम् ॥२६॥

श्रुत्वाऽथ तानिति जगाद भटान् स वीरः,
सन्धि न जातु यवनेन समं करिष्ये ।
कुर्यात सन्धिमथ तद्वशगं स्वदेशं,
यूय भटा ! अयमहं सह तेन योत्स्ये ॥२७॥

भाटी रघुस्तु[4] तमुवाच शृणु प्रवीर !
नैता मतिं मतिमता सुमता वदन्ति ।
युद्धं हि सत्यवसरे परिकल्पनीयं,
सम्प्रत्ययार्थकलहं कुरु नैव तस्मात् ॥२८॥

---

१ स सोनङ्गसिह ।
२ अमु वहादुरखानवाबम् ।
३ त सोनङ्गसिहम् ।
४ रघुनाथसिंह ।

म्लेच्छो निशम्य तव नाम चमत्कृतोऽस्ति,
नो त्वामृते कमपि मन्यत एष मन्त्रे ।
युद्धेऽधुना खलु कृते क्षतिरेव यस्माद्,
भर्तारमर्दति कुभृत्यकृतोऽपराधः ॥२९॥

तत्र त्वमेहि भटवर्य[1] हठो न कुर्या
जाते नृपालतनये क्षितिरस्मदीया ।
चाँपैर्निशम्य पुनराह मयि प्रयाते,
चेन्नोत्थितो भवति तर्हि मया स वध्य ॥३०॥

इत्थं निशम्य समचिन्ति तदेति सर्वै-
स्तस्योत्थितिर्मदभृतो नहि सघटेत ।
प्राक् त प्रपद्य बहुधैव महत्त्वमस्य,
वचमस्तदाशयमथ प्रथम प्रतीम ॥३१॥

गत्वा बहादुरमथोचुरिमे महस्वि-
न्नासीत् पुरा किल बलु[1] इति वीरवर्य ।
तस्यैव पौत्र इति न [2]प्रभुरप्यथाऽस्मै,
प्रोत्थाय मानमददादुपसृत्य दूरात् ॥३२॥

श्रुत्वेत्थमाह स बहादुरखाँनवाब-
श्चेन्मानितो नृपतिना सुभट. पुरा स' ।
भोस्तर्ह्यहं हि यशवन्तनृपानुजोऽस्मि,[2]
प्रोत्थानपूर्वकमहं तमिहाऽऽदरिष्ये ॥३३॥

बुद्ध्वा तदाशयमथैत्य[3] यथावदुक्त्वा,
ते त[4] सुगृह्य ययुराशु बहादुर तम् ।
प्राक् तेऽभिगम्य किल त[4] कथयाम्बभूवु,
प्राग्द्वार्युपागत इहेति स[5] संप्रतीति ॥३४॥

---

१ बल्लूजी चाँपावत इतिनामा । २ स्वामी यशवन्तमिह इत्यर्थ ।
३ तस्य बहादुरखानस्य आशयम् ४ चाँपावतवीरम् ।
५ बहादुरम् । ६. चाँपावत ।

विश्रम्य किंचिदपि चाँपिवरः प्रयत्ना-
च्चर्मासिवर्मधरपञ्चशतप्रवीरैः ।
प्राग्द्वार एत्य च ससार समुन्नतासः,
क्ष्मां कम्पयन् क्रमगतः[1] किल केसरीव ॥३५॥

अन्तःप्रविष्टमभिवीक्ष्य वहादुरस्तं
प्रोत्थाय सम्मुखमुपेत्य ननाम शीर्ष्णा ।
वीरो मुखाऽऽनतियुताऽऽदरदर्शनेन,
दृष्ट्वा तमासनमथार्धमवाप्य तस्थौ ॥३६॥

म्लेच्छोऽर्धमासनमधिष्ठितमेक्ष्य वीर,
भूत्वा पृथक् सनियमं स्थितवान् स्वयं स ।
अन्ये भटास्तमभिनम्य[2] पुरोऽभितष्ठु,
सच्चामरेण तमवीजयदेत्य भृत्यः ॥३७॥

श्मश्रु प्रमर्द्य तु करेण समत्सरः स,
म्लेच्छं तमाह यवनाधिपतेर्निदेशात् ।
द्वाविंशतिप्रमितवीरनवावयूनः
प्राप्य त्वमत्र मरुदेशमुपागतोऽसि ॥३८॥

सन्धिं विधाय सुभटैस्तु धरा प्रदत्ता,
सम्यक्कृतं किमपि तद्विषये ब्रुवे नो ।
एकैकतोऽधिकतरा यवनास्त्वदीया
ज्ञास्यन्ति किं मरुभुवि प्रभटोऽस्ति नो वा? ॥३९॥

तस्माद् रणाङ्गणमुपःसमये करीन्द्र-
मारुह्य सैन्यनिकरैः सममेहि धीमन्! ।
स्थित्वा सुदूरमपि कौतुकतः प्रपश्ये,
कण्डूतिभाण्ड-भुजदण्डकृतासिघातम् ॥४०॥

---

१ क्रमगतः पादन्यासात् ।    २ वहादुरम् ।

श्रुत्वेति तस्य मनुदीरितमुग्रवाक्यं,
इमश्रूद्गमं च समवेक्ष्य नवाबवर्यः ।
प्राह क्षमस्व रणवीर! बलूकुलोत्थं,
जानेऽहमुद्भवनरं तरलां निधिं त्वाम् ॥४१॥

किं शौर्यमन्यमिह वच्मि भवत्कुलस्यै-
तज्जितत्वयाऽल्पबलया न मृषा ब्रवीमि ।
एवं स्तुतोऽथ यवनेन मुरां प्रपीतो-
त्थायाऽनवेक्ष्य यवनं स बहिर्जगाम ॥४२॥

म्लेच्छ मुमुत्थितनपामनुपेक्ष्य वीरः,
स प्रोद्धतो बहिरगात् कुलजैः सनैः ।
स्वाम्याज्ञयाऽथ पुरुषस्तमुपेत्य कश्चि-
द्वाक्यं जगाद वसनानि गृहाण वीर !॥४३॥

स प्राह कोऽस्ति वसनानि ददाति नो यो,
नाङ्गीकरोमि किल जात्वपि रत्नपुञ्जान् ।
नूनं यशोधरसुतस्तु यदा कृपार्द्रं,
वासं प्रदास्यति तदा शिरसा ग्रहीष्ये ॥४४ ॥

प्रोच्येति तं तुरगवर्यमथाऽधिरुह्य,
स्वीयैर्जनैर्नटपुरं स जगाम वीरः ।
अन्ये भटा यवनवर्यमथाऽभिनन्द्य,
सन्धिं प्रचक्रुरथ ते वसनान्यगृह्णन् ॥४५॥

ताहारवेगमवलोक्य नवाबवर्यं,
प्रीत्याऽददात्तदनु योधगुणाधिकारम् ।
क्षत्रानुवाच च भटा ! अजनस्तदीयो
गृह्णीध्वमेनमिह चाऽऽत्मन आनुरूप्यम् ॥४६॥

श्रुत्वा तदुक्तमिति ते सुभटास्तदानीं,
तस्याधिपत्यमभिगृह्य नवाबमूचुः ।

एषोऽस्मदीय इह तिष्ठतु यावदैवयं,
दास्यामहे नियमितं च यथावदस्मै ॥४७॥

इत्थं निशम्य स नवाबवरोऽप्यवोच-
ज्जात सुतो नरपतेरिति यूयमेव ।
दिल्लीश्वरं समधिगम्य मयैव सार्धं,
राज्याधिकारमलमाप्स्यथ[1] तत्प्रदत्तम् ॥४८॥

सर्वेऽपि पथ्यमिति तथ्यवचो निशम्य,
तेनैव सार्धमभवन् प्रतिगन्तुकामाः ।
तत्क्षत्रसार्थमभिपद्य तहारवेग,
सार्धं मुगल्लकुलजैः पुरमभ्यगात् स ॥४९॥

स्वीयप्रसादवशगं हि तहारवेगं
प्रस्थाप्य वै तदनु योधपुरे ससैन्यम् ।
नव्वाबकोऽन्यनिजकार्यरतः स तस्थौ,
राज्यं तु तत्र कृतवान् किल रामभाटी ॥५०॥

दृष्ट्वा मुगल्लमथ कोन्नकबेगसंज्ञं,
वाक्यं जगाद स विबोध्य नवाबवर्यः ।
वप्रं शिवायनमुपेहि[2] समं मुगल्लैः,
सार्धं ज्वलज्ज्वलनयन्त्रधरैः[3] प्रवीरैः ॥५१॥

वप्रे निधाय परितोऽनलयन्त्रगोलान्,
भृत्वाऽऽज्यधान्यनिचयं वस तत्र धीर ।
नत्वा नवाबमथ सोऽप्यनुगैर्मुगल्लै-
र्गत्वा शिवायनगढं रभसादतिष्ठत्[4] ॥५२॥

---

१ अलं पर्याप्तम् ।  २. सिवानेति प्रसिद्धम् ।
३ तोपधारिभिः ।  ४ वेगात् ।

कस्मैचिदेव यवनाय स सोज्भत[1] च
कस्मैचिदेव जयतारणक पुरं च ।
दत्त्वा बहादुरनवाबवरो मरुक्ष्मा-
मौरङ्गजेबवशगामभितश्चकार ॥५३॥

आहूय मन्त्रिणमथाऽपि भटाश्च तास्तान्,
भाटीरघु [2] स मतिमानिति सञ्जगाद ।
सोनगसिह इह तिष्ठतु वै सरामः[3]
स्वीयैस्तु चाँपिभिरल विहतारिकाम· ॥५४॥

सोऽह मरुक्षितिभवैं सुभटैस्तु साक
सन्मन्त्रिणा सह च केसरिसिंहकेन ।
सार्ध बहादुरनवाबवरेण गत्वा
विज्ञप्तिमाशु यवनेशपुर करिष्ये ॥५५॥

क्षत्रै सम त्वथ बहादुरखानवाब,
कृत्वा प्रयाणमजमेरपुर जगाम ।
स्वेश प्रणम्य वदति स्म निजानुभूत
विज्ञप्तिमप्यकृत सङ्गभृता[4] भटानाम् ॥५६॥

कृत्वा श्रुत[5] सह च तैरजमेरवप्राद्,
दिल्लीपुरीं स यवनाधिपतिर्जगाम ।
तावद् यशोधरभटा ससुते च राज्यौ,
दिल्लीपुरीं प्रविविशुर्हृदि शङ्कमाना· ॥५७॥

तास्तान् स[6] भूपसुभटान् यमुनोपकूले,
बाह्ये स्वकीयपुरत·[7] प्रददौ निवासम् ।

---

१ मोजतपुरम् ।                    २ रघुनाथसिह ।
३ रामसिह भाटीत्यनेन सह वर्तमान ।
४ सहागतानाम् ।                    ५ श्रुत कृत्वा श्रुत्वेत्यर्थ ।
६ सम्राट् ।    ७ स्वकीय पुर दिल्ली तत बाह्ये बहिर्वर्तमाने यमु
पकूले यमुनातटसमीपे ।

म्लेच्छेश्वराय पिशुनस्तु तदेन्द्रसिंहो
विज्ञापनं खलु चकार परं विनम्र. ।।५८।।

स्वामिन्[1] सुभूरि धनमस्ति नृपस्य[1] तस्माद्
राध्यौ निरुन्धि ससुते अनु[2] मन्त्रिवर्यम् ।
श्रुत्वेत्यपृच्छदथ गुर्जधर तमीशो
भूपालबालजननं स जगाद चैवम् ।।५६।।

म्लेच्छाधिनाथ[1] नरुवंशपते. कुमार्या
जाते प्रसूतिसमये नृपपट्टराज्ञी ।
चिन्तातुरा हृदि चिचिन्त पर सुतोऽस्या
नूनं भविष्यति समग्रमरस्थलेश. ।।६०।।

इत्थ नृपाग्रमहिषी मनसि प्रकर्षा-
च्छोकाकुला क्षणमुदश्रु बभूव यावत् ।
तामाह तावदथ वागशरीरिणी खे,
पुत्रस्तवैव भविता भुवि राजराजः ।।६१।।

प्रादुर्बभूव तनयो निशि पट्टराज्या.,
प्रोच्चैः क्षितौ च दिवि दुन्दुभयो विनेदुः ।
वृत्तान्त एष निखिलस्तु मयानुभूत',
किंस्वित् सुरप्रवर एष न मानवोऽयम् ।।६२।।

श्रुत्वा तदाऽद्भुलवहावमयाभिमन्त्र्य,
म्लेच्छेश्वरस्तु तमपृच्छदथाह सोऽपि ।
मात्रा सहैव हि तमद्य निरुन्धि वप्रे,
भङ्क्त्वा सुरालयवरान् कुरु मस्जिदाश्च ।।६३।।

---

१ स्वर्गतस्य राज्ञो यशवन्तसिंहस्येत्यर्थ. ।

२ अनु पश्चाद् मन्त्रिवर्यं केसरिसिंहकायस्थमित्यर्थ ।

गृह्णीष्व भूमिवलयेऽपि च हिन्दुजाते[1]
प्रत्यब्दमेव हि कर जजियाभिधानम्[2] ।
मस्जित्सु दापय च वाँगिमतिप्रकर्षात्[3]
तद्धर्म एव विनशिष्यति यत्र तत्र ॥६४॥

धर्मे गते सति सुरा अपि हीनसत्त्वा,
शक्ष्यन्ति नो किमपि कर्तुमिहाप्रियं न ।
इत्थं तदाब्दुलवहावबचो निशम्य,
म्लेच्छेश्वरो हितममन्यत तद्विमृश्य ॥६५॥

आज्ञाप्य भूमिवलये यवनास्तथैव,
दिल्लीश्वरो नृपभटानिति सजगाद ।
बालाविमौ तदधुनाऽत्र सह प्रसूभ्या-
मातिष्ठतां चिरमदूरसलेमवप्रे ॥६६॥

भूमिं विभज्य निखिलामपि व प्रदास्ये,
गृह्णीत यूयमपि मा भजतेह नित्यम् ।
प्रोढौ यदा किल भविष्यत एवमेतौ,
क्षोणीं ग्रहीष्यत इत स्वयमेव नूनम् ॥६७॥

तेऽप्यूचिरे नृपभटा हि मिथोऽभिमन्त्र्य,
म्लेच्छेन्द्र[1] योधपुरमेव समर्पयाभ्याम् ।
राज्यौ च तत्र ससुतं वसतां सदैव,
तन्न समाज्ञपय यत् स्वपुरं व्रजाम ॥६८॥

दिल्लीश्वरेण बहुधापि विलोभितैस्तै,
सर्वै पृथक् पृथगपि प्रतिवासर वै ।

---

१ पञ्चम्यन्तमिदम् । हिन्दूजनेभ्य इत्यर्थ । २. जजियानाम करम् ।
३ वाँगिरिति ईश्वर प्रति कृत आर्तनादविशेषो मौहम्मदानाम् ।

नाङ्गीकृतं तदुदितं हि यदा तदा स
स्वान्ते विमृश्य किल केसरिसिंहमाह[१] ॥६६॥

भो भूमिपालयशवन्तकमन्त्रिवर्य!
त्वद्धस्तग सुबहुशो धनसचयोऽभूत् ।
तं सर्वमेव सुगणय्य समर्पयेमें,
त्वा मन्त्रिमुख्यमिह सप्रति सविधास्ये ॥७०॥

वद्ध्वा कराञ्जलिपुटं विनयात् स धीरो
भूत्वा व्यजिज्ञपदमु यदिति प्रसिद्धम् ।
श्रीमन्! नृपेण यदुपार्जितमत्र तत्तद्,
दत्त्वा भटा सुबहुश परिर्वाधता वँ ॥७१॥

दातु हि वोऽर्थनिचयो नहि किंचिदस्ति,
स्व स्वामिनं च यशवन्तमृते न कुर्याम् ।
नाथ विसृज्य यतते खलु यो निजार्थ,
भस्त्रेव स श्वसिति मृत्युपथ गत सन् ॥७२॥

श्रुत्वेति तन्निगदित यवनाधिनाथ
आज्ञापयत् सरुडमु[२] सचिव रुणद्धु ।
लब्ध्वा निदेशमथ भूमिपतेस्तदानी,
वप्रे निरुध्य पुरुषै परिवारित स ॥७३॥

लब्ध्वान्तर तु सचिवप्रवरे निरुद्धे,
म्लेच्छेन्द्रमिन्द्रनरपोऽथ विनम्र आह ।
मह्य प्रदेहि नृप! योधपुरीयराज्य,
तत् प्राप्य तत्र यवनत्वमह धरिष्ये ॥७४॥

श्रुत्वा समार्पयत योधपुर स तस्मै,
भूपालवीरनिचयानिति तानुवाच ।

---

१ कायस्थजातीयम् ।        २ सरट् क्रुद्ध ।

राज्याविहैव वसता ससुते सलेम-
वप्रेऽथ मा भजत यूयमिहैव नित्यम् ।।७५।।

कारागृहेऽपि यवनेन्द्रचिकीर्षितं स[1]
श्रुत्वा विमृश्य विधिनानशनं गृहीत्वा ।
नारायणेति पदमेव जपंस्तु मन्त्री,
त्यक्त्वा स्वदेहमिह वै दिवमारुरोह ।।७६।।

94695

म्लेच्छेश्वरो मृतममात्यवरं विदित्वाऽ-
नुज्ञा ददौ नृपभटेभ्य इम[2] प्रदत्त ।
प्रादुश्च राजपुरुषा शवमाशु तस्य,
तेऽग्नौ च त समदहन् हि हरिं स्मरन्तः ।।७७।।

सस्कृत्य तेऽपि तमथाश्वभिमन्त्र्य केचि-
न्मन्त्र प्रचक्रुरुपसि क्षितिपालभृत्या ।
वीरस्तु तेषु सुरतानमुत सुवृद्धो
भाटी सुमन्त्रनिपुणो रघुनाथसिंह ।।७८।।

यौधि तु[3] युद्धनिपुण सुनिरीक्ष्य सम्यग्,
वाक्य जगाद् मतिमानृणछोडदासम् ।
म्लेच्छेश्वरः शिशुनृप न सम जनन्याऽ-
नुज्ञास्यति ह्यहह[4] । नेतुमितः प्रदुष्टः।।७९।।युग्मम्।।

आवामिहैव कतिभिश्चन योधवर्य्यै,[5]
स्थित्वा वियुध्य यवनैर्यवनेशमुक्तै ।
यास्याव एव दिवमर्कपथेन नूनं,
तन्वः समुज्ज्वलयशः क्षितिमण्डलेऽस्मिन् ।।८०।।

---

१ केसरिसिह ।  २ इम शवमित्युत्तरार्धतो ज्ञेयम् ।
३ जोधावशेषम् ।  ४ अहहेति दु खसूचकम् ।
५ विनाऽपि सह प्रयोग सहयोगे तृतीया'वृद्धोयूना' इति ज्ञापकात् । एवमग्रेऽपि ।

अस्मान्निरुध्य परितस्तु भवन्निदेशा-
चछश्वत् पुराद् बहिरिमे नियताः सुयत्ता[1] ।
तिष्ठन्त्यशङ्कमभय समदा इदानीं,
नून सुवीरमुगलाः किल साग्नियन्त्रा ॥८६॥

स्वान्ते चिचिन्त स भटैर्गदित निशम्य,
चेद् यान्ति यान्तु मम किं करणीयमेभिः ।
न्यूना भवन्ति यदि मे वरमीप्सित स्यात्,
सर्वे प्रयान्त्ववसरे न निवारणीया ॥८७॥

ध्यात्वेत्युवाच[2] ससुते इह तिष्ठता वै,
राज्यौ तु यूयमधुनैव गृहाणि यात ।
ते तन्निदेशमिममाप्य कुटुम्बवर्गं,
भृत्यै सम सपदि देशमनु व्यमुञ्चन् ॥८८॥

प्रस्थापनाय यवनाधिपतेस्तु पत्र,
लब्ध्वा निदेशमथ मोदभरेण युक्ता ।
स्व स्व कलत्रमनुयाप्य च भृत्यभारा-
स्ते प्रस्थिता उषसि साधितमार्गयत्ना ॥८९॥

तस्मिन् क्षणेऽम्रियत तत्र नरूमुताया
पुत्रो य आस्त दलथम्भननामधेय ।
म्लेच्छेश्वरोऽपि मुदमाप मृत निशम्य
चक्रे[3] शिशोरपि च तस्य तदाऽन्त्यकृत्यम् ॥९०॥

चाँदेमुंहोकमभटस्य सुता वयस्या,[4]
तत्राऽऽस्त बालनृपते किल ता समर्प्य ।

---

१ भवन्निदेशात् नियता नियुक्ता सुयत्ता सावधाना ।
२ स म्लेच्छाधिप इति कर्तृपद पूर्वश्लोकादुन्नेयम् ।
३. चक्रे इत्यमिति कर्मणि रूपम् । क्षत्रैरिति कर्तृपदमध्याहार्यम् ।
४ बालनृपस्य अजितसिंहस्य वयस्या वयसा तुल्या ।

धात्र्यै तदीयदयिता[1] मुदिता वघेली,
जग्राह यादवसुतातनयं[2] स्वयं सा ॥६१॥

इत्थं सुगृह्य नरपालसुतं वघेली,
सर्वैरलक्ष्यमथ देशमुपाजगम ।
खीचीति-विश्रुतपदोऽथ मुकुन्ददास ,
सार्धं तया सुदृढरक्षितया[3] प्रतस्थे ॥६२॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये षष्ठ सर्ग
समाप्त ।

/

१. तदीया अर्थात् चादावतमुहकमसिहस्य दयिता पत्नी वघेली वघेल गोत्रजातत्वाद् वघेलीति प्रसिद्धेत्यर्थ । २ बालनृपतिमजितमित्यर्थ ।
३ सुदृढ रक्षति तच्छील सुदृढरक्षी तद्भावस्तत्ता तया ।

# सप्तमः सर्गः

गोप्या निजादपि निगूह्य सुता सुतत्वे,
कस्यापि यादवसुता च नरुसुता च ।
दिल्लीपुरं त्रिशतसख्यभटैः समं स्वै
राज्यौ मरुस्थलपतेरधितिष्ठतः स्म ॥१॥

क्षत्राश्च ते सुबहुशः सुनिगूढबाल-
भूपेन सार्धमपहानि[1] गृहाण्यभीयु ।
प्राप्ता[2] शिशुक्षितिपतिर्निजदेशमेवे-
दानीमिति प्रमुदिता पथि सनिगूढाः ॥२॥

चाँदिर्मुहौकमसुतोऽथ हरीन्द्रनामा-
वीरो विपक्षबलजित् सुगुणैकधामा ।
बालेन भूमिपतिना निजया च मात्राऽ-
गात् खीचिना सह मुकुन्दभटेन गेहम् ॥३॥

वीरो हरीन्द्र उपगम्य पर बलूँदा-
सज्ञ पुर तु कतिचिच्च दिनान्युषित्वा ।
शीघ्रं विमृश्य मनसाऽथ मुकुन्ददास,
खीचीमुवाच रहसीति सुमन्त्रविज्ञ. ॥४॥

अस्मन्निवासनगरान्निवसन्त्यदूरे,
म्लेच्छा पुरीह *जयतारणसञ्ज्ञिकायाम्* ।
सन्त्येवमेव नगरे किल मेडताख्ये,
नून त्रियोजनमिते मुगला सुयत्ता ॥५॥

पृष्ठेऽप्यदूरत इत. खलु विल्ववाटे,[3]
म्लेच्छा वसन्ति बहव किल मोज्भतस्था[4] ।

---

१ अपगता हानिर्यत्र कर्मणि तत्तथा । २ प्राप्स्यति ।
३ 'वीलाडा' इति प्रसिद्धे । ४. 'सोजत' निवासिन ।

युक्तं न वासनमितोऽत्र नृपाजितस्य,
याहि त्वमेनमुपगृह्य विदूरमेव ॥६॥
दूरेऽर्बुदाद्रिनिकटे किल देवडाना,
राज्यं यदस्ति वस तत्र विभीतिशङ्कः ।
इत्थं निशम्य मतिमान् स मुकुन्ददास
आदाय बालनृपतिं तमलक्षितोऽभूत्॥७॥युग्मम्।

राज्यौ भटाश्च किल तत्र[1] तु योद्धुकामा
एकैकशोऽधिकतरा यशवन्तभृत्या ।
मार्गं निरुध्य परितो यवनेशभृत्यै
रुद्धाः स्थितास्तदनुमत्युपलब्धिकामा[2] ॥८॥

राज्यौ च ते[3] न ससुते हि सलेमवप्रे,
तेनोदिता अपि निवासयितुं स्वयकार्षुः ।
म्लेच्छाधिपोऽपि पुरपालमथोपहूय,[4]
सीदीपुलादमिति वाक्यमुवाच भृत्यम् ॥९॥

अस्मन्महाज्वलनयन्त्रवरैश्च सर्व-
र्योधैस्तथा ज्वलनयन्त्रधरैः सहायः ।
गत्वा त्वमानय हठात् ससुते हि राज्यौ,
यत्नान्निरुन्धि च निवास्य सलेमवप्रे ॥१०॥

लब्ध्वा निदेशमिति भूमिपतेः स मीदी-
पौलादखा यवनवीरवरैरुपेत्य ।
सवेष्ट्य सैन्यनिचयैरभितोऽभ्युवाच,
मत्सार्थगे कुरुत सात्मज-राजपत्न्यौ ॥११॥
एतन्निशम्य किल तस्य वचोऽतिदुष्टं,
युद्धैकवीर ऋणछोड इति प्रसिद्धः ।

---

१ तत्र दिल्लीपरिसरे । २ तस्य औरंगजेबस्य या अनुमतिः वालनृपसहितयोः राज्योर्देशगमनसंबन्धिनी अनुज्ञा तदुपलब्धिकामाः तत्प्राप्तिमिच्छव ।
३ ते यशवन्तभृत्या तेन औरङ्गजेबेन उदिता कथिता अपि ससुते राज्यौ सलेमकोटे निवासयितुं न स्वीचक्रुः । ४ समीपमाहूयेत्यर्थः ।

क्रुद्धोऽभ्युवाच सहसोद्यतशस्त्रहस्त ,
सग्रामजिन्निखिलशस्त्रभृता प्रशस्त ।।१२।।

पौलाद[1] याहि वद चेत्यधुना भविष्य-
न्त्यत्राऽधवा [1] सुबहुशस्त्वरित यवन्य. ।
राज्यौ निरीक्षितुमपीह नु क क्षमेत,
नेतु तु दूरमिति किं प्रकरोषि दर्पम् ।।१३।।

पौलाद एप किल तद्वचन निशम्य,
सेना निजा तदभितोऽपि च सनिधाय ।
स्वस्वामिने स्वयमजिज्ञपदेत्य तत्तत्,
सर्व हि बालनरपालभटैर्यदुक्तम् ।।१४।।

म्लेच्छेश्वरस्तदवगम्य तु खोजमीर,
भृत्यं तथा मरविलदनवाबमाह ।
युद्धाय यान्तु मम भृत्यवरास्तु ये स्यु ,
सर्वेऽपि तेऽत्र यशवन्तभटान् विजेतुम् ।।१५।।

अद्याभियान्तु मुगला स्वबलाभिगुप्ता
निर्यान्तु मैयदभटा रणकोविदाश्च ।
क्रोधोद्धता विविधशस्त्रधरा पठाना ,
शेखाश्च युद्धनिपुणा. प्रतियान्त्वशेषा ।।१६।।

श्रुत्वाऽथ तानि यवनाधिपतेर्वचासि,
क्रोधाभिभूतमनसो हि नवाबवर्या ।
अभ्याययु सुबहुशो यमुनोपकूल,
यत्र स्म सन्ति यशवन्तनृपस्य भृत्या ।।१७।।

म्लेच्छास्तत प्रथममेव शरानवर्ष-
न्नाशीविषानिव विशेषविषान् सुतीक्ष्णान् ।

---

१ विधवा ।

सरक्तकूर्चवदनानपि दंशितास्ता-
नाचक्रमुर्नृपभटा· प्लवगानिवर्क्षाः ॥१८॥

राज्यौ च ते यवनसैन्यमुपागतं तं,
दृष्ट्वा तदारुरुहतुस्त्वरया तुरङ्गौ ।
आदाय चर्म करवालमथाभिपत्य,
योद्धुं परैः सममहो उपचक्रमाते[1] ॥१६॥

अष्टौ निहत्य यवनान् समरोत्सुके ते,
तद्वैरिशस्त्रपरिघातविदीर्णगात्रे ।
[2]स्वीयैः प्रवाह्य नृवपुर्यमुनाम्बुतीर्थेऽ-
प्यालिङ्गिता स्वपतिना दिवि दिव्यमूर्त्या ॥२०॥

भाटीभटैरभिमत सुरतारणमूनु',
प्रोद्यत्कृपाणककरो रघुनाथसिंह ।
आरुह्य वाजिनमथाभ्यपतन्महस्वी,
निघ्नन्नरीन् स्वपुर आपततस्तरस्वी ॥२१॥

य य प्रकल्पयति[3] त तमुपेत्य सद्य-
श्छित्वाऽन्यमन्यमभिगच्छति सोऽभिनद्य ।
तावन्नवाववर एव तुराबखान,
सैन्यैरुपैत् सुबहु युद्धजयोढमान[4] ॥२२॥

विव्याध पञ्चभिरमुं विशिखैर्बलीया-
स्तावच्छिरोऽच्छिनदुपेत्य [5]रघुर्गरीयान् ।
तेनाशु नाशितमुदीक्ष्य तुराबखान,
[6]क्रुद्धोऽभ्यगात्तु रघुनाथभटाभिधानम् ॥२३॥

---

१ योद्ध उपचक्रमाते प्रारब्धे । २ स्वपक्षीयैः क्षत्रैः, न तु शत्रुपक्षीयैरिति भाव
३ तर्कयति मारणायेति शेष । ४ बहूना सग्रामाणा जयेन प्राप्तप्रतिष्ठ ।
५ रघुनाथसिंह । ६ एतत्पदमग्रिमश्लोकस्थेन महमूदखान इति कर्तृपदेन सबध्यते ।

सार्धं पठाननिकरैर्महमूदखानो
नव्वाबवर्य उपगीतपवित्रकीर्ति ।
तीक्ष्णैस्तुदन्निजशरैर्बहुशोऽभिगर्ह-
न्नभ्याजुहाव रघुनाथभटाभिधानम्॥२४॥युग्मम्।

तं वीक्ष्य दूरत उपेतपठानवीरान्,
निघ्नन् भयङ्कररणे विनदन् स भाटी ।
यो यो निहन्तुमुपयाति निहत्य त त,
यावत् समेति महमूदनवाबवर्यम् ॥२५॥

तावत् स्वयं समभिगम्य स[1] एव तीक्ष्णान्,
बाणान् ववर्ष निशितान् परिकुप्य यान् यान् ।
तांस्तान् स[2] तु प्रचलवामकरस्थितेन,
सच्चर्मणैव सहसाऽक्षिपदाशु भूमौ॥२६॥युग्मम्।

तद्वारणं समभिपद्य महोग्रशक्त्या,[3]
भूमौ निपात्य तमिम त्वरया जघान ।
पार्श्वासनस्थितमुदाफरखानवाब,
चूर्णीचकार च भट सुभट स एव ॥२७॥

नव्वाबवर्यमथ वीक्ष्य हत निवेश,
त्यक्त्वा विदूरमगमस्तु तदीयसैन्या ।
दूरान्निरीक्ष्य निहतं महमूदखानं,
क्रोधाभिभूतहृदयोऽभ्यगमत्तदान्यः ॥२८॥

सैन्यैः सम मरविलदनवाववर्य,
स्यात. परं मुगलवीरवरेषु धुर्य ।

---

१ महमूदनवाव । २ भाटीवीर. ।
३. ग्रस्त्रविशेषेण ।

वीरः स तं प्रथममाजुहुवे[1] गजस्थं,
तेनाशुगेन[2] स हतोऽतिबलेन भाले।।२६।।युग्मम्।

सोऽपि प्रहृत्य विशिखैरभिपद्य सद्यः,
क्रुद्धोऽभिगृह्य च ततो यमदंष्ट्रिकास्त्रम्[3] ।
दत्त्वा हयोपरि पदं तदिभे[4] चुकूर्दे,
तत्पृष्ठगश्च कुपितस्तमिदं बभाषे ।।३०।।

एषोऽहमस्मि रघुनाथ इति प्रसिद्धः,
प्रोच्येत्यहन् दृढतर यमदंष्ट्रया तम् ।
विव्याध सोऽपि यमदंष्ट्रिकयोदरेऽमु,
सार्धं तदीयसुभटा विविधुश्च वाणैः ।।३१।।

वीरस्तथापि न गत प्रहरन् विराम,
मत्वा त्वभेद्यकवच तममुञ्चदन्ते ।
हत्वा गज च गजप निकटस्थमन्य,
म्लेच्छ निपात्य च पपात भुवि स्वय स ।।३२।।

[5]युध्यन् रणेऽप्युदयभानुरितीह भाटी,
विख्यातिमान् सुभटकेसरिणस्तनूज ।
हत्वा बहूनपि रिपून् यवनास्तदानीं,
म्लेच्छैर्हत स्वयमपि न्यपतद् धरायाम् ।।३३।।

भाटी च विट्ठलसुतो जगनाथनामा,
शूरो गुणैः परिलसन् खलु भूरिधामा ।
निर्मथ्य वैरिनिवहान् समरे तदानी-
मन्ते स्तुतो निजभर्टैर्दिवमारुरोह ।।३४।।

---

१ स्पर्धया आहूतवान् । 'स्पर्धायामाङ' इत्यात्मनेपदम् । २ तेन मर्गविन्ददेन स रघुनाथसिंह आशुगेन शरेण भाले हत प्रहृत इति योजना । ३ यमदंष्ट्रिका 'कटार' इति प्रसिद्ध शस्त्रविशेष । ४ तस्य सरविलदस्य इभे गजे, तदुपरीत्यर्थ । ५ युध युद्धमिच्छतीति क्यजन्तत्वाच्छतृप्रत्यय । अन्यथा युधेरात्मनेपदित्वाद् युध्यमान इति स्यात् ।

भाटी तदा गिरिधरस्तु महामहस्वी,
शूर सदैव हरिदाससुतस्तरस्वी ।
युध्यन् रणेऽरिनिचयैर्निहतो धराया,
हत्वा रिपून् स्वयमपि न्यपतत्तदानीम् ।।३५।।

बीकात्मजो हि धनराज इति प्रसिद्ध,
[1]सख्येऽरिभि शरचयै परित सुविद्ध ।
यो वै निहत्य यवनान् स्वयमेव नून,
प्राणान् व्यमुक्त रुधिरोक्षितसर्वगात्र ।।३६।।

भाणात्मजोऽपि युयुधे रणमूर्ध्नि धीरो
यो द्वारकेत्यभिधया विदित सुवीर ।
ये ये हि समुखमुपाययुरस्य तास्तान्,
भूमौ निपात्य पतित स्वयमेव पश्चात् ।।३७।।

[2]भाट्यन्वयो भगतसिंह इति प्रसिद्ध,
कल्याणदासतनयः सुनयैकसिद्ध [3] ।
[4]तेनैव सार्धमरियूथवरान्निहत्य,
तैराहत समरमूर्धनि वै पपात ।।३८।।

भाट्यन्वये नवभटा निजभर्तृहेतो-
र्भूत्वेति खण्डश इमेऽरिगणैर्वियुध्य ।
सच्चामरप्रकरवीजितदिव्यदेहा,
प्रापुर्दिव बहुविचित्रविमानगेहा ।।३९।।

योधान्वयी समरजिद् रणछोडदासो,
गोविन्ददासतनयो धृतचन्द्रहास,[5] ।

---

१ युद्धे । २ भाटीवशीय ।
३ सुनीतिविशारद । ४ तेनैव द्वारकादासेनै व ।
५ चन्द्रहास खड्ग ।

विख्यातकीर्तिरथ शस्त्रविधानदक्ष,
[1]प्रत्याहवाङ्गणविनिर्जितशत्रुपक्ष ॥४०॥

सत्वर्यं वाजिनमथाशु रणेऽभिपत्य,
य य रिपुं रम परिधावति तं तमेव ।
हत्वा पुर सरति वैरिपु वै सशस्त्रो
वृक्षेष्विवाऽनिलसुदीपितदाववह्नि ॥४१॥

धीर पठानतिलकस्तु नवाबवर्यो,
यशशैफखा[2] सकलशस्त्रविधानविज्ञ ।
सैन्य हत निजमवेत्य तदैव चारात्,[3]
क्रोधादुपाद्रवदथाशु ससैन्य आरात्[4] ॥४२॥

हस्तिस्थ एव विशिखैस्तमथाभिहत्य,[5]
शक्ति पुन क्षिपति सोऽपि हि यावदेत्य ।
शक्त्या निपात्य करिण विपुलोग्रया स,
निघ्नन् रिपुं भुवि निपात्य जगर्ज तावत् ॥४३॥

ज्ञात्वाऽग्रज निपतित महमूदखान-
स्तीव्रैं शरै परितुदस्तमथाद्रवत् स ।
अन्येऽपि जघ्नुरथ शस्त्रचयै समन्तात्,
स्कन्धेऽसिना प्रहरति स्म तदैव कश्चित् ॥४४॥

[6]यौधिस्तदा भवति[7] चात्मनि शस्त्रपाते,
हत्वा रिपून् कतिचनाऽपि च त[8] प्रपद्य ।
अश्वान्निपात्य यमदंष्ट्रिकया निहत्य,
तेनाऽऽहतश्च निपपात विनिर्गतान्त्र ॥४५॥

---

१ आहवाङ्गण युद्धक्षेत्रम् ।   २ एतन्नाम 'यूसुफखा' इति सभाव्यते ।
३ चारात् गुप्तपुरुषात् । ४ आरात् दूरात् । 'आराद् दूरसमीपयो ' इत्यमर ।
५ त प्रागुक्त रणछोडदासम् ।   ६ योधवश्यो रणछोडदाम ।
७ भवति विद्यमाने ।   ८. त महमूदखानम् ।

यौधिस्तु विट्ठल इति प्रथितो विहारि-
दासात्मजो विविधवैरिगणापहारी ।
निघ्नन्नरीनभिमुख पततस्तरस्वी,
तैराहतो व्यसुरथ[१] न्यपतन्मनस्वी ॥४६॥

स श्यामसिंहतनयोऽपि च रामसिंह,
शूर पराक्रमविनिर्जितवन्यसिंह ।
निघ्नन् रिपूनथ पुर पुरतश्चचार,
सख्ये हतोऽभिपतितो बहिरन्त्रभार ॥४७॥

यो माह्मसिंह इति वै विदित सुधीर,
सत्कीर्तिमांश्च जगनाथसुत. स वीर ।
नून निहत्य यवनान् सुरलोककाम,
सख्ये रराज रिपुभिर्निहतोऽभिराम· ॥४८॥

यौविर्भुवि प्रथितकीर्तिरपीह पृथ्वी-
राजोऽसिपाणिरथ वीरमदे-तनूज ।
निघ्नन् रिपून् स्वयमपि प्रविदीर्णदेह ।
सार्धं हि तैर्निपतितैर्निपपात भूमौ ॥४९॥

यौधिस्तु दीप इति केशवदासपुत्र,
सख्ये न्ययुध्यत वपु स्थितसत्तनुत्र[२] ।
यो योऽभिधावति निहत्य तु त तमेव,
भूमौ निपात्य पतितो विगतासुरेव ॥५०॥

रत्नात्मजो जगनसिंह इति प्रसिद्ध· ,
सामन्तजिद् दृढतनुश्च सुबुद्धिवृद्ध ।
म्लेच्छान् बहून् समरमूर्ध्नि निपात्य तत्र,
देवै कृतस्तुतिरगाद् भुवने परत्र ॥५१॥

---

१ विगतप्राण । २ शरीर-धृत-शोभन-कवच ।

श्रीखेतसीप्रियसुत किल भैरवाख्यो
वीरस्तथोदयहरिर्जगनाथसूनु [1] ।
श्रीलाडखानतनय खलु डूगराख्य,
श्रीपूर्णमल्ल इति तत्र च जैतमाला ॥६४।

चत्वार एव समरे समरैकवीरा,
सोत्साहमायुयुधिरे यवनैस्तदानीम् ।
हत्वा रिपूनथ तैर्निहता स्वदेहं,
हित्वा सुरेन्द्रभवन प्रययु सुधीरा ॥६५॥युग्मम्।

चाँपिस्तथा मथुरदाससुतोऽतिविज्ञ',
प्रख्यातकीर्तिरिह नाहरखानसंज्ञ ।
हत्वा रिपून् बहुतरान् समरेऽभिमानी,
तैराहत किल बभूव विमानयानी ॥६६॥

भोजान्वयी समरजिद्धरिदाससूनु,
श्रीसुन्दर सुविदित किल मण्डलेपु[2] ।
नाथात्मज प्रखरखड्गकरश्च लक्ष्मी-
दास सुगोहिलकुलोऽक्षयराजसज्ञ ॥६७॥

यो डूगरान्वयभवो जगनाथसूनु-
र्धीरोद्धत समरमूर्ध्नि च राजसिह ।
शत्रून् पृथक् पृथगिमे क्षपयन्त एव,
युद्ध्वा चिरं सुरपुरं मुदिता समीयु ॥६८॥

शोगान्वयी सुविदितो नृपभृत्यवर्यो
म्लेच्छै सम प्रयुयुधे युधि योगिदास ।
हत्वा बहून् रिपुगणान् स्वयमाहतस्तै-
र्हित्वा तनु तु रणमूर्ध्नि दिवं जगाम ॥६९॥

---

१ उदयसिंह ।
२ जनपदेष्वित्यर्थ (श्रीसुन्दर सुविदित सुन्दरेति नाम्ना प्रसिद्ध)।

कायस्थवंशविदितौ हरिरायदीपा-
भिख्यौ समं रिपुभटैर्निजभर्तृहेतो ।
सम्यग् वियुध्य कतिचिद् यवनान्निहत्य,
म्लेच्छैर्हतौ त्रिदिवमीयतुराप्तकामौ ॥७०॥

[अथ दुर्गदाम–युद्धवर्णनम्]

कर्णान्वयी सुविदित परमासकर्ण-
सूनू रणे प्रयुयुधे किल दुर्गकर्ण ।
दुर्वैरिपक्षदलनोद्यतशस्त्रहस्तः,
साग्रामिकप्रहरणप्रहृतौ[1] प्रशस्त. ॥७१॥

ये ये हि योद्‌धुमभिसमुखमाव्रजन्ति,
म्लेच्छा हि तेन निहतास्त्रिदिवं व्रजन्ति ।
निघ्नन् रिपून् समभियाति च यान् पुरस्तात्,
त्रस्ता द्रवन्ति समरादपि ते समन्तात् ॥७२॥

विद्रावित च समरे निजसैन्यमारा-[2]
च्छ्रुत्वाऽथ सैयदशिरोमणिरेव चारात् ।
अभ्याद्रवत् सकवचोऽथ गजस्थ एव-
मन्यान् विसृज्य खलु हातमखाँ तमेव[3] ॥७३॥

दुर्ग व्यविध्यदुपसृत्य शरेण चान्य,
गृह्णाति तावदवधीत्तदिभ वदान्यः[4] ।
आकृष्य तं भुवि निपात्य महोग्रशक्त्या,[5]
प्रोच्चैर्विनद्य च जघान निजोग्रशक्त्या ॥७४॥

---

१ युद्धोचितशस्त्रप्रहारे । २ दूरात् ।
३ तमेव दुग दुर्गदासमिति उत्तरेणान्वय । ४ वदान्य दानवीरो दुर्गदासं इत्यर्थ । ५. अत्र शक्तिशब्दोऽस्त्रविशेषवाची उत्तरत्र सामर्थ्यवाची ।

दृष्ट्वा हत तदनुजा' परितस्त्रयोऽन्ये,
हन्तुं समीयुरथ शस्त्रकरास्तथाऽन्ये ।
व्यक्षेप्ट तान् स सतनुत्रतनुस्तरस्वी,
भग्ना:[1] परे स्वयमय स्थितवान् मनस्वी ।।७५।।

विद्राव्य वाजिनमथापि च खोजमीर-
नव्वाबसैन्यनिचये न्यपतत् स वीर ।
हत्वाऽग्रगांश्च मुगलान् द्विपमेत्य सद्य ,
शक्त्या जघान वदने सुदृढ विनद्य ।।७६।।

दुद्राव शक्तिनिहतो हि महेभधुर्य.,
शेपा प्रदुद्रुवुरथाहववीरवर्य[2] ।
जित्वा रण हृदि निधाय तदा रमेश,
स त्वाजगाम शनकैः स्वयमात्मदेशम् ।।७७।।
(सप्तभि कुलकम्)

चाँदान्वयी जगतसिहसुत प्रवीरः,
संग्राममजिद् मुहकमो युयुधे सुधीर ।
हत्वाऽभ्यगादरिचयानथ सक्षत' स
यावत्तदैव यवनैरभिवीक्षित स ।।७८।।

पृष्ठे तदाऽद्रवदमु स नवाबवर्य,
सैन्यै. सम त्वरितमेव पठाणधुर्य ।
हामिदखाँ भुवि खुरेशकुले प्रशस्त',
ख्यातश्च बाणविदुषामिह बाणहस्त. ।।७९।।

दृष्ट्वागत मुहकमस्तु विपक्षसैन्य,
शत्रूनुपाद्रवदमुञ्चत चापि दैन्यम् ।

१. पलायिता, कर्मकर्तृत्वेनाऽकर्मकत्वात् कर्तरि क्त ।
२ युद्धवीरवर ।

नव्वावकेन युयुधे सह तावदस्य,
कश्चिच्छिरोऽच्छिनदुपेत्य तुरङ्गमस्य ॥८०॥

छिन्ने शिरस्यपि स त तुरग प्रणुद्य,
गत्वावधीत्तदिभमूर्ध्न्यसिना विनद्य ।
अभ्यर्धचन्द्रसदृशं विशिख नवाव-
स्त[1] प्रत्यमुञ्चत तदैव गजोपरिस्थ. ॥८१॥

तत्तालुरन्ध्रमुपपद्य शरो विमग्न,
सन्निर्गतः खलु विभाति हनौ विलग्न ।
विच्छिद्य तद्द्विपकर[2] स निभेद गण्ड,
चीत्कृत्य स ह्य् दसृजत् त्वरित पुरीषम् ॥८२॥

छिन्नस्तदेति तदिभस्तु रणाद् विभग्न,
सैन्या. प्रदुद्रुवुरथाप्सु[3] रविर्विमग्न. ।
साश्वः पपात समरे स विभिन्नमूर्धा
वृष्टिर्बभूव निशि चापि तदा प्रवृद्धा ॥८३॥

संबन्धिनामपि च भृत्यवरस्तु कश्चिद्-
दृष्ट्वोपगृह्य निशि दूरमुपानयत् तम्[4] ।
तेनैव चोपचरितश्च चिराद् दृढाङ्गो
भूत्वा सुखेन निजगेहमुपेयिवान् स ॥८४॥

श्रीरूपसिंह ऋणछोड़सुतः प्रवीरो,
वीराग्रडूगरसुतोऽथ पिरागदास ।
दूधेति य किल स राजसुतस्तथान्य-
श्चांपान्वयी सुविदितोऽपि तु माहसिंह ॥८५॥

---

१ त मुहकम प्रति ।
२ तस्य पूर्वोक्तस्य नवाबस्य यो द्विपस्तस्य कर शुण्डाम् ।
३. पश्चिमसमुद्रजले । ४. मुहकमम् ।

वीदान्वयौ च जगमालसुतोऽपि भोजो,
युद्ध्वा रणे पृथगिने यवनैश्च सम्यक् ।
हत्वा रिपून् स्वयमथापि च सक्षताङ्गाः,
स्व स्वं [1]निवेशनमथेयु[2]रहीनसत्त्वाः ॥८६॥

एव बहून् समरमूर्ध्नि भटैर्निपिष्टा-
नाकर्ण्य सैयदपठाणमुगल्लशेखान् ।
हस्तेन हस्तमभिघृष्य शिरो विधुन्व-
न्ना[3] ! किं बभूव यवनेश इति ह्यवोचत्॥८७॥

ये नो मता यवनवीरवराः समस्ता
युद्धोद्धता युधि नियोद्धुमिहोपयाता ।
तास्तान् पलाय्य कतिचित् कतिचिन्निपात्य,
स्वल्पैरहो नृपभटैः सुयशो हृत मे ॥८८॥

इन्द्रस्तदा[4] तमुगम्य विनम्र आह,
चेत् प्राप्नुयां भटपुर[5] भवतो नृपेन्द्र ।
हन्यां यशोनृपभटानचिराय सर्वान्,
कृत्वा च मश्जिदमयं[6] यवनो भवेयम् ॥८९॥

दत्त्वाथ योधपुरमिन्द्रनृप तमाह,
ये ये मरुक्षितितले यशवन्तभृत्याः ।
तास्ताञ्जयेति कथितः प्रहितश्च तेन,
प्रीत्यान्वितो मरुधरा स तत· प्रतस्थे ॥९०॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये सप्तम सर्ग
समाप्त ।

---

१ स्थान गृह वा । २ ईयुर्जग्मु ।
३ आ इति दु खे कोपे वा । ४ इन्द्रसिंहो राव ।
५ भटपुर योधपुरम् । ६ मश्जिदमय मश्जिदप्राय भट(योध)पुर-
मिति ज्ञेयम् ।

## अष्टम. सर्गः

देशे तदा भटवरोऽत्र तु मेडतीय ,
    ख्यात प्रतापतनय. खलु माधवीय [1] ।
दाक्षिण्यदाननिरत किल राजसिंह
    आसीत् पराक्रमविनिर्जितवन्यसिंह ॥१॥

दुष्टात्मभि कृतमुपद्रवमेष दृष्ट्वा,
    चैत्यप्रपातनदिनात् प्रभृति प्रगाढम् [2] ।
अन्नाशनत्यजनपूर्वकदुग्धमात्र-
    मासिद्धि भूमिशयनो व्रतयाचकार [3] ॥२॥

उन्मूल्य मस्जिदगण रणमूर्ध्नि सर्वान्,
    म्लेच्छान्निहत्य जयशब्दमहं धरिष्ये ।
वैर्यस्त्रपातनपरम्परयाऽथवाऽहं,
    पर्यस्तपापपटलो दिवमर्जयिष्ये ॥३॥

स्वान्ते किलैतदवधार्य सुसज्ज्य सेना,
    स्वीयैश्च बान्धवजनै. सह राजसिंह ।
सप्रस्थितो हि नगरं प्रति मेडताख्य,
    सादुल्ल इत्यधिचकार [4] हि यत्र शेख ॥४॥

स [5] प्राग् विजित्य रणमूर्ध्नि बलेन शत्रून्,
    संलब्धकीर्तिकतयोत्थितदुर्मदान्ध ।
तद्भ्रातृजश्च बहुगर्वधरो दृढाङ्गो
    वासिलमहम्मद इहाऽकृत कामचारान् ॥५॥

---

१ 'माधोदासोत' इत्युपशाखया ख्यात ।
२ सुदृढ यथा स्यात्तथा ।
३ अन्नादिभोजन-तन्निवृत्तो ' इति णिच् । सिद्धिपर्यन्त दुग्धमात्रसेवनव्रत दधारेति भाव । ४ सादुल्लाख्य-शेख । अधिकारी आसीदित्यर्थ ।
५ स शेख ।

तत्रैव कैंशविवर [1] सुभटस्तु पृथ्वी-
सिंहो नियुक्त इह वै यवनेश्वरेण ।
तिष्ठन् बभूव सह वैद्यपसत्तटाक-[2]
सौधे निर्जहि कतिभिश्चन मेड़तीयै ॥६॥

श्रुत्वा तमागतमथ प्रथम स शेख-
आहूय कैंशविमथ त्वरयाऽभिमन्त्र्य ।
आरुह्य तेन सह वाहवर स्वकीयै-
निःसृत्य तन्नगरतो बहिराजगाम ॥७॥

[3]प्रातापिरप्यथ स सातलवास-वासात्[4]
संप्रस्थितः सह भटैस्त्वरया प्रभाते ।
त्यक्त्वा स्ववामत इहस्थितमालवप्र,[5]
प्रागाज्जहाजसरसीमतिलङ्घ्य[6] चाग्रे ॥८॥

प्राग्द्वारि संस्थितमवेक्ष्य तु कैशविं स,
त्यक्त्वा तटाकमपि वामत एव राज [7] ।
तस्थौ भटैः सह सरोवर-पूर्वभागे,
शेखस्तु तस्य[8] तटपालिमुपेत्य तस्थौ ॥६॥

योधाः स्वयोः पृतनयोरुभयेऽन्तराले,
दृष्ट्वा प्रभावमिव वारिषु[9] भाद्रवृष्टे ।
चक्रु परस्परमथामुषु वारिषु[10] द्राग्,
लघ्वग्नियन्त्रमुखनिर्गतगोलवृष्टिम् ॥१०॥

---

१ केमोदासोत इति प्रसिद्ध । २ 'वेवचा' इति प्रसिद्धमरस्तदीये सौधे राजभवने.
३ प्रताप-पुत्र (गर्जासिंह) । ४ 'सातलवास' इति नामकाद्ग्रामनिवासाद् (आरह्य प्रयाण कृत्वेत्यर्थ) । ५ 'मालगढ' नामक मेडतादुर्गम् ।
६ जहाज' नाम्नी सरसी 'नाडी' ति प्रसिद्ध लघुतडागम् । ७ राजसिंह ।
८ तस्य सरोवरस्य । ६ तस्य सरोवरस्य जलेषु वा अरिषु इत्यपि ध्वन्यते ।
१० अमुषु एषु, वा इति पाद-पूरणे अरिषु शत्रुषु वारिषु इत्यपि ध्वन्यते । वारिषु वृष्टे प्रभाञ्च दृष्ट्वा इव दाऽरिषु वृष्टि चक्रुरित्युत्प्रेक्षितम् ।

सायं विमृश्य सुचिरं स तु शेख एवं,
निश्चित्य कैशविमुवाच शृणु त्वमेतत् ।
यास्याम्यहं झटिति मालनृपालवप्रं,
त्वं तु प्रविश्य नगरं परिपालयैतत् ॥११॥

प्रोच्येति त स्वयमुपेत्य स मालवप्रं,
शीघ्र न्युवास ससुखं किल शेखवर्य ।
वीरस्तु कैशविरुपेत्य पुरं स तस्मिन्,
यद् राजमन्दिरमुवास सुखेन तत्र ॥१२।

योधैर्ज्वलज्ज्वलनयन्त्रधरैः प्रसाध्य,
सनह्य सैन्यनिचयैः सह मालवप्रे ।
[1]सोऽग्न्यस्त्रवक्त्रकुहरोत्थितगोलपातान्,
रात्रि दिव किल समन्तत आववर्ष ॥१३॥

राज प्रतापतनय. स्वभटै समन्तात्,
संवेष्ट्य वप्रमिति सज्जितसैन्यसघ ।
'योद्धु मया सह स कैशविरेष्यतीति',
ज्ञाताशय प्रकृतहुंकृतिरत्र तस्थौ ॥१४॥

श्रुत्वा प्रवृत्तिमिति कैशविरेष पृथ्वी-
सिहोऽपि यत्नसहित स्वनिवेशनेऽस्थात् ।
प्राग्वत् पुर परिररक्ष दधे न दैन्यं,
वीरास्तु वप्रमभिलक्ष्य[2] पुरत प्रसत्रु ॥१५॥

वीर प्रतापतनय किल शूरसिहो
वप्र हि पृष्ठत उपेत्य स जागमाल [3] ।
निश्रेणिकल्पितपथेन तथा प्रविश्य,
व्याक्रामति स्म यवन करवालपाणि ॥१६॥

१ स राजसिंह । २ वप्र मालगड अभिलक्ष्य लक्ष्यीकृत्य ।
३ जगमालगोत्रज ।

प्रोवाच रे यवन! तिष्ठसि किं त्वमत्र,
शस्त्रं प्रगृह्य सहसैहि समुत्सुक. सन् ।
स्वास्ये स शष्पमुपधाय[१] जगाद दीनो
वत्सोऽस्मि गोर्हि भवदीयचतुर्भुजस्य[२] ।।१७।।

श्रुत्वेति दीनवचनं [३]तमपास्य दूरं,
दृष्ट्वा च तत्र विशदं नरयानमेकम् ।
यास्तत्र [४]पाण्डवसहस्रमिताश्च मुद्रा-
स्ताश्चात्मसादथ चकार स शूरसिंह ।।१८।।

चाँदिश्च बाघ इति सोऽपि मुरारिसूनु',
सत्काष्ठभित्तिमपि य पुरतो विधाय ।
तद् द्वारमेत्य च तदैव तयैव भित्त्याऽ-
धाक्षीन्निवासमिह कण्टकवह्निनाऽस्य[५] ।।१९।।

चाँपावत सुभटविट्ठलदाससूनु-
र्वीरोऽजबाह्वय उपेत्य च दक्षिणेन[६] ।
निश्रेणितोऽन्तरुपरिस्थित आचुकूर्द,
सोऽमु जिघांसुरपि दर्शितदैन्यमौज्झत् ।।२०।।

दृष्ट्वात्मसात्कृतमितो[७] नरयानमादौ,
वीरेण तेन परिपातयता स्वदृष्टिम् ।
अन्तेऽन्नकोष्ठमुपलभ्य ततः सहस्र-
मुद्राः कृता. स्ववशगा किल पश्यतोऽस्य[८] ।।२१।।

---

१ बालतृणम् । २ मेडतानगरे विराजमानस्य चतुर्भुजनाम्नो विष्णो ।
३ त शेखम् । ४. पञ्चसहस्रमुद्रा ।
५ अस्य शेखस्य (निवास अधाक्षीद्दाहेति योजना) ।
६ दक्षिणत । एनप्-प्रत्यय । ७ स्वाधीनीकृतम् ।
८ शेखस्य ।

चादिस्तु तावदुपगम्य तदन्तराले,
शोकाम्बुधौ निपतितं यवनं च दृष्ट्वा ।
मुञ्चंश्च तं तृणमुखं कृपया तदीयान्,
वीरस्तुरङ्गमवरान् निजसाच्चकार ॥२२॥

अन्येऽपि तत्र समुपेत्य भटास्तमूचु-
र्म्लेच्छ[1] त्वमुत्सृज निजास्त्रचयानिदानीम् ।
बद्ध्वा कराञ्जलिपुटं स जगाद नम्रो
मैव[1] भट[1] यदहमुन्नमितो भवद्भिः ॥२३॥

ऊचुस्तमोमिति[2] भटा पुरतो निधाय,
म्लेच्छाः समीयुरपरेऽपि तदाऽभयाप्त्यै[3] ।
निस्सृत्य ते च मुदिता अभयप्रदानाद्,
जग्मू रराज किल यत्र स राजसिंह ॥२४॥

शेख विनीय पुरत. परतापसूनो-
स्तत्पादपद्मयुगलं च ववन्दिरे ते ।
प्रातापिराह तमरे[4] ! स उपस्थितोऽहं,
य मा निहन्तुमभिवाञ्छितवान् भवान् प्राक्॥२५॥

भूत्वाऽतिनम्रतर एव च कम्पित सन्
पादौ प्रगृह्य सुतरा स जगाद शेख ।
भो राजसिंह! वरवीर! दयाम्बुराशे!,
दीने दया कुरु मयि प्रणते पुरस्तात् ॥२६॥

का शक्तिरस्ति हि मम त्वयि दीप्यमाने?,
दीपे यथा ज्वलति किं शलभस्य रोष ।

---

१ एव मा कुरुनेति शेख । अस्त्राणि मोत्सर्जयतेति भाव ।
२ ओमिति स्वीकारे ।
३ तदा ओमिति स्वीकारकाले अभयप्राप्त्यै अन्येऽपि यवना मगता इत्याशय ।
४ शेखम् ।

तस्मिन् पतेत् स यदि तर्हि स-भस्मसात्-स्यात्,
सिंहो न कोपमुपयाति शृगालशब्दैः ॥२७॥

स्वीकृत्य तद्गदितमित्यवदज्जनान् स,
एनं हि रक्षत परं वरभुक्तिपानैः ।
दत्त्वाऽधिवासयत वस्त्रगृहं तथेत्थ,
श्रुत्वा जनास्तदनुसारमकल्पयस्ते ॥२८॥

भङ्क्त्वाऽथ मश्जिदगणं निजदेवपूजां,
सोऽकारयत् पुरवरे खलु यत्र तत्र ।
म्लेच्छा स्वकूर्चभयत परितो निलीना-
स्त्रस्ताश्च गर्भमपि संमुमुचुर्यवन्य ॥२९॥

तावन्मरुस्थलवरे किल योधवप्रे,
चारैरुपेत्य कथितं हि निजानुभूतम् ।
दिल्लीपुरे यदभवद् यशवन्तसैन्य-
म्लेच्छाहवे तदनु तच्च[1] मुखे मुखेऽभूत् ॥३०॥

सोनङ्गमिह इह योधपुरे सरामः,
श्रुत्वेति ताहरमुपेत्य जगाद वाक्यम् ।
अस्मन्नरेश्वरमुपाश्रय रेऽन्यथाऽस्मा-
ज्जीवन् प्रयाहि मरुदेशवरादिदानीम् ॥३१॥

म्लेच्छान् विलुप्य विनिपात्य च कांश्चिदन्यान् ।
दत्त्वा सहायमथ[2] ताहरखानमेनम् ।
निष्कास्य भूपसुभटैर्निजभर्त्तुराज्ञा-
माघोष्य देशमखिलं स शशास सम्यक् ॥३२॥

शीघ्रं प्रयाय सुभटैस्तु सुजानसिंहो-
मेघेऽपि वर्षति जलानि तदा समन्तात् ।

---

१ तद् दिल्लीपुरीय यशवन्तभट-म्लेच्छाना युद्धवृत्त जनस्य मुखे मुखेऽभूदित्यर्थः ।
२ सहगामिन दत्त्वा ।

नि श्रेणिकल्पितपथेन बलात्प्रविश्य,
दुर्गं शिवायनमरीन् दलयन्नगृह्णात् ॥३३॥

तत्र स्थितं च मुगलं किल काचकाख्यं[1]
चेत्र निहत्य सह तस्य सहायभूतैः ।
अन्यान्नताश्च यवनीं च तदीयपत्नी,
निर्याप्य तत्र निजपक्षमवासयत् सः ॥३४॥

दिल्लीश्वरानुगवरोऽप्यजमेरवप्रे,
श्रुत्वैतदाशु च तहव्वरखानवाढः ।
सनह्य सैयदपठानमुगल्लशेखै-
रभ्येत्य पुष्करमथावहितोऽवतस्थे ॥३५॥

श्रीमेडताख्यनगरेऽपि स राजसिंहः,
सस्थाप्य तत्र निजभर्तुरथाधिपत्यम् ।
सैन्यैः समं सपदि पुष्करमभ्ययासीद्,
म्लेच्छेन योद्धुमनसा सह तेन योद्धुम् ॥३६॥

म्लेच्छस्तमागतमवेत्य तदैव चारात्,
सनह्य सैन्यमखिलं युयुधे विचारात् ।
विव्याध बाणनिकरैर्बहुधाग्नियन्त्र-
क्षिप्तैर्विदुद्रुवुरितस्तत एव केचित् ॥३७॥

वीरः[2] स एष निजसैन्यपुरस्सराश्च,
कांश्चिद् विलोक्य यवनास्त्रनिपातभग्नान् ।
सत्वरं वाजिनमुपाद्रवदस्त्रहस्तः,
स्वभ्रातृभिः सह तदा रिपुसैन्यमध्ये ॥३८॥

---

१ कोचकवेगेतिनामानम् ।
२. राजसिंह ।

वीरा पृथक् पृथगरीनभित सरन्ति,
निघ्नन्त एव पुरतश्च शरै किरन्ति ।
मुञ्चन्ति य यमुपकल्प्य[1] विकृष्य बाणं,
नून करोति स स एव दिवि प्रयाणम् ॥३६॥

दृष्ट्वा स्वसैन्यमथ तैर्निहतं विदूरा-
दभ्याद्रवन् हि यवना अपि शस्त्रपूराः[2] ।
तास्तान् सुदंशिततरानथ[3] ते प्रपद्य,
जघ्नु स्वशस्त्रनिकरैर्निशितैर्विनद्य ॥४०॥

तावन्महम्मदअलीति मत पठाणः,
कोदण्डमण्डलविमण्डिततीव्रबाण ।
अभ्याद्रवत् स समरे स्वबलैरुपेत्य,
प्रोच्चैर्जगर्ज विशिखैरपि तान्निहत्य ॥४१॥

दृष्ट्वागतं तमथ गोकुलदाससंज्ञ,
शूर प्रतापतनयोऽपि च युद्धविज्ञ ।
प्रास्फाल्य शक्तिमवधीद् हृदि तत्प्रविद्ध,
सख्ये विभाति यवन. पतितोऽन्त्रनद्ध. ॥४२॥

तद्बान्धवास्त्रय उपेत्य सहात्मपक्षै-
र्जघ्नुस्तमस्त्रनिचयै क्षपणैकलक्षैः[4] ।
सत्वर्य वाजिनमथाशु निहत्य काश्चि-
त्तैराहत स्वयमसौ न्यपतद्धरायाम् ॥४३॥

दृष्ट्वा तदीयतनयोऽपि हठीतिसंज्ञ,
स्ताताऽरिषु न्यपतदाशु तदास्त्रहस्तः ।

---

१ य य (भट) उपकल्प्य उद्दिश्येत्यर्थ ।
२ शस्त्राणि पूरयन्ति ते शस्त्रशालिन इत्यर्थ ।
३ अतिशयेन कवचितान् ।
४ क्षपण नाशनमेव एक लक्ष लक्ष्य येषा ते, तै ।

तास्तान् पृथक् पृथगुपेत्य निहत्य सर्वान्,
भूमौ स्वय निपतितो निहतोऽरिभिस्तै. ।।४४।।

वीर प्रतापतनयोऽपि च रूपसिंहो,
युद्धं चकार यवनै समरैकसिंह ।
यो योद्धुमापतति त विनिपात्य रेजे,
नारायणेति पदकीर्तनत पवित्र ।।४५।।

ख्यातश्चभूपतिरुपेत्य च नूरखा वै,
बाणैस्त्रिभिस्तमभिविध्य गले जगर्ज ।
आसाद्य शत्रुमथ वीरवरोऽसिना त,
हत्वा स्वय च यवनैर्निहतोऽपतत् स ।।४६।।

दृष्ट्वाऽथ त निपतित भुवि रामचन्द्र-
सूनुस्तदा जगतसिंह इति प्रसिद्ध ।
तीक्ष्णासिना कतिचन द्विषतो जघान,
भूमौ पपात निहतोऽरिगणै स्वयं च ।।४७।।

श्रीरामसिंहतनयोऽपि च खड्गहस्त,
संग्रामजिच्चतुरसिंह इति प्रसिद्ध ।
सम्यग् युधीह युयुधे यवनाश्च निघ्न-
न्नुच्चैर्विनद्य पुरत पुरतः ससार[1] ।।४८।।

य सैयदेषु विदित समुसद्दिसञ्ज[2]
स्वानीकिनीं[3] समुपगृह्य तमाजघान ।
भूमौ निपात्य तमपि ह्यसिना स[4] वीरो,
ध्वस्तोऽरिभि स्वयमपि प्रपपात तत्र ।।४९।।

---

१ अग्रसरनि स्मेत्यर्थ ।
२ शम्सुद्दीननामा ।
३ निजसेनाम् ।
४ चतुरसिंह ।

दृष्ट्वा हरीन्द्रतनयोऽपि सुदर्शनाख्य-
स्तद्भ्रातृषु प्रथितकीर्तिरुपाद्रवत् सः ।
कांश्चित्तु सैयदवरान् समरे निपात्य,
म्लेच्छैर्हतः स्वयमपि न्यपतद्धरायाम् ॥५०॥

आनन्दराम इति यो हि हरीन्द्रसूनु-
र्युद्धे न्ययुद्ध यवनैरभितः स नूनम् ।
यो योहि योद्धुमुपयाति निहत्य त त,
सोऽन्तेऽरिशस्त्रपरिविद्धवपुः पपात ॥५१॥

सम्यग् युधीह युयुधेऽचलसिंहसूनु,
संग्रामजिच्च किल केसरिसिंहवीरः ।
निघ्नन् ययौ स सुभटारिगणान् पुरस्ताद्,
म्लेच्छैरुपेत्य निहतश्च हयात् पपात ॥५२॥

ऊदान्वयी हिमतसिंह इति प्रसिद्ध,
सामन्तजित् परशुरामसुत सुधीर ।
युद्धे निपात्य यवनानथ समुखाप्ता-
नभ्याहतोऽरिनिचयैरपतद् मृतः सन् ॥५३॥

वीरश्चतुर्भुज इति प्रथितः सुनाम्ना,
श्रीश्यामदासतनयोऽत्र च जैतमालः ।
युद्धे स्म याति परितोऽरिगणान् विनिघ्न-
न्नन्ते च तैर्विनिहतो निपपात पृथ्व्याम् ॥५४॥

चापान्वयी समरजिन्निशितास्त्रहस्तः,
श्रीमाहसिंह इति केसरिसिंहपुत्र ।
युद्ध्वा रणे यवनवीरवरान्निपात्य,
ध्वस्तश्च तै स्वयमशेत विशीर्णगात्रः ॥५५॥

य कर्मचन्दतनयोऽपि च रामचन्द्रो,
भीवान्वयी यवनवीरवरैर्न्ययुद्ध ।

हत्वा रणेऽरिनिचयान् स्वयमाहताङ्गो-
भूमौ बभौ स पतितो निहतोऽपरैस्तै[1] ॥५६॥

चादिस्तु यो दृढतनु किल कृष्णसिंहो
नाद्यस्य सूनुरनवाप्तवयास्तदानीम्[2] ।
हत्वा रणे स शतनुत्रतनून् पठानान्,
कृच्छ्रात्परैर्विनिहतो निपपात भूमौ ॥५७॥

खगारवश्य इह तस्य च भागिनेयो,
नाद्याह् वयोऽपि युयुधे युधि योधवीरः ।
यो योऽस्य सम्मुखमुपैत् किल तं तमेव,
हत्वा स्वयं विनिहतो रिपुभि पपात ॥५८॥

वीर प्रतापतनय किल राजसिंह,
सम्यक् स्वबाहुबलनिर्जितवन्यसिंह ।
दुर्वैरिवीरदलन शितशस्त्रहस्त,
सार्धं न्ययुद्ध मुगलैः समरे प्रशस्त ॥५९॥

यो योद्धुमापतति तं स निहत्य मुक्त्वा,
यात्यग्रत[3] स्म शतनुत्रमरिं च भङ्क्त्वा ।
त्रस्ता द्रवन्ति यवनाः स्म रणं च हित्वा,
सोऽयुध्यत स्वयमथास्त्रहति महित्वा ॥६०॥

रे वर्वरा! वर्वर! तहव्वर! हीत्यमुक्त्वा,
नून पुरोऽमरदनल्पशरान् न मुक्त्वा ।
दृष्ट्वा सुदुर्जयनर भटमाव्रजन्तं,
त्यक्त्वा रणं च निजपक्षगणं व्रजन्तम् ॥६१॥

---

१- अपरैरन्यैररिचयैर्निहतः ।
२ पर पूर्णायां अनवाप्त अप्राप्त वयोऽवस्था येन स ।
३ याति स्म यवनाविहतयं । एवमग्रेऽपि ।

स्वान्ते विचार्य च मुजफ्फरखाँपठाण-
श्चञ्चज्ज्वलज्ज्वलनसंनिभतीक्ष्णबाण ।
मत्ताद् गजात्तहवर तुरगे निवेश्य,
तत्र[1] स्वयं सुविधया त्वरयोपविश्य ।।६२।।

संनह्य सैन्यमखिलं खलु धन्विधुर्य-
स्सार्ध च तेन[2] सुहृदा युधि वीरवर्य ।
अभ्याद्रवत्तमथ[3] तीक्ष्णशरैस्तुदन् स
सद्वारणोपरिगत शुशुभे सदंश[4] ।।६३।।तिलकम्।

सताडितोऽरिविशिखैरपि राजसिंह,
संप्राहरत्तदिभमुन्नमयन्नसिं[5] ह[6] ।
शक्त्याऽवधीद् हृदि मुजफ्फरखा तमेव,
सोऽभूत् सुविद्धहृदयस्त्वरया तदैव ।।६४।।

रुद्रस्तु तत्र नभसि प्रमथैर्गणैश्च,
सार्द्धं तदीयरणमीक्षितुमाजगाम ।
श्रीनारदश्च सह तुम्बुरुणाऽभिगम्य,[7]
दृष्ट्वा रणोत्सवममोदत चाप्यनर्तीत् ।।६५।।

अश्वात् प्रकूर्द्य गजपृष्ठमुपेत्य सद्य-
स्तं चावधीत् स यमदंष्ट्रिकया विनद्य ।
हत्वा मुजफ्फरमिति प्रतिघूर्णयंस्तु,[8]
तूर्णं ससार यवनान् युधि मर्दयस्तान् ।।६६।।

तावत् तहव्वर उपेत्य शरैर्जघान,
सैन्यं सम सकवचस्तु विवर्धमान. ।

---

१ गजे । २ तहव्वरेण ।
३ राजसिंहम् । ४ सकवच ।
५ तस्य मुजफ्फरस्य इम गजम् । ६ 'ह' इति पादपूरणे ।
७ तन्नाम्ना गन्धर्वेण सह । ८ परिभ्रमन् ।

वीरोऽसृगुक्षिततरो[1] विशिखै रणाग्रे,
सोऽभाद् यथा स्वकिरणैः सवितोदयाग्रे ।।६७।।

जीयाच्चतुर्भुज इति प्रजपन्नजस्रं,
खड्गेन तं प्रहरति स्म तहव्वरं स ।
छित्वा तनुत्रमथ तस्य सुचैलखण्डान्,
स्कन्धं बिभेद च तथापि ममार नैषः[2] ।।६८।।

प्रोच्चैर्विनद्य च तहव्वरखाँनवाब-
स्तीक्ष्णासिना सपदि तच्छिर उच्चकर्त ।
तत्तावदेव[3] परिगृह्य च मुण्डमाला-
प्रोतं विधूय मणिवच्च ननर्त रुद्रः ।।६९।।

एवं त्रिपुष्करपदे यवनैर्वियुध्य,
संख्येऽरिशस्त्रनिकरैः स्ववपूंषि हित्वा ।
सर्वे पृथक् पृथगिमे सुविमानसंस्था
देवालयं प्रविविशुः किल माधवीयाः ।।७०।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये पुष्करयुद्धवर्णनं
नामाष्टमः सर्गः समाप्तः ।

---

१ असृजा रुधिरेण अतिशयेन उक्षितो लिप्त इत्यर्थः । २ तहव्वरः ।
३ तत् तावदेव अर्थात् राजसिंहशिरोमात्रमेव । तादृशवीरतादर्शनेन केवलं तस्यैव समानार्हत्वादितिभावः ।

# नवम सर्गः

अथ सुभटपुरं[1] स प्राप्य दिल्लीश्वरात्तु,
यवनकुलपते र्स्वं देशमाशु प्रयात ।
प्रतिदिनमतिमोदं चेतसि स्वे दधार,
सह सहचरसैन्यैरिन्द्रसिंह.[2] प्रवीर. ॥१॥

अहिपुरमुपयात[3] त तदाकर्ण्य चाराद्,
भटपुरनगरस्था भूपभृत्या समेत्य ।
प्रतिदिनमिह कृत्वा मन्त्रमव्यक्तमेव,
द्रुततरमविवाद निश्चय चक्रुरेवम् ॥२॥

शृणुत सुभटवर्या इन्द्रसिंहेन सार्धं,
यदि युधि परियुध्य क्रूरभावाज्जयेम ।
तदपि न विजय स्यान्निश्चितश्च स्वहानि-[4]
रयमपि गजसिंहक्ष्मापतेर्हि प्रपौत्र. ॥३॥

अयमपि च वय किं स्म पृथक् किन्त्वभिन्ना-
स्तदुभयजनहानेर्हानिरेवोभयेषाम् ।
यवनपतिवरेणाप्येवमेवावधार्य,[5]
स्वजयमुभयतो हि प्रेषितोऽस्तीन्द्रसिंह ॥४॥

तदनुसहचरा[6] ये बान्धवा. सन्ति नस्तै,
सममिह कलहो नो युक्त एतद्विचार्यम् ।
यदि यवनवरोऽन्य. कोऽपि चेदागत स्या-
न्नियतमुचित एवायोधने[7] तस्य नाश ॥५॥

यदि मनसि भवद्भ्यो रोचते मन्त्र एष
इह[8] विशतु तदेष ह्यर्प्यतां दुर्गमस्मै ।

---

१ योधपुरम् । २ गजसिंहस्य पौत्र । ३ नागपुरम् (नागौर)
४ स्वहानि । ५ स्वजय अवधार्य । ६ तस्येन्द्रसिंहस्य ये अनुसह-
चरा अनुचरा सहचराश्चेतिभाव । ७ युद्धे । ८ योधपुरे ।

स्थितवति नरपेऽस्मिन्नोऽपि चात्र स्थितिः स्या-
दिति निशमितवन्त-[1] साधु साधूचिरेऽन्ये ।।६।।

अथ भटनगरं स प्राप्य मोदेन दुर्गेऽ-
जितनृपभटमुख्यैस्तैर्नियुक्तो न्यवात्सीत् ।
स्वसदनमभिजग्मुस्तेऽपि सोनगमुख्या
न्यवसदिह तु भाटीराम एक स भृत्य ।।७।।

अथ[2] च तह्वरेण प्रेषितं चाजमेरात्,
सकलयवनभर्त्रे राजवृत्तान्तपत्रम् ।
तदपि सरविलद सन्नवाबस्तदैव,
न्यपठदनुनिदेश[3] प्राप्य दिल्लीश्वरस्य ।।८।।

"शृणु सुयवननाथ प्रस्फुट वच्मि भूम-
न्निह मरुवरदेशे राजसिंहोऽस्ति वीर ।
निजसुभटजनै सोऽभ्येत्य वै मेडताख्य,
नगरमभिजघानोद्दृप्तसादुल्लसज्ञम् ।।९।।

तदनु बहुतरा वै मस्जिद साधु भङ्क्त्वा,
सुरवरयजनार्थ[4] घोषित तेन तत्र ।
अधिकृतिमपि भर्त्तु स्थापयित्वाऽऽजगाम,
सह बहुभटवर्यैर्योद्धुमस्माभिरत्र ।।१०।।

अहमपि च पुरेव स्वीयकर्त्तव्यनिष्ठ-
स्तमुपगतमुपान्ते शीघ्रमाकर्ण्य चारात् ।
निखिलयवनसैन्यै सार्धमारुह्य वाह,
समरभुवि विशङ्क योद्धुकामोऽग्रतोऽस्थाम् ।।११।।

चपलतरतुरङ्ग शीघ्रमारुह्य तावत्,
सह सहचरसैन्यैर्भ्रातृभिश्चाययौ स[5] ।

---

१ श्रुतवन्त । २ इत पद्यम् ३ अनुमतिम् । ४ यजन
पूजनम् । ५ राजसिंह ।

निखिलयवनवीरान् संगरेऽथो निहत्य,
स्वयमपि निजवर्ग्यैर्देवलोकं जगाम ॥१२॥

पुनरिह यदि सैन्यैः सार्धमेवाजमेरे,
शिशुनरपतिभृत्यः कश्चिदायास्यतीश !।
किमहमहह [1] कर्तास्म्येक एवावशिष्टो
यदुचितमिह सम्राट्[1] तद्विधेयं भवद्भिः ॥१३॥"

इति विलिखितवार्तापत्रमाकर्ण्य सम्यग्,
निखिलयवननाथः क्रोधसरक्तनेत्रः ।
त्वरितमखिलसैन्यैश्चात्मपुत्रैश्चतुर्भिः,
सममजयपुरं[1] तत् प्राप्य तस्थौ सयत्नः ॥१४॥

अजयपुरमुपेतं म्लेच्छराजं निशम्य,
भटपुरनगरस्थो रामभाटीति वीरः ।
सपदि हृदि विमृश्य प्रैषयद् गुप्तपत्रं,
सनयविधि[2] बहादुर्-खाननाम्ने सुधाम्ने ॥१५॥

"अधिपसदसि येषां पक्षगास्त्वत्समाना
अविरतमतिमान्यास्ते वयं त्वां वदामः ।
भटपुरपतयेऽस्मद्-बालभूपाय सम्राट्,
किमपि कथमहो[1] नो दत्त[3] एतन्न विद्मः ॥१६॥

पुनरपि सहसैवायात औरङ्गजेबः,
कथमुभयविनाशं भाविनं नैष वेत्ति ? ।
यदि भटपुरमेष स्वामिने नोऽधुनाऽपि[4],
प्रदिशति वयमेते कर्तुमुत्कास्तदाज्ञाम् ॥१७॥"

नयविनयमयं वै पत्रमेतद् विदित्वा,
रहसि यवननाथायापि विज्ञाप्य तस्मै ।

---

१ अजमेरपुरम् । २ नीतिविधिमहितम् । ३ दत्ते ददाति ।
४ नोऽस्माकं स्वामिनेऽजितसिंहाय प्रदिशति ददाति ।

प्रतिवचनविधिज्ञ सोऽपि[1] पत्रं लिखित्वाऽ-
स्फुटयदभिमताशा प्रीतिपात्राय तस्मै[2] ॥१८॥

अहिपुरपतिभृत्य[3] सर्ववृत्तान्तलेखी,
यवनपतिमुपास्ते स्मान्वह पारसीज्ञ. ।
सदसि तदवगम्य स्वीयभर्त्रे समग्रं,
व्यलिखदथ बहादुर्-रामयो पत्रसारम् ॥१९॥

इति तु विलिखित तद् वृत्तमासाद्य सद्यो
न्यदिशत स तदेन्द्र क्ष्मापतिः स्वीयभृत्यम् ।
कथमयमिह तिष्ठद् योधवप्र हि राम-
स्त्वरितमत उपायेनैव वध्यो भवद्भि ॥२०॥

अवसदिह सुयोधो यौधिरन्यस्तदीयो[4]
भटनगरवरे य केसरीसिंहवश्य ।
तदनु स सह मे यै कृष्णसिंहाभिधानो
द्रुतमरधदकस्माद् रामसिंहस्य गेहम् ॥२१॥

स्वसदनमभिभूत शत्रुभिर्वीक्ष्य ताव-
न्निखिलधनमथासावर्पयित्वा[5] द्विजेभ्य. ।
स्वयमथ बहिरेत्य त्यक्तभी खड्गहस्त,
सुबहुभिरभियुध्य प्राग् रणेऽन्ते पपात ॥२२॥

तदनुचरवरा ये प्रातरुत्थाय सर्वे,
प्रथमत उपयाता नागर सूरपूर्वं[6] ।
निधनमिह तु तेषु स्वीयभर्तुर्निशम्य,
तदनुचरवरोऽगादेक आशु प्रयत्नात् ॥२३॥

१ बहादुरखां अपि । २ भाटीरामसिंहाय (अभिमता आशा अस्फुटयत् अदर्शयत् । स्वकीयपत्रद्वारेति भाव । ३ नागपुराधिपते इन्द्रसिंहस्य भृत्य । ४ तदीय इन्द्रसिंहगवर्म्येत्यर्थ । सुयोध सुभटो यौधि 'जोधा' इति प्रसिद्ध । ५ असौ भाटीरामसिंह । ६ सूरसागरान्ते स्थाने ।

कलियकुलवरेण्यो विक्रमी विक्रमाख्य,
सपदि समभिगम्यारातिसेना सखङ्ग ।
इह किल युधि युद्ध्वाऽरींस्तदाऽष्टौ निहत्य,
त्रिदशपुरमयासीत् स्वामिना सार्धमाशु ॥२४॥

अथ युधि स तु कृष्णो रामशीर्ष निकृत्य,
तदनु सुबहुयत्नाद्दर्शयामास भर्त्रे ।
स[1] च यवनसमूहस्वामिने प्रेषयत्तत्
स[2] तु तदिति विदित्वाऽवर्धयद् भूपमिन्द्रम् ॥२५॥

अथ च सुभटवर्यौ दुर्गसोनङ्गसिंहौ[3],
दृढतरनिजलक्ष्यौ चेरतुर्दिग्जयार्थम् ।
बहुसुभटसमाजा वाहिनी चोद्वहन्ता-
वजितजयपताका[4] भ्राजयन्तौ व्यभाताम् ॥२६॥

पुरमभित उपावेष्ट्यै त्य जालोरसञ्ज्ञं,
तदधिपति-विहारप्रान्तजातात् पठानात् ।
करमपि च गृहीत्वा जग्मतुर्विल्टवाट,[5]
तदिति चरवरोऽस्यादिन्द्रसिंहाय वृत्तम् ॥२७॥

त्वरितमिति विदित्वा सद्य एवेन्द्रसिंहोऽ-
खिलबलमुपगृह्य हन्त तत्पृष्ठगोऽभूत् ।
नियतमुपगत तं तौ स्वचारान्निशम्य,
सपदि समधियातौ सीम्नि खेताशरस्य ॥२८॥

सजलसर इहत्य तौ स्वपृष्ठे विधाय,
सपदि समभिगम्यावस्थितौ योद्धुकामौ ।

---

१ स पूर्वोक्त इन्द्रसिंह । २ स यवनस्वामी (इन्द्रसिंह अवर्धयत् अभ्यनन्दत्) । ३ दुर्गपदेन दुर्गादासो ज्ञेय । ४ अजितनृपविजयध्वजमुल्लासयन्तौ रेजतुरित्यर्थ । ५ 'वीलाडा' ।

अहिपुरपतिसैन्यास्तावुपेतौ विदित्वा,
तदभिमुखमसह्याश्चिक्षिपुर्वह्निबाणान् ॥२९॥

तमनलजशरौघं वीक्ष्य चाभ्यापतन्त,
पृथगिह सुविधार्थं तावभूता ससैन्यौ ।
न्यविशत किल दुर्गोऽथेन्द्रसेना[1] स इन्द्र-
जिदिव सकरवालस्त[2] शराश्चाभ्यवर्षत् ॥३०॥

युधि बहु युयुधे श्रीदुर्गवीरो विपक्षै-
स्तमुपगतमुदीक्ष्यागम्य वै कर्मशूरौ ।
[3]अभिरिपु युयुधाते इन्द्रमिहस्य वर्य्यौ,
[4]चलदसि हरिनाथश्रीहरीरामवीरौ ॥३१॥

समरभुवि रिपू तौ वीक्ष्य भीमाख्यवीर-
स्तदुभयमभिगम्य प्राहरत्तीव्रबाणैः ।
इति दमयितुकाम प्रेक्ष्य त बाणवृष्ट्या,
विहितसमभिषेक पातयामासतुस्तौ ॥३२॥
तमथ निहतमालोक्याक्षयाख्यस्य सूनु-
ररहसि[5] शिरसी द्रागेतयोराचकर्त ।
तदनु किल स गोपीनाथमाहत्य नून,
स्वयमपि समरे तैराहतो निष्पपात ॥३३॥
अहिपुरपतिभृत्यौ मेडतीयावुपेत्य,
युयुधतुरसिहस्तौ[6] कृष्णसिहोदयाख्यौ ।
अजितनृपतिभृत्यस्तत्र[7] खगारगोत्रो
वरमसिमुपगृह्याऽयुद्ध बालान्ववाय[8] ॥३४॥

---

१ इन्द्र इन्द्रमिह इन्द्रजित्पक्षे तु शक्र । न्यविशत प्राविशत । 'नेर्विश' इत्यात्मनेपदम् । २ त इन्द्रमिहमभि शरानवर्षदिति योजना । ३ अभिरिपु रिपो समक्षम्। ४ चलन् असि खड्गो यत्र कर्मणि तत् इत्येतदुभय क्रियाविशेषणम् । ५ अरहसि सर्वेषा समक्षमित्यर्थ । ६ अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वादत्र परस्मैपद प्रयुक्त ज्ञेयम् । ७ नाम्ना सह् प्रवृत्त युद्धे इत्यर्थं । ८'बाल' इति अन्नत्यक्षत्रियाणा कुलशाखा ।

प्रहरति स तदंसौ युध्यमान स्म ताभ्या-
मथ च समभियान्त वीक्ष्य तं तावसिभ्याम् ।
सपदि शिरसि हत्वा पातयामासतुर्वै,
स च वपुरिह हित्वा देवलोक जगाम ॥३५॥

अथ समिति[1] धवेचावशजौ चाजितीयौ,[2]
तमभिहतमवेक्ष्यागत्य गोविन्द-भावौ ।
पृथगिषुभिरुरोऽन्तर्जघ्नतुर्यद्विदेव,
ज्वलदनलसुयन्त्र-स्फोटकै[3] पेततुस्तौ ॥३६॥

प्रतिभटनिहतौ तौ वीक्ष्य तत्रैत्य दुर्गो
भुजयुगलबलोत्थैराशुगैस्तौ[4] जघान ।
समरभुवि यशूरत्नाभिधानावुपेत्य,
युयुधतुरसिनेन्द्रीयौ[5] भटौ मेडतीयौ ॥३७॥

त्वरितमुपगतौ तौ दुर्गदासोऽपि मत्वा,
तदुभयशिरसी तूच्छिद्य खड्गेन शूर. ।
अपरमपि[6] तदीय योधवर्ग जघान,
प्रययुरथ दिगन्ताञ्शत्रवो भीतियुक्ता ॥३८॥

अहिपुरपतिमारादेत्य शक्ति गृहीत्वा,
न्यगददिति स उच्चै पट्टघात[7] न कुर्म ।
[8]अनुसमपतदैन्द्री वाहिनी विट्ठलस्य,
तनय उपकरं च प्रागमल्लुण्ठयित्वा ॥३९॥

तदभिभवमथैत्य प्रेक्ष्य तद्भृत्यवर्या-
स्त्वरितगति च ते तत्पृष्ठगा सबभूवु ।

---

१ युद्धे । २ अजितीयौ अजितनृपपक्षीयावित्यर्थं । ३ तोपगोलै ।
४ कृष्णसिंहोदयाख्यौ पूर्वोक्तौ । ५. असिना (खड्गेन) इन्द्रीयौ इन्द्रसिंहसम्बन्धिनौ ।
६ आरात् समीप (इन्द्रसिंहस्येत्यर्थं ) । ७ राजवश्यविनाशम् ।
८ विट्ठलस्य तनय ऐन्द्री इन्द्रसिंहीया वाहिनी सेना अनुसमपतत्, उपकर उपकरण इन्द्रसिंहस्य शस्त्रादि-सामग्रीमित्यर्थं । लुण्ठयित्वा प्रागमदिति योजना ।

प्रतिभटगणमन्वायान्तमालोक्य तस्था-
विह सपदि परावृत्याथ सोनङ्गसिंह ।।४०।।

तदरिपु पुरतः प्रायागिमूदावत[1] च,
वचनमिति तयोच्चैः कृष्णसिंह जगाद ।
प्रथममजितभूप त्वं श्रित संप्रतीन्द्र-
मिति प्रहर पुरा त्व मे न सोढासिघातम् ।।४१।।

तदुदितमिति मत्वा वाक्यमूदावत स
निशितशरसमूह तं प्रति प्राग् मुमोच ।
सपदि शरमुपोह्यो[2]ट्ट्ण्डकोदण्डकोट्या,
ज्वलदनलशिखाग्रेणैव[3] तेनाऽवधीत् तम् ।।४२।।

निहतमथ तमालोक्यैश्वरि श्यामसिंह-
तनय उपससाराकृष्य चाप तु राज ।
चपलतरतुरङ्ग सद्य आरुह्य बाणै-
स्त्रिभिरथ [4]तमविध्यत् साहिबश्चांपजन्मा[5] ।।४३।।

युयुधतुरसिहस्तौ सगरेऽन्योन्यमेत्य,
स्फुटतरबहुरोषावेशतो रक्तनेत्रौ ।
रिपुवपुषि पृषत्कान्[6] पातयन्तौ सुभालौ,
समरभुवि करालौ पेततु स्वाग्नमालौ ।।४४।।

सपदि निहतमग्रे तत्र वीक्ष्य स्वपक्ष,
स्वमरणभयभीता दुद्रुवुश्चेन्द्रवर्याः ।
रिपुगणमिति[7] भग्न वीक्ष्य सोनङ्गसिंह-
स्त्वरितमभिजगाम क्ष्मापति चेन्द्रसिंहम् ।।४५।।

---

१ प्रयागदासोत इति स्यातम् । २ भ्राजयित्वा । ३ बाणेन ।
४ तं राजसिंहम् । ५ चांपावत (साहिबसिंह.) ६ बाणान् ।
७ इति दृष्ट्वा भग्नं पलायितमित्यर्थ ।

अहिपुरपतिना वै पूर्वतो युध्यमान-
मयमथ[1] किल दुर्गादासमालोक्य सायम् ।
अवददिति तमुच्चैः शक्तिमास्फाल्य धीरः,
कथमिममिह हत्वा पट्टघातं प्रकुर्याम्? ।।४६।।

पुनरपि यदि किंचिन्मानसे तेऽभिमान,[2]
श्व उषसि बलमावां दर्शयिष्याव एव ।
ननु निशि तु शयानेऽस्त्राहतिः कूटघात,
शयितजनवधो हि क्षत्रियाणां न धर्मः ।।४७।।

अहिपुरपतिमित्थं निःश्वसन्तं प्रमुच्य,
तदुपकरणमग्र्यं लुण्ठयित्वा समग्रम् ।
निजबलजयसूचं दुन्दुभिं वादयित्वा,
तदनु सरसि तत्रैव स्थितौ तौ सुवीरौ ।।४८।।

अथ विकलमनस्को निःश्वसन्निन्द्रसिंह,
स्वयमगमदथान्यत्स्थानमुत्सृज्य तद् द्राक् ।
तदनु स सह सैन्यैस्तृड्-निदाघाभितप्तः,
कमपि जनमपृच्छत् क्वापि किंचिज्जलं स्यात्।।४९।।

जलमिह तु न विष्वक्[3] क्वापि खेटेष्विति,[4]
तदुदितमिति सोऽप्याकर्ण्य चिन्तामवाप ।
निखिलनिजसुवीरैर्मन्त्रयित्वेन्द्रसिंह,
स्वयमपि च विमृश्योवाच गोवर्धनाख्यम्।।५०।।

अजितसुभटयोर्वै पार्श्वमित्वा त्वमाशु,
निगद विनयपूर्वं वाक्यमस्मन्मुखोक्तम् ।
तदुदितमिति बुद्ध्वा चारणश्चाभिगम्य,
न्यगददथ तथैवाशीर्वचः प्राक् प्रयुज्य ।।५१।।

---

१ मोनङ्गसिंह । २ इन्द्रसिंहस्य ।
३ सर्वत । लघुग्रामेषु ।

शृणुत सुभटवर्या[1] क्षात्रधर्मैकनिष्ठा!
बहुतरमुचितं यद् युध्यते स्वामिहेतो ।
अथ नु कथमिमे[1] स्यु क्षत्रसमानयोग्या?
न कृतमधमयुद्ध कैश्चिदस्मत्पुरोगै[2] ।।५२।।

इह युधि परमेवास्मद्भटान् धिग् धिगस्तु,
प्रतिभटनिशितास्त्रैर्दु द्रुवुर्येऽतिभीता· ।
अहह! यदहमत्राद्यैव गुप्तो[3] भवद्भ्या,
कथमहमुचित स्या प्रातरेवाभियोद्धुम् ।।५३।।

पुनरपि न कदाचिद् योद्धुमप्युत्सहेऽह-
मजितनृपतिभृत्यै· किं पुनर्भो! भवद्भ्याम् ।
इति सविनयमुक्त हीन्द्रसिहेन वीरा-
वहमपि भवदग्रे साञ्जलिर्वच्मि नूनम् ।।५४।।

शृणुत सुभटवर्या! इन्द्रसिंहो वराक-
इह हि जलमृतेऽस्मिन् दु स्थले मृत्युमेति ।
त्वरितमवतमद्यैतीन्द्रसिंह[4] युवा त,
वितनुतमथ कीर्ति दिक्षु सर्वासु सम्यक् ।।५५।।

तदुदितमिति तत्राकर्ण्य तौ वीरवर्यौ,
स्वयमुषसि यथेष्ट प्राश्य पीत्वा तदाऽप[5] ।
सह खलु निजसैन्यैर्दुन्दुभि वादयित्वा,
सपदि सरस एतौ चक्रतुर्वै प्रयाणम् ।।५६।।

---

१ इन्द्रसिंहीया ।
२ अस्मत्-पूर्वजै अधमयुद्ध न कृत, यादृशमिन्द्रसिंहीयै कृतमित्याशय ।
३ रक्षित । ४ इति कारणात तमिन्द्रसिंह अद्य अवत रक्षनम् ,
५ जलम् ।

अजितनृपतिसैन्ये प्रस्थिते सोऽपि गत्वा,
तदखिलमपि भर्त्रे ज्ञापयामास तुष्ट ।
तदुदितमिति बुद्ध्वा हीन्द्रसिंहः स्वसैन्यैः,
सरसि सपदि तस्मिन्नेत्य तस्थौ सुखेन ।।५७।।

इति श्रीजगज्जीवनभट्टविरचिते
अजितोदये महाकाव्ये खेतासरयुद्धवर्णन
नाम नवम सर्ग समाप्त ।

# दशमः सर्गः ।

प्रस्थाय तत्सरस एव तु योधवीरौ[1],
चेरायिसञ्ज्ञमुपपद्य[2] तु तस्थतुस्तौ ।
[3]निश्चिक्यतुर्निजभर्टरिति योधवप्र,
गृह्णीम[4] एव सहसा खलु न त्यजामः ।।१।।

इन्द्रस्तदा तदहरेव[5] सरस्युषित्वा,
कृत्वा प्रयाणमथ बालरवाभिधानम् ।
ग्रामं प्रपद्य परिबुध्य तदाशयं[6] च,
[7]प्रत्येतुमेतदखिलं चरमादिदेश ।।२।।

चारोऽभिगम्य परिबुध्य तदाशयं च,
प्रत्यागतोऽधिपसमीपमुवाच सर्वम् ।
स्वामिन्नसंशयमिदं किल मन्त्रितं तै-
र्नेह्युत्सुका सपदि योधपुरं ग्रहीतुम् ।।३।।

इन्द्रो निशम्य शुचमाप भृशं तदानी-
माहूय चाँपिमुदयं लखधीरसूनुम् ।
कौंपिं सुदर्शनसुतं च[8] प्रतापसिंह,
संप्रेषयत्तत इमावपि जग्मतुस्तौ[9] ।।४।।

तत्राभिगम्य सुभटाविति संजगाद,
वाक्यं सुदर्शनसुतः परतापसिंहः ।
भो भूमिपालसुभटौ! शृणुता यदुक्त-
मिन्द्रेण भूमिपतिना खलु तद् ब्रवीमि ।।५।।

---

१ दुर्गादाससोनङ्गसिंहौ । २ चेरायिसञ्ज्ञं ग्राममित्यर्थः । ३ निश्चिक्यतुः निश्चयं चक्रतुः ।'विभाषा चेः' इति कुत्वम् । ४ गृह्णीमः ग्रहीष्यामः । वर्तमानसामीप्ये वर्तमानवत्त्वम् । एवं त्यजामोऽर्थात् त्यक्ष्यामः । ५ तद्दिने 'कालाध्वनो' रिति द्वितीया । ६ दुर्गादासादीनामजितसिंहीयानामाशयम् । ७ परिबुद्धमाशयं वस्तुनो ज्ञातुमित्यर्थः । ८ संयोगपरत्वेऽप्यस्य चकारस्य 'प्रह्वे वे' ति वचनान्न गुरुत्वम् । ९ तौ दुर्गादाससोनङ्गसिंहौ (कर्म) ।

प्राधान्यमस्तु भवतोरपि मत्पुरस्ताद्,
ग्रामान् मनोऽभिलषितानपि वां प्रदास्ये ।
संधि मया सह विधाय सुवीरवर्यौ!
भोगानिहानुभवता रुचितान्[1] भवन्तौ ॥६॥

इत्थं निशम्य सुभटौ तु मिथो विहस्य
तावाख्यतामलममूभिरनार्यवाग्भिः ।
भृत्यत्वमाप्य खलु बालनरेश्वरस्य
कस्त्वा भजेत्प्रवयसः[2] विदितार्थतत्त्वः ।७॥

सत्यज्य कल्पतरुमत्र क ऊरुबूकं[3]
जीर्णं भजेत् खलु पुमानखिलार्थविज्ञः? ।
पीयूषवारिधिमपोह्य गतोदकं कः,
कूपं श्रयेत तृषितो हि वृषार्कतप्तः ॥८॥

याहि प्रताप! वद चेन्द्रनृपं त्वमद्य,
गच्छाशु नागपुरमात्मजनैस्तु नो चेत् ।
निष्कासयाव[4] उरु योधपुरादिदानीं,
प्रोच्येति तौ तमुदयं[5] पुनराहतुः स्म ॥६॥

त्यक्त्वाऽनुगत्वमजितस्य कथं त्वमिन्द्रं,
ससेवसेऽद्य मतिमन्! न च बुध्यसेऽन्तः[6] ।
क्षीराम्बुराशिमपहाय गतोऽसि गर्त्तं,
तन्मा वृथा नय दिनानि पुनः श्रयैनम्[7] ॥१०॥

श्रुत्वा तदुक्तमुदयस्तु स तत्र तस्थौ,
हीनप्रताप इव तद्रहितः प्रतापः ।

---

१ इष्टान् । २ वृद्धम् । ३ एरण्डम् ।
४ भविष्यदर्थे वर्तमानसामीप्याद् वर्तमानवत्त्वम् । ५ तं प्रतापसिंहम् ।
६ अन्तर्मनसि । ७ एनमजितसिंहम् ।

स स्वामिन प्रतिनिवृत्य निजानुभूत,
वृत्तान्तमेतमखिल कथयाचकार ।।११।।

त्रस्तस्तदेन्द्र इति तद्वचन निशम्य,
म्लानाननाम्बुजरुचिस्त्वरितं निशीथे ।
कृत्वा प्रयाणमथ बालरवान्निवासात्,
सुप्तोत्थिते प्रथममाप स योधवप्रम् ।।१२।।

म्लेच्छेन तत्र यवनाधिपसेवकेन,
वृत्तान्तसूचकवरेण स मन्त्रयित्वा ।
साहाय्यमत्र करणीयमतोऽस्मदीय-
मित्याद्यलीलिखदधीशवराय सर्वम् ।।१३।।

तत्रत्यवृत्तमिति सोऽधिपतिर्विदित्वा,
गन्तु नवाबमवदन्मुकरब्बखानम् ।
लब्ध्वा निदेशमथ योधपुर स यातु,
म्लेच्छैर्भटैर्बहुतरैरकरोत् प्रयाणम् ।।१४।।

तावत्तु वान्ननरपालभटै समन्तात्,
सवेष्टित सपदि योधपुर नृवीरै ।
इन्द्र प्रसज्ज्य[1] पुरवप्रमथाग्नियन्त्र-
प्रोद्भूतगोलनिकरैरभितोऽभ्यवर्षत् ।।१५।।

श्रुत्वा चराद् यवनसैन्यमुपागत ते,
हित्वेन्द्रसिहमचिरान्नगरादसर्पन् ।
तावत् स योधपुरमाप नवाबवर्य
सैन्यै सहैव सहसा मुकरब्बखान ।।१६।।

---

१ पुरवप्र नगरकोट्टक प्रसज्ज्य रक्षासाधनै प्रसाध्य ।

श्रुत्वेति चेन्द्र उपगम्य सुमन्त्र्य तेन,
[1]तत्पृष्ठयानविषयेऽजनि तत्सहाय[2] ।
द्वित्रप्रयाणमनुगम्य तदाशयाच्च,
संरक्षणाय किल योधपुर निवृत्त ।।१७।।

स्वीयैश्च सैन्यनिकरैर्मुकरव्वखान-
स्तत्पृष्ठमन्वनु नवाबवरो जगाम ।
ते तं सुदूरमनुयाप्य वनस्थलीषु,
प्रोचुर्निवर्त्स्यसि[3] न चेदिह घातयाम[4] ।।१८।।

भ्रान्त्वा सुदुर्गमतरेषु वनस्थलेषु,
क्लेशान् प्रपद्य बहुशो मुकरव्वखान ।
प्रत्यद्रवत् स यवनाधिपते· समीप,
मेवाडभूमिमगमन्नजितस्य योधाः ।।१९।।

मेवाडमेत्य परित· करमाददाना,
राज्यं प्रशासत इव न्यवसन् ससैन्या ।
त त तदा सुघटित किल तत्प्रभाव,
पान्था जनास्तत इतोऽखिलदिक्षु तेनु· ।।२०।।

तानागतान् सपदि सोजतवासिनोऽपि,
विज्ञाय तत्र सुरथात्मकृतेऽयतन्त[5] ।
आजह्रुराजितभटाश्च[6] धनानि दिग्भ्यो
मेवाडभूमिपतिना च सुमानितास्ते ।।२१।।

म्लेच्छेन सोजनपुराधिकृतेन सम्राड्-
भृत्येन वै तदजितक्षितिभुग्भटानाम् ।

---

१ अजितनृपभटाना पृष्ठप्रयाणे । २ नव्वाव-सहाय । ३. 'वृद्भ्य स्यसनो' इति परस्मैपदे 'न वृद्भ्यश्चतुर्भ्यं' इतीडभाव । ४ हिंसार्थस्य स्वार्थेऽपि णिच्, वर्त्तमानसामीप्ये भविष्यदर्थे वर्त्तमानवत्त्वम् । हनिष्याम इत्यर्थ ।
५ आत्मकृते आत्मरक्षाहेतवे इत्यर्थ । ६ आजिता अजित(नृप)सबन्धिनो भटा ।

वृत्तं निजाधिपकृने लिखितं च सोऽपि,
ज्ञात्वा स्वचेतसि चिराय रहस्यशोचत् ॥२२॥

औरङ्गजेब इति चिन्तितवान् स्वचित्ते,
नाङ्गीकृत नृपभर्टोहि मया यदुक्तम् ।
प्रस्थाप्य वालनृपति छलतश्च देश,
हत्वाऽचिराद् [1]युधि वहूश्च हृतं यशो मे ॥२३॥

भूयो मरुस्थलगता अपि ते भटान् मे,
काश्चिद् विलुण्ठ्य च निहत्य धरामगृह्णन् ।
भङ्क्त्वाऽथ मस्जिदगणाश्चिरमासतेऽत्र,
नित्य मदीयहृदि शल्यमिवार्पयन्त ॥२४॥

तस्माद् विरोधिसुभटान् प्रथमं निहत्य,
बाल नृपालमुपगृह्य गृहं निवेक्ष्ये[2] ।
नो चेत् सदर्पमिति सत्यवचो ब्रवीमि,
दिल्लीपुरी नहि विशेयमह कदापि ॥२५॥

एतद् विमृश्य हृदि सूनुमकब्बर स
आज्ञापयद् मरुधरा सहसा प्रयाहि ।
सोनङ्गमिहमय दुर्गभट विवध्य,
हत्वाऽपरान् नृपतिबालमिहानयस्व ॥२६॥

द्वाविंशति भटवरान् स नवाबवर्या-
स्तत्सङ्गिन: किल विधाय तहव्वराद्यान् ।
सप्रैषयद् यवनराट् सममुग्रचम्वा,
तस्याज्ञया स मरुभूमिमनु प्रतस्थे ॥२७॥

---

१ दिल्लीये युद्धे इत्यर्थ ।
२ प्रवेक्ष्यामि । 'निविश' इत्यात्मनेपदम् ।

मार्गे प्रयात इति[1] तस्य सहोग्रचम्वा,
द्राग् विद्रुताश्च मरुजानपदास्तदासन् ।
काश्चिद् विलुण्ठ्य च निहत्य च काश्चिदन्या-
नप्यात्मसादकुरुत[2] प्रचुरान् जनान् स ॥२८॥

तत्सिन्धुरव्रजगलन्मदवार्भिरेवाऽ-[3]
नूपत्वमाप सहसैव मरुप्रदेश ।
प्राप्ता अनूपविषया मरुता[4] तदश्व-
प्रोद्धूतभूरितरधूलिचयोच्छ्रयेण ॥२९॥

श्रुत्वागत नृपभटास्तमकव्बर ते,
नाडूलमीयुरपसृत्य ततोऽपि शीघ्रम् ।
तत्रत्यभूधरतटे च सम स्वसैन्यै-
र्वास प्रचक्रुरथ ते क्षितिपालभृत्या ॥३०॥

औरङ्गजेवतनय कतिचित् प्रयाणा-
न्याधाय वर्त्मनि विवेश स गोडवाडम् ।
तत्रोषित सह बलेन चरान् स्वकीयान्,
सम्प्रैषयन्मृगयितु स्वरिपू श्च तत्र ॥३१॥

चारास्तु विष्वगपि[5] बभ्रमुरेव तत्र,
नाडूलभूधरगतान् ददृशुस्तथा तान् ।
भर्त्रे च ते पुनरुपेत्य तथाऽभिचख्यु,
स्वामिन्नितोऽतिनिकटे सुभटा वसन्ति ॥३२॥

श्रुत्वेत्यकव्वर उवाच तहव्वर स
नाडूल-शैलमिहि[6] सैन्यगणैरिदानीम् ।

---

१ इत्थम् । २ आत्माधीनानकरोत्, अधीनवचने साति प्रत्यय ।
३ मदजलै । ४ मरुप्रदेशत्वम् ।
५ समन्तात् । ६ गच्छ ।

योधान् रणे प्रसभमेव विजित्य सर्वान्,
प्रत्येहि चेतसि यदिच्छसि तत् प्रदास्ये ।।३३।।

लब्ध्वा निदेशमथ तस्य सुगृह्य सेना,
स्वीयैश्च सैन्यनिचयै सह स प्रतस्थे ।
चारात्समागतमथाशु निशम्य ते च,
सनह्य सैन्यनिवहै. सहसाभिजग्मु ।।३४।।

व्यूढेषु यावनभटेषु च युध्यमाने-
ष्वेतेषु योधकुलजेषु महाभटेषु ।
सगर्जता प्रहरता च मिथो भटाना,
शब्दोऽभवच्च नदता करिणा हयानाम् ।।३५।।

ऊदान्वयी सुयुयुधे युधि सूर्यमल्लो
म्लेच्छैस्तु भीमतनय. सुगृहीतखड्ग. ।
तान् घ्नन्नरीनभिसरन्ति हि ये पुरस्ता-
दन्ते हतो व्यसुरसौ[1] धरणौ पपात ।।३६।।

जैतान्वयी खलु मुकुन्दसुत प्रवीर,
श्रीराममिह इति हस्तगृहीतखड्ग ।
म्लेच्छाञ्जघान सुबहून् समरे समन्तात्,
सद्दुद्रुवुर्यवनवीरवरा पुरस्तात् ।।३७।।

एतत् समस्तमभिवीक्ष्य पठानशिष्ट[2]
ख्वाजामहमद इहास्त्रभृता वरिष्ठ ।
दूरादुपेत्य हृदि त विशिखैस्तुदन् स
सम्यग् बभौ समरमध्यगत सदश[3] ।।३८।।

---

१. निष्प्राण ।  २. पठानेषु शिष्ट श्राप्त ।
३ कवचीत्यर्थ ।

विद्राव्य वाजिनमथाभ्यपतत् स धीरः,
शक्त्याभिहत्य यवनं विनिपात्य वीरः ।
अन्यान्निहत्य कतिचिद् यवनांस्तथाशु,
तैराहतो भुवि पपात विनिर्गतासु ॥३९॥

गोनङ्ग[1]सिंहसुभटोऽपि मुगलसैन्यं,
दृष्ट्वाभ्युपाद्रवदथाभिगृहीतखड्गः ।
निघ्नन्नरीन् समरसोम्नि पुरः पुरोऽयात्,
त्रस्तास्तु तत्र मुगला विमुखा बभूवुः ॥४०॥

तत्रायर्यौ तमवलोक्य नवाबवर्यो
मत्तेभराजमधिरुह्य रसीदखानः ।
यावद् व्यमुञ्चत शरं स ततोऽभिपद्य
शक्त्याऽवधीद् दृढमसौ तदिभं विनद्य ॥४१॥

चीत्कृत्य शक्तिनिहतः समराद् द्विपेन्द्रो
[2]नष्टस्तदीयसुभटा अपि निर्गतास्ते ।
नष्टास्तु तान् समवलोक्य पुरोऽभिगच्छ-
न्निघ्नन्नरीन् स विबभौ रणकर्मदक्षः ॥४२॥

दुर्गस्तु तावदरिसैन्यगणं प्रपद्य,
निघ्नन् प्रयाति पुरतः स्म परं विनद्य ।
दृष्ट्वा सुदुर्जयतरं रिपुमाव्रजन्त,
त्यक्त्वा रणं तु निजपक्षगणं व्रजन्तम् ॥४३॥

अभ्याययाविह मुगलवरो बलीयान्,
फाजिलखाँ विविधशस्त्रभृता वरीयान् ।
मत्तेभराजमधिरुह्य बभौ सदंस-[3]
स्तीक्ष्णैः शरैरपि रिपूनभितस्तुदन् सः ॥४४॥युग्मम्

---

१ सोनङ्ग । २ पलायित ।
३ सन् शोभनोऽसः स्कन्धो यस्य सः ।

दुर्गं समीक्ष्य तमुपेत्य रणे तु सद्य,
शक्त्याऽवधीत्तदिभमेव दृढ विनद्य ।
फाजिल्लवक्षसि निहत्य तदोग्रशक्त्या,
भूमावपातयदमुं तु महोग्रशक्त्या ॥४५॥

शेषाः प्रदुद्रुवुरथापयश सहित्वा,
दुर्गो मृतं तमरिविग्रहमेव हित्वा[1] ।
भो भोस्तहव्वर[1] कुतोऽस्त्यलमेवमुक्त्वा,
प्रत्याद्रवत्तमथ वैरिगण च भङ्क्त्वा ॥४६॥

दूरात्तमागतमवेक्ष्य तहव्वरो वै,
सैन्यैरुपाद्रवदरिं त्वरयैव सोऽपि[2] ।
विव्याध साश्वमपि तीक्ष्णशरप्रहारै-
श्चिच्छेद तत्करिकरं करवालयष्ट्या ॥४७॥

दुर्गं निरीक्ष्य यवनेन हि युध्यमान,
सोनङ्गसिहवरवीर उपेत्य तत्र ।
सम्राहरत् तदिभमाशु महोग्रशक्त्या,
विव्याध वैरिनिकरानपि बाणपङ्क्त्या ॥४८॥

छिन्ने करे किल स सादिकरी[3] विभग्न[4]
शून्य करेण करभङ्गविमानभग्न[5] ।
नष्टे द्विपे तु सहभर्तरि[6] ते निरग्रा,[7]
संदुद्रुवुर्यवनवीरवरा समग्रा ॥४९॥

नष्टेषु केष्वपि मृतेषु च केषुचित्ते,
हृष्टा बभूवुरजितेशभटा स्वचित्ते ।

---

१ त्यक्त्वा । २ दुर्गोऽपि । ३ सादी गजारोही(तहव्वर )तत्सहित करी ।
४ पलायित । ५ करस्य शुण्डाया भङ्गस्य यो विमानोऽपमानस्तेन(हेतुना)
भग्न नष्ट इवेत्यर्थं । ६ समासान्तविधेरनित्यत्वात् 'नद्यृतश्चे'ति कबभाव ।
७ प्रधानरहिता ।

जित्वा सुदुर्जयरिपून्जयशब्दमुच्चै-
राघोषयञ्जयरवं तु तदा तयोच्चैः ।।५०।।

पश्चात्तु वीटणिमुपेत्य ततः स्थलाच्च,
संलुण्ठ्य तत्र शकटानि च शार्कराणि ।
श्रीमेडतापुरमुपेत्य न्र गृहीत्वा,
ते प्रस्थिता पथि विलुण्ठितदृप्तपान्था ।।५१।।

कृत्वा प्रयाणमथ डिडपुर[1] प्रपद्य,
तस्योपशल्य[2] उपलुण्ठ्य सिताभृतोष्ट्रान् ।
लक्षार्धमत्र[3] यवनादुपदा[4] गृहीत्वा
ते जग्मुराशु फलवर्धिपुरीं मनोज्ञाम् ।।५२।।

तस्या ते कतिचिद्दिनानि समुल स्थित्वा ततः स्वेच्छया,
सम्यग् वस्तुचय तयोष्ट्रनिकरान् क्रीत्वा महावेगिन ।
विष्वग् जानपदेभ्य ऊरुजजनादिभ्य[5] करांस्तेजसा,[6]
गृह्णन्त क्रमतस्तत प्रचलिताः श्रीगोडवाड ययु ।।५३।।

इति श्रीजगज्जीवनभट्टविरचिते
अजितोदये महाकाव्ये खेतामरयुद्धवर्णन
नाम दशम सर्ग समाप्त ।

---

१ डीडवाना' पुरम् । २ ग्रामान्त उपशल्य स्यात् इत्यमर ।
३ अत्र डिड (डीडवाना)-पुरे । ४ उपहारम् ।
५ वैश्यलोकादिभ्य । ६ प्रभावेण ।

# एकादशः सर्गः

औरङ्गोऽपि पराजयं निजसुतस्याकर्ण्य रुष्टोऽब्रवी-
न्नूनं तत्र तहव्वरः सुजरठो युद्धे कथं नो मृतः?।
किं तेनाऽशितिकूर्चकं[1] धृतवता किं वा चिरं जीवता?,
युद्धात्तेन पलायितेन सुयशोहानिः कृता मेऽपि हा! ॥१॥

चारस्तावदुपेत्य सर्वयवनेशायावदत् साञ्जलिः,
स्वामिन्! बालनृपालवीरनिकरः श्रीमेडतानं करम् ।
संगृह्याथ च डिडवाणनगराद्रुष्ट्रान् सितामनृता-
ल्लक्षार्धद्रविणं सुगृह्य भवतः कोशाच्च दूरं गतः ॥२॥

श्रुत्वैनत् पुनरेष चेतसि परं जज्वाल कोपाग्निना,
म्लेच्छेन्द्रः सुचिरं विमृश्य सचिवान् पृष्ट्वा स्वकीयान् द्रुतम् ।
अन्यत् सैन्यमितो बहु प्रहितवान्मेवाडमागत्य तद्,
दिल्लीशस्य सुतः प्रपद्य च तदाज्ञप्तं च तत्र स्थितम् ॥३॥

कस्मिंश्चिद् दिवसे त्वकब्बरभटः प्राक् चिन्तयित्वा हृदि,
संध्यर्थाय तहव्वरेण विजने मन्त्रं सयत्नं व्यधात् ।
भृत्यं ताजमहम्मदं तु सुतरां संबोध्य चाज्ञप्तवा-
नित्थं भोः! अजितक्षितीशभटयोर्गत्वा समीपे वद ॥४॥

धृत्वाज्ञां शिरसीति सोऽल्पयवनैः सार्द्धं समासाद्य तौ,
वीरौ प्रागभिनम्य भर्तृगदितं वाक्यं तदोचेऽखिलम् ।
भो बालक्षितिपाल-वीरतिलकौ! कृत्वाऽद्य संधिं मया,
साहाय्यं कुरुतं बलेन यदहं पित्रा युयुत्सेऽधुना[2] ॥५॥

निःशङ्कं हृदयं युवां प्रकुरुतं पैगम्बरेभ्यः शपे,[3]
युष्माभिः सह चेदहं वितनुयां विश्वासघातं मनाक् ।

---

१ 'अशिति शुक्लम्, शिती धवलमेचकौ' इत्यमरः, कूर्चकं श्मश्रु । २. योद्धुमिच्छामि
३ 'श्लाघहृङ्स्थाशपां' इत्यादिना सम्प्रदाने चतुर्थी । 'शप उपालम्भे' इत्यात्मनेपदम्

दिल्लीशात्मजभावमेतमुदितं स प्रोच्य चोचे स्वयं,
नेताऽकब्बर एष योधपुरराट्-साहाय्यमत्रेच्छति ॥६॥

श्रुत्वैतद्गदितं स्वचेतसि चिरं ध्यात्वाऽभिमन्त्र्याऽप्यमू,
स्वस्थानादपसृत्य तेन सह चौरङ्गात्मज प्रापतु. ।
तैरैक्यं स विधाय मूर्धनि पुनर्धृत्वातपत्रं पर-
म्पृथ्वीशत्वमवाप्य सैन्यनिकरै: सार्धं प्रतस्थे तत ॥७॥

गच्छन्त पथि ते सहाऽपि पृथगेवाऽयुर्हि तत्सैन्यतो
म्लेच्छास्तान्न विशश्वमुश्च मनसा सोनङ्गदुर्गादय ।
सार्थात् कोऽपि वियुज्य चेत्त् यवनस्तानागमत् त तदा,
ते जघ्नु खलु निर्भयास्तदधिप श्रुत्वाऽपि नामन्यत ॥८॥

शत्रूभूय समागत निजसुत श्रुत्वा स औरङ्गक-
श्चित्तेऽचिन्तयदा[1] किमेतदिति भो जात ह्यतीवाद्भुतम् ।
आहर्तुं यशवन्तमिहतनय त्वाज्ञापयं यं सुत,
सोऽप्यालम्ब्य तदीयसैनिकबल हन्तु समायाति माम् ॥९॥

किं कर्तुं परिवाञ्छित खलु मया दैवेन हा किं कृतं ?,
सचिन्त्येति करौ विमर्द्य विदशन्नोष्ठौ च धुन्वञ्शिर ।
म्लेच्छेन्द्रोऽचिरमस्तिखाँप्रभृतिकानाज्ञापयद् मन्त्रिण,
सनह्याशु रणाय समुखमितो गन्तव्यमेवाधुना ॥१०॥

प्रस्थायाथ सम स्ववर्ग्ययवनैर्द्यौराथिकामाप[2] स
तत्राऽस्थाज्ज्वलदग्नियन्त्रनिकरै रक्षन् स्वकीयं बलम् ।
चारैस्तत्र तदा निवेदितमिति प्राप्त. सुतस्ते प्रभो,
डूमाडाह्वयमेत्य तावदपि[3] स स्वीयैरुवासाऽखिलै ॥११॥

---

१ आ इति कोपे पीडाया च । २ देवराईग्रामम् ।
३ तत्पुत्र ।

एवं तत्र तयोः प्रयत्य वसतोरस्तं गते भास्करे,
ध्यात्वौरङ्ग उपाह्वयत्तहवर नव्वाबमालोभयन् ।
स वृत्तान्तमवेत्य चाजितचरा व्यज्ञापयन् स्वान् भटा-
ञ्श्रुत्वा तेऽपि सयत्नमुक्तमिति तैः स्वान्ते तदाचिन्तयन् ॥१२॥

यस्यैतस्य तहव्वरस्य वचसाऽस्माभिर्हि सधि कृतो
दिल्लीशाधिपतेः समीपमगमत् सोऽस्मानपृष्ट्वैव चेत् ।
तर्हि च्छद्ममयोऽस्ति सधिविषयो ज्ञात[1] पितापुत्रयो-
स्तस्मादेव विहेय[2] इत्यकबर त्यक्त्वा भटास्तेऽगमन् । १३॥

तावत्तत्र तहव्वरोऽपि सहसा म्लेच्छाधिपस्यान्तिक,
जालद्वारमुपागतस्तदधिपः श्रुत्वा तदाज्ञापयत् ।
नि शस्त्रोऽन्तर[3]-मेत्वसावपरथा तत्रैव समार्यता-
मित्युक्तेऽपि जहौ न तानि[4] स तदाऽसौ गुर्जभृद्भिर्हत ॥१४॥

श्रुत्वाकव्वर आशु तं[5] हतमथो सनिर्गतांस्तान् भटान्,
निर्गत्य स्वजनैर्विमुच्य वसनावास च सोपस्करम् ।
गृह्णन् सारमुपेत्य चाजितभटान् स्नेहाद् ययौ तैः सह,
तच्छ्रुत्वाऽथ वहादुर यवनराट् तत्पृष्ठग प्राकरोत् ॥१५॥

ते सर्वे समुदित्य[6] सत्वरमगुर्जालोरसज्ञ पुर,
सगृह्याशु कर वहादुरमथ श्रुत्वाऽऽगतं त ततः[7] ।
आरुह्याशु तुरङ्गमाश्च यवनान् कांश्चित्तु तस्याग्रगान्,
हत्वा शीघ्रमितः प्रयाय च ययु नाचोरसज्ञ पुरम् ॥१६॥

तत्पृष्ठ स वहादुर पुनरपि प्रत्याययौ तत्र ते,
तं दृष्ट्वागतमाशु संयुयुधिरे वीरा हि साकव्वरा ।

---

१ समत । २ त्याज्य ।
३ अभ्यन्तरम् । ४ शस्त्राणि ।
५ तहव्वरम् । ६ ते सर्वे अकव्वरसहिता दुर्गदासोनङ्गादय समुदित्य समुदाय-रूप धृत्वेत्यर्थ । ७ देवराईग्रामात् ।

युद्ध्वा [1]चैत्यवराश्रयोह सहदेवाख्यो द्विजः सगरे.
कायस्थान्वयजौ निपेततुरथो वीरौ मुकुन्दाभयौ ।।१७।।

हत्वा तद्‌यवनांश्च कांश्चन तथा ज्ञात्वाऽपरान् विद्रुतान्,
साचोरादपसृत्य काममगमन्[2] श्रीरोहिका[3] सङ्कटा ।
सध्यर्थं सुविमृश्य भृत्यमथ तान् संप्राहिणोदालम ,
सोऽप्यागम्य ततोऽब्रवीत्तदुदित वाक्य तदाकव्वरम् ।।१८।।

भ्रात ! किं भ्रमसि त्वमत्र निवसेरस्मद्भुजासश्रितो
गच्छाव. पितुरन्तिकं त्विति स च श्रुत्वाभिमन्त्याऽथ तं ।
वीर भ्रातुरथान्तिकं प्रहितवान् संबोधयन् स्वाशयं,
चान्द्य वं मुहकम्मसिहतनय धीर हरीन्द्राभिधम्[4] ।।१९।।

सोऽप्यागम्य तमब्रवीत् सतनय स्व गौरव दर्शयन्,
देयो नो वलिरत्र[5] सधिरनु[6] च स्यादावयोः सर्वथा ।
देशं कालमथो विचिन्त्य स तु तं भूपाम्बरैस्तोषयन्,
द्राग् दीनारचतुस्सहस्रममलं दत्त्वा तत प्राहिणोत् ।।२०।।

गत्वा तेभ्य इद धन हरिरदात्, ते तच्च लब्ध्वा तत ,
प्रत्याजग्मुरथार्बुदाद्रिनिकटे तत्रोषुरेका निशाम् ।
मोनङ्गेन सहाभिमन्त्य किल तद्द्देशप्रबन्ध भटा-[7]
[8]स्तस्मायेव समार्पयन् निजनिजं वासं च सर्वे ययु ।।२१।।

ज्ञात्वेतीन्द्रनृपो वहादुरमगात् स्वीयैस्तु सैन्यै. समं,
श्रीमद्द्योधपुर तमागतमथ श्रुत्वा समाहूय च ।
म्लेच्छानामधिपेन तं निगदतेत्येव महोपद्रव ,
सर्वस्वत्कृत एव धिग् धिगिति च प्रोच्याधिकारो हृत ।।२२।।

---

१ मन्दिराश्रयी (देवपूजक)। २ यथेष्टम् ।
३ मिरोहीनगरीम् । ४ हरिसिंहम् ।
५ (मोऽस्मभ्य) वनि कर (देय) इति योजना । ६ पश्चात् ।
७ दुर्गदासादय. । ८ मोनङ्गायैव ।

दत्तं योधपुर शिवनायतनवावायाथ सोऽपि स्वयं,
स्थित्वा काशिमखानवावमचिरात् सम्प्रैषयत् तत्पुरे ।
म्लेच्छै सार्धमथोपगम्य स पुरं सम्यक् शशासाखिल,
तत्रत्येषु च सादिनः[1] प्रहितवाञ्शाखापुरेषु द्रुतम् ।।२३।।

म्लेच्छेन्द्राग्रजनन्दनेन सहसा श्रीरोहिकामेयुषा,
पृष्ठेऽनुव्रजिता हि पालनपुर गत्वाऽजितीया भटा ।
सगृह्याशु करं ततोऽपि चलिता ग्रामं वृहद्ग्रामक[2]
त्यक्त्वा पृष्ठत एत्य च स्ववसतिं चक्रु स्थिरावादके ।।२४।।

तत्राकर्ण्य वहादुर ह्युपगत दुर्गोऽथ साकव्वर,
सनह्याशु गतः शिवायनगढ कृत्वा च किंचिद् रणम् ।
श्रीरोही च ततोऽभिगम्य सुभट मोनङ्गमिहाभिध,
संगत्याऽथ मरुस्थलीयसुधुरां तस्मिन् समारोपयत् ।।२५।।

दुर्गस्तु स्वभटै प्रयाय कतिभिश्छिन्नाम[3] साकव्वरो
मेवाड तदधीश्वराच्च सहसा सगृह्य सम्यग् धनम् ।
निर्गत्यापि ततोऽन्वह पथि चरन् रेवा समुत्तीर्य स,
प्रापद् दक्षिणदिग्मणि नरपतिं शम्भु शिवाख्यात्मजम् ।।२६।।

श्रुत्वा दुर्गमकव्वर च स उपायात विमृश्य स्वय,
प्रोचे स्व कलशाह्वय कविवर सम्मन्त्रिण वै बुधम् ।
देशे न सुकवे! प्रवेश उचितो नाऽन्या प्रदातुं क्वचि-
च्छ्रुत्वैतद्वचनं जगाद स कविः स्वामिन्! वचः श्रूयताम् ।।२७।।

दिल्लीशस्य सुतस्तथाऽजितभटस्त्वत्पार्श्वमायाद् यदि,
संमानेन निवेशनेन च तयोर्वर्धिष्यते ते यश ।

---

१ अश्वारोहान् ।                    २ 'वटगाव' इति प्रसिद्धम् ।
३ नामेत्यध्ययमत्र प्राकाश्ये ।

श्रुत्वैतत् सुकवेर्वचोऽतिगहनं प्रोवाच शभुर्वचो,
यत्ते चेतसि चिन्तित समुचित तत् सम्यगेवाचर ।।२८।।

समानेन पृथक् स्वकीयपुरतो यद् गूढमासीत् स्थल,
तत्राहूय तु तौ निवेश्य कविना भूषाम्बरैस्तोषितौ ।
लब्ध्वा हेम धन तथा सुबहुलं रत्नानि चाश्वान् पुनः,
स्वेच्छापूर्वकमेव तत्र ससुखं संमानितावूषतुः ।।२९।।

म्लेच्छेश स्वसुत तथाऽजितभटं ज्ञात्वा गत दक्षिणा,
मुक्त्वा पौत्रमजीमसंज्ञमथ नव्वावास्तिखासज्ञकम् ।
हस्तप्राप्यमपोह्य[1] सत्वरतया मेवाडभूमीश्वर,
स्वीयैर्म्लेच्छभटैर्युतो यमदिश क्रुद्ध प्रतस्थे स्वयम् ।।३०।।

सोनङ्ग स्वयमत्र मारवभटै सगम्य सर्वत्र च,
गृह्णन् ग्रामकरान् विनिर्गत इति श्रुत्वा स्वसैन्यै समम् ।
श्रीमान् केशवदासवशतिलक श्रीमेडतीयान्वयी,
वीर श्रीमुहकम्मसिह इति च प्रत्येत्य तं सगत ।।३१।।

वीरौ पु जलतामरे[2] सह भटैरेत्य स्थितौ तत्र च,
विष्वग् जानपदेभ्य आहृतवलौ तावादिशातां[3] करम् ।
श्रुत्वोपद्रवमागत विमृशति स्मेत्यस्तिखाँ संभवे-
च्छान्तिश्चेदिह देश एष नियत दीयेत तेषा कृते ।।३२।।

सोनङ्गाय तथाऽलिखद्दलमसौ[4] बुद्ध्वा च सोऽमन्यत,
तावद् दैववशात् स[5] मृत्युमगमच्चाकस्मिकोपद्रवात् ।
कृत्वा दैहिककर्म तस्य निखिलं भ्राता[6] तदीये पदे,
संस्थाय स्वयमन्वशाद् भटचमूं तद्भ्रातृवर्यो यथा ।।३३।।

---

१ त्यक्त्वा ।    २ नन्नामके ग्रामे ।
३ गृहीतवन्तौ ।    ४ स्वकीयविचारगर्भितमिति भाव ।
५ सोनग ।    ६ अजव(सिंह)नामा भ्रातेत्यनन्तरपद्यात्प्रतीयते ।

सेनानीत्वमुपेत्य तत्र च ततो झाडोदमेत्याजवः,
खाखोलीमनुलुण्ठ्य विश्वगपि स ह्यादाय सम्यक्करम् ।
प्राप्तो डिडपुरं च तत्र समशाद्[1] यो दीनदाराभिध-
स्तेनापि स्वधनं घनं विनयतो दत्वा स निर्वर्त्तितः[2] ॥३४॥

तावन्म्लेच्छजनान्विता सुबहुला सेना प्रगृह्यागत-
स्तत्पृष्ठे तु नवाबसत्पदयुतश्चेह्तारखाँ-सञ्ज्ञकः ।
वीरास्ते तु [3]कुमुम्भमेत्य मिलिता एकक्षपाभ्यन्तरे,[4]
सयोद्ध्रुं किल पञ्चविंशतिसहस्राऽभ्युन्मिता मोडरे[5] ॥३५॥

[6]तस्माच्छैल-भवाक्षि-वारिधि-शशाङ्का(१४३७)ङ्कोन्मिते वत्सरे-
ऽप्यूर्जे[7] कृष्णदले तु शम्भुदिवसे[8] प्रातः समागम्य च ।
लुप्त्वा सार्धदिनावधि प्रसभतः[9] श्रीमेडताख्यं पुरं,
निर्गत्याथ ततः प्रचेलुरखिलाश्चेंदावडिग्रामके ॥३६॥

पारीकद्विजपुङ्गवेन च तदा श्रीगोलवालेन वै,
तत्रत्येन गदाधरेण पुरकं[10] डागावसं रक्षितम् ।
निर्यातेऽजिनमित्रसैन्यनिकरे प्रागात्तदेह्यारखाँ-
नव्वाब किल तत्र रात्रिमुषितः सन् प्रस्थितोऽहर्मुखे ॥३७॥

वीरास्ते तु गदाधरस्य चरतो[11] ज्ञात्वाऽऽगतं वैरिणं,
सन्नह्याशु ततोऽपसृत्य च ययुर्म्लेच्छोऽपि तत्पृष्ठगः ।
भूत्वा वै पथि संचरन्नधिगतस्तान् डींगराणाह्वये,
ग्रामे तेऽपि निरीक्ष्य वैरिनिचयं तस्थू रणायोत्सुकाः ॥३८॥

---

१ समशात् अधिकारी आसीदित्यर्थः । २ विसर्जितः ।
३ कूमूं वो ग्रामम् । ४ एकस्यामेव रात्रावित्यर्थः ।
५ मोडराख्यग्रामे सयोद्धुमित्यन्वयः । ६ मोडरात् ।
७ कार्तिके । ८ चतुर्दश्याम् ।
६ हठात् । १० अल्पार्थे कः प्रत्ययः ।
११ चरात् ।

म्लेच्छस्तान् पुरतः स्थितान् रिपुगणान् वीक्ष्यादिशत् सेवक,
स प्रामूमुचदग्निबाणमरिषु प्रेक्ष्याथ ते त मुदा ।
विद्राव्याश्वमदिद्रवस्तमरिषु म्लेच्छेषु तावत् क्षितौ,
सभग्नोऽजवसिंहवाजिचरणस्तेनाऽपतत् स स्वयम् ।।३९।।

दृष्ट्वा मुख्यभटं पुरो निपतित म्लेच्छैरुपेत्याहत,
ज्ञात्वा तेऽपि पृथक् पृथग् युयुधिरे क्रोधोद्धता सर्वत· ।
युद्धे वीरमुहोकमश्च युयुधे निघ्नन् रिपून् मध्यतो
भूत्वा व्यङ्गशरीर एव पुरत सनिर्गतो दूरत· ।।४०।।

चांपेय· सबलो[1] बलेन सहित खानात्मजोऽप्याहवे,
दृष्ट्वा सैयदसैन्यसघमथ त सर्दारखांमिज्ञकम् ।
विद्राव्याश्वमनुद्रुतो रिपुगणान् हिसन् सुतीक्ष्णासिना,
यावच्छूरयते[2] तदेक्ष्य यवनास्त्रस्ता दिशोऽदुद्रुवन् ।।४१।।

सर्दार स्वबल निरीक्ष्य कियदप्याराद्[3] द्रुत युद्धत ,
स्वीयैर्भ्रातृवरैस्तु सपरिवृतो बाणैर्जघान द्विषः ।
वीरस्त प्रहरन्तमेक्ष्य परित सद्योऽसिनाऽघातय-
च्छित्वा तस्य स[4] वर्म चैलनिचय पस्पर्श चाङ्ग परम् ।।४२।।

कालूखा-बहलोल-दोस्त-महमद्-सज्ञास्तु तद्भ्रातर-
स्त वीर समुपेत्य जघ्नुरसिभिर्बाणैस्तथैवाऽपरे ।
खड्गेन त्वरयाभिगम्य स ततस्तेषा शिरास्यच्छिनद्,
यावत्तैर्निहतोऽरिभिर्निपतितो रेजे च भेजे दिवम् ।।४३।।

चापेयोऽथ महेशदासतनयो युद्धे विनिघ्नन् रिपून्,
[5]सासिश्चाऽजवसिंह एत्य यवनैरभ्याहतश्चापतत् ।

---

१ चांपावत सबलसिंह २ वीरता दर्शयत इत्यर्थ .
३ आराद् दूर द्रुत पलायिनम् । ४ सोऽसि ।
५ सखड्ग ।

जित्वा मैडतिकोऽथ भीमतनयश्चानन्दसिंहो रिपू -
स्तंश्छिन्नाङ्ग उपागमन्निजगृहं स्वीयैं सुभृत्यैर्वृत. ।।४४।।

चाँदिमोंहकमात्मजोऽपि च हरीसिंहाभिधानो भटो
वैर्यम्यन्तरतोऽभिभूय यवनान् स्वस्थो गृहानागमत् ।
सर्वेऽपि स्वबलाधिप निपतितं दृष्ट्वाऽजवाख्य रणे,
निर्गत्य स्वगृहाण्यभीयुरथ ते म्लेच्छा अपि प्रत्ययु ।।४५।।

वीरैं कैश्चिदुपागतैस्तत इतस्तत्र स्थितैश्चान्वित,
सर्वैं समतमेव वीर उदयश्चॉपिस्तु धीरात्मज ।
सेनानीत्वमुपेत्य बालनृपतेर्धृत्वा पताका पुरो
जालोर पुरमागतस्तत इत सगृह्य दर्पात् करम् ।।४६।।

हाडादुर्जनसिंहनामक इह स्वीयैर्भटै सयुतो
राठोडोदयसिंहमाप च ततो गत्वाऽथ ते मॉडलम् ।
लुण्ठित्वा मरवाडनाम नगर तोडाख्यमालुण्ठ्य च,
लुण्ठित्वा नगर कदाप्यथ वटोपान्ते सुखेनाऽवसन् ।।४७।।

आसीद् म्लेच्छपतेस्तु कोऽपि यवनो भृत्यो भटो नूरखाँ,
लब्ध्वाऽसौ जयतारग किल पुर शास्ति स्म गर्वोद्धत ।
तत्रत्यान् स्वभटै सम स नितरामूदावतोपाह्वया-
नाक्रामत् सभटानुगाश्च कतिचिद्दण्डेन चापीडयत् ।।४८।।

इत्थ सोऽनुदिन सम निजभटैर्वीर्याभिमान दधद्-
दुर्धर्षो निरनुग्रहोऽधमतयाऽल दुर्निवारोऽरिभि ।
भुड्क्ते स्माऽसिवलेन हन्त जयतारण्य तदा नूरखाँ,
स्वीया मल्लमुगल्लबन्धुसुहृदा सेना महोग्रा वहन् ।।४९।।

ऊदावज्जगरामनामकभट कैश्चित् कदाचित् सम,
स्वैं सैन्यैर्जयनारग नृपपथेनानुप्रविश्य द्रुतम् ।
दुर्गान्ति प्रतिपद्य तत्र यवनान् हत्वा च तत्र स्थिता-
नालुण्ठद् द्रविण तथाश्वनिकरानुष्ट्राश्च सोपस्करान् ।।५०।।

द्रुर्गाच्चाथ निरित्य नागरजनान् संमान्य तौ सत्कृतो
भूपाज्ञामभिघोष्य तत्र हि पुरे दत्त्वा च तेभ्योऽभयम् ।
वीराग्र्यो जयदुन्दुभि [1]बधिरिताऽरिश्रोत्रमुन्नादय-
न्नुच्चैर्मागधवन्दिभिः परिणुतः प्रीत्या ययौ स्वं पुरम्।।५१।।

राठोडान्वयजैर्भटैरिह मरुक्ष्मामण्डले सर्वत,
पौराज्ञानपदास्तथा च पथिकाँल्लुण्ठद्भिरेव सदा ।
ग्रामाः [2]खेटकखर्वटाश्च बहुला नष्टाश्च पन्था अपि,
तन्नो सार्थमृते कदापि चरितुं पान्थ पथि प्राभवत् ।।५२।।

श्रीमद्योधपुरं स्म शास्ति च मरुक्षोणीमिनायत्तखाँ-
नव्वाबोऽजयमेरुमप्यथ यदा श्रीमेडताख्यं पुरम् ।
चाँपेय. सबलात्मजस्तु विजयो[3] म्लेच्छे तदानीं जने,
कास्ये विद्युदिवापतत् प्रतिपदं व्यालुण्ठ्य च ध्वस्तवान्।।५३।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये एकादश सर्ग
समाप्त ।

---

१. बधिरितानि बधिरीकृतानि अरीणां श्रोत्राणि कर्णा येन स,तम् (जयदुंन्दुभिम्)
२ 'खेडा' इति प्रसिद्धा लघुग्रामा खेटका । खर्वटास्तु 'एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् । मिश्रं तु ख (र्व) र्वटो नाम नदीगिरिसमाकुलम्' ।। इत्युक्त-लक्षणा ग्रामविशेषा । ३ विजयसिंह ।

# द्वादशः सर्गः ।

सन्त्युग्रास्तु सुता इनायतनवाबस्य त्रयस्तेष्वपि,
ज्येष्ठो नूनमुवास फाजिलअली प्राप्याजमेर तदा ।
मध्यो नूरमली स्म धावति मरौ चान्त्यो महम्मद्अली-
रासीद् य स तु मेडताह्वयपुरं प्राप्यावसत् संततम् ।।१।।

यौविश्चापि मुकुन्ददासतनयो भूभृत्तु वास भजन्,
क्षत्रैर्भिल्लगणैर्युतोऽप्युदयभाणाख्योऽभिगर्ज्जन्नयैः ।
य शास्ति स्म हि भादराजनिपुर वीराग्रणी सर्वदा,
नव्वाब गणयत्यसौ न किमपि प्रौढ मद धारयन् ।।२।।

वीर त तु कदापि दर्पजयिनौ प्रौढौ नवावात्मजौ
श्रुत्वा नूरमलीमहम्मदअलीसञ्ज्ञौ सदा प्रोद्धतौ ।
स्वीयैर्म्लेच्छवरैर्मु गल्लनिकरै [1]पौर्वैस्तथाऽऽजग्मतु-
स्तद् विज्ञाय तु भिल्लका गिरितटे लीना बभूवु क्वचित्।।३।।

म्लेच्छावेत्य तु तत्र सैन्यनिकरै पौर्वै पुरोयोधिभि -
सार्ध पावकयन्त्रवक्त्रनिरितान् गोलान् प्रचण्डान् मुहु ।
तस्मिन्निन्द्रजयन्तकाविव सुरैर्वज्रान् नगेऽवर्पता[2],
तावत्तत्र भटा बहिर्भ्रंगिति निर्गत्यापतस्ते तदा ।।४।।

सग्रामो यवनैरभूत् प्रथमतो दूरात्तथाऽन्ते तु स,
विद्राव्याश्वमथ व्रजन्नुदयभाणाख्योऽपतद् वैरिषु ।
खड्गेन द्विषता शिरास्यपहरस्तत्स्वामिवर्यान्तिक,
गत्वा तत्करिहस्तमच्छिनदिभो भग्नश्च चीत्कृत्य स ।।५।।

भग्न तद्द्विरद निरीक्ष्य सुभटास्तस्य[3] द्रुत प्रागता-
स्तीव्रैर्बाणगणै प्रजघ्नुरथ तान् प्रोत्सार्य सच्चर्मणा[4] ।

---

१ पूर्वदिग्भवैरित्यर्थ । २ तस्मिन् नगे शैने इन्द्रजयन्तकौ सुरै (मरु) वज्रानिव सैन्यनिकरै सार्ध गोलानवर्षतामिति योजना । ३ यवन-स्वामिन । ४ सता प्रशस्तेन चर्मणा फलकेन (टाल इति ख्यातेन) ।

शक्त्या तत्करिमूर्ध्नि स प्रहृतवांश्चापातयद्धस्तिपं,
भ्रान्त्वा तावदिभः ससार समराच्चोत्क्रुत्य शैलाद् बहिः ॥६॥

भग्नौ तावुपलक्ष्य[1] तेऽपि यवनाः सर्वे पलाय्याऽगम-
स्त्यक्त्वा तत्र तु वह्नियन्त्रशकटानुष्ट्रांश्च सोपस्करान् ।
भिल्लास्तान्[2] परिलुण्ठ्य तांश्च मुमुचुः प्राणावशेषान् परा-
ञ्जित्वा म्लेच्छचमूं जयानकगणं सोऽवादयत् सर्वतः ॥७॥

म्लेच्छौ तावपसृत्य तद्रिपुपदात्[3] प्राणावशेषौ ततः,
सधाव्याशु ससाध्वसौ कतिपयैर्म्लेच्छैर्युतौ सार्थगैः ।
म्लानौ योधपुरं ह्यु पस्युपगतौ पार्श्वे पितुस्तिष्ठतो
वृत्तान्तं निखिलं विरोधिविहितं खिन्नौ शनैः प्रोचतुः ॥८॥

वृत्तान्तं तदुदीरितं निखिलमाकर्ण्य त्विनायत्तखा-
नव्वाबः पुनरब्रवीत् स नितरामालिङ्गय गाढं सुतौ ।
भो भो! भाग्यवशादिहाद्य सुभगौ दृष्टौ मयाऽहो! युवां,
दुष्टास्तत्र चिरं वसन्तु खलु तैः कार्यं युवाभ्यां नु किम् ॥९॥

औरंगानुचरोऽस्त्यमीरुलनवावाग्र्यः स्म यो मीरखा-
नाम्ना सुप्रथितः स काबुलपुरे त्वन्येऽपि तत्सङ्गिनः ।
नव्वावा बहवोऽवसन् हि यवनाधीशाज्ञया तत्र तु,
तेष्वेको रणजिन्नवाबपुरदिल्खानामधेयो जयी ॥१०॥

नव्वावस्य पुरः स्थितैस्तु निखिलैरेवं श्रुतं कर्हिचित्,
नूनं हन्त ! मरुस्थलीयविषमस्थानेषु यत् केषुचित् ।
सम्राजः किल शासनं द्रढयितुं शक्ता न तत्सेवका
वीराः क्षत्रकुलस्य तत्र बहवो गर्जन्ति चोर्जन्ति[4] यत् ॥११॥

---

१ नूरअली-महम्मद अली नामानौ । २ उष्ट्रादीन् ।
३ तस्माद् रिपुपदाद् वैरिस्थलात् । ४ वीरता दर्शयन्ति ।

श्रुत्वैव पुरदिल्लखांभटवर प्रोच्चैर्विहस्याचिराद्,
गर्जन् वाक्यमिदं जगाद सदसि श्रीमीरखासंज्ञकम् ।
देशोऽयं मरुसञ्ज्ञक खलु कियन्मात्रोऽस्ति यत्र प्रभो-
राज्ञा न प्रचरेदसावपि[1] पुनर्द्रागात्मसात्[2] स्यादहो ।।१२।।

औरङ्गो यदि माऽऽदिशेद्[3] मरुधरा त्व याहि शत्रून्जहो-
तीशाज्ञामधिगम्य तर्हि सहसा गत्वा भटान् घातये[4] ।
एव सन्ति हि यत्र-यत्र सुभटा हत्वाशु तानाहवे,
तज्जाया अभिगृह्य ताश्च यवनो- कृत्वाऽपरेभ्यो ददे ।।१३।।

श्रुत्वैवं वचन तु तस्य सदसि प्रोच्चै स्वरं गर्जत,
प्राहेद वचन ह्यमीरुलनवावाग्य सुमत्कृत्य तम् ।
सत्य ते पुरदिल्लनाम यदि भो! गत्वा करिष्यप्यद
आनाय्याधिपतेर्निदेशमिह त ते दापयिष्याम्यहम् ।।१४।।

गर्जन् वाक्यमिद जगाद स मरुक्षोण्यां हि ये ये भटा-
स्तास्तान् बाहुबलेन हन्मि च ततस्त्वादाय तत्तद्व्रज ।
कृत्वा ता यवनीर्हठादनुचराग्र्येभ्य प्रदास्येऽखिला
नो कुर्यामिनि चेदह पुनरियाम्[5] नो खानजादास्यताम् ।।१५।।

नव्वाबो विनिशम्य तस्य वचन त्वेतत्प्रतिज्ञात्मक,
नून चेतसि वीक्ष्य तस्य वचन श्रीखानजादान्वये ।
मात्सर्यं च विलोक्य तस्य नितरा शौर्यं च धैर्यं पुनः,
प्राहेद वचन स तत्र सदसि श्रीमीरखासज्ञक ।।१६।।

जानेऽह तव पौरुषाणि पुरदिल्[1] किं त्वत्पुरो वच्म्यह,
प्रोक्तं चैकगुण सहस्रगुणितं त्व वै करिष्यस्यलम्[6] ।

---

१ मरुदेशोऽपि । २ आत्मसात् स्यात् आत्माधीनीभवितु शक्नोति । शक्यर्थे लिङ् । ३ मा माम् ।
४ हिमार्थेन्द्र स्वार्थेऽपि णिच् । ५ इयां प्राप्नुयाम् ।
६ पर्याप्तम् ।

सत्यं त्वत्कथितं मृषा न किमपि त्वं वीरवर्योऽस्यलं,[1]
वीराणां किमु दुष्करं ननु भवेच्छूरैरसाध्यं किमु? ॥१७॥

इत्युक्त्वा च विचिन्त्य चेतसि परं श्रीमीरखासंज्ञकं,
सोऽमीरुल्लुमरेति-सत्पदधरः कावुल्लनाम्नः पुरात् ।
सर्वं लेख्यमथाभिलिख्य विधिवद् विज्ञप्तिपत्रं मुदा,
प्रादान्म्लेच्छजनाधिपाय विनयात्तूर्णं स्वहार्दान्वितम् ॥१८॥

औरङ्गोऽपि विबुध्य पत्रलिखितं तस्याशयं सत्वरं,
प्रादात् स्वीयकृपात्तपत्रमुचितं कावुल्लसंवासिने ।
भो भो योधपुरं त्वमेहि पुरदिल्[1] स्वीयैर्वृतः सैनिकैः,
कावुल्लान्मरुदेशशासनकृते स्वल्पैर्विरामैर्गते[2] ॥१९॥

गत्वा तत्र मरुस्थले सुविषमस्थानेष्वशङ्कं स्थिता-
न्नूनं वीरवरान् नृपाजितभटान् हत्वा रणे दुर्मदान् ।
तत्तत्स्त्रीश्च हठात् सुगृह्य यवनीश्चेत् कारयिष्यस्यलं,
तद्देशीयमधीनराज्यमखिलं तुभ्यं प्रदास्ये तदा ॥२०॥

दिल्लीशस्य निदेशमेनमवधार्याधार्य मूर्धन्यथो,
नव्वाबः पुरदिल्लखाभटवरः श्रीमीरखासंज्ञकम् ।
नव्वाबं ह्यभिवाद्य तत्र विधिवत् प्रीतिं परां प्राप्य च,
कावुल्लान्निजबन्धुवीरनिकरैर्युक्तः प्रतस्थे ततः ॥२१॥

सार्धद्वन्द्वसहस्रयोधनिकरैरेकैकतश्चाधिकै-
रभ्येत्य त्वरया मरुस्थलमथ प्रोत्कर्षमुच्चैर्वहन् ।
गर्जत्कुञ्जरसादिपङ्क्तिसहितो[3] दीप्यत्तनुत्रं[4] महद्,
बिभ्रद् योधपुरं प्रपद्य पुरदिल्नामा न्यवात्सीत् सुखम् ॥२२॥

---

१ समर्थ ।          २ यात्रायां ।
३ कुञ्जरसादिनो गजारोहिणः ।     ४. दीप्यमानम् ।

अन्येद्यु स्तत एत्य तत्र सहसेनायत्तखाँसंज्ञकं,
नव्वाब प्रणिपत्य शिष्टविधिना पृष्ट्वा तथानामयम् ।
वार्ता तन्मरुदेशजा स निखिला पप्रच्छ तात्कालिकी-
मेन सोऽपि निज विबुध्य सकल वृत्त बभाषेऽखिलम् ।।२३।

अस्त्यत्र क्वचिदेव सौम्य[1] नगरेष्वीशाधिकारः पर,
नान्यत्रास्ति सुदुर्गमेषु विषमस्थानेष्वरीणा बलात् ।
श्रुत्वैव स परं विहस्य वचन प्रोचे मदेनान्वित,
क नामाकलयन्तु दर्पमरयश्चेन्मेऽधिकारो भवेत् ।।२४।।

श्रीमद्भि स्थितवद्भिरत्र नु कृतं भो ! किं किमद्यावधि,
नो कश्चित् सुभटो हतो न यवन कोपि क्वचिद्वा कृत ।
कालातिक्रमणेन निष्फलतया लोकेऽत्र किं जायते?,
वाच्य मेऽतिसुदुर्गम च विषम स्थान प्रयास्याम्यहम् ।।२५।

श्रुत्वैतद्गदित तमाह सुचिर ध्यात्वा नवाब. स्वय,
काणाणापुरमस्ति तस्य निकटे बालोत्तराख्यं पुरम् ।
नाभूत्तत्र पुरा तयोस्तु परितो म्लेच्छाधिकार क्वचित्,
द्रागेव व्रज तत्र शूर! मतिमन्! वीराग्रणीस्त्व यत ।।२६।।

श्रुत्वेत्थ तु तदुक्तमेष तरसा[1] यामीति स प्रोक्तवान्,
सनह्य त्वरयैव वीरनिचयं [2]पौर्वं प्रतस्थे समम् ।
काणाणापुरमेत्य तत्र सहसा वीरे समन्तात् स्थितै-
र्गर्जन् म्लेच्छजनै स्वबन्धुभिरल प्रीत्यावसत्तत्र स ।।२७।।

क्वैते भूपभटा इद पुरजनात् संपृच्छनस्तस्य वै,
प्रोचुस्ते निकटस्थिता [3]पुर इत सन्त्युग्रवीर्या इमे ।

---

१ शीघ्रम् । २. पूर्वदिग्भवै ।
३ इतोऽस्या पुर नगरीत ।

दिल्लीशाय हि गुर्जरात् करमय सम्प्रेष्यमाण धनं,
मार्गस्था सुमदोद्धता भुजबलैस्तत्तद् विलुण्ठन्त्यमी ॥२८॥

तत्रत्यैर्गदित निशम्य पुरदिल्खानामधेयो भट,
स्वीयैर्मुख्यपठाणवीरनिकरै सार्ध च समन्त्र्य स ।
अद्य श्वोऽस्त्विति[1] चिन्तयन् हि दिवसान्निन्ये द्विमासोन्मिता-
स्तावत्तेऽस्य निशम्य हार्दमभवन् दत्तावधाना भटा ॥२९॥

बालाह्वोऽक्षयराज उत्कटभटो मन्त्र्यग्रणी शत्रुहा,
पञ्चाख्य सुभटश्च चन्द्रतनयो बालान्वयी वैरिहा ।
लक्ष्मीदास इतीह वीरविदित कामि पताख्यात्मजो
धावेचिश्च सुजानमल्ल इति वै वीरम्मदेवात्मज । ३०॥

चापेयोऽक्षयराज उत्कटभटो विट्ठल्लदासात्मजो
ये त्वेतेऽजितमिह्नृपतिभटा याता करार्थं पथि ।
ते भर्तुर्विजयध्वज किल पुरस्कृत्याऽन्विता स्वैर्भटै-
र्वीरास्तस्थुरनन्यवृत्तिमनसोऽस्मिन्[2] गुर्जरीयेऽध्वनि ॥३१॥युग्मम्।

दुष्टोऽय यवनो निहन्तुमिह नो वाञ्छत्यत सत्वर,
प्रागेन हि निहन्म उत्तमफल कार्य निज साधितुम् ।
इत्येव सुभटास्तदा निरणयन् धावेचिनाऽथो समं,
बालावशभवैस्तथाऽक्षयभट स्वीय प्रतस्थे गृहम् ॥३२॥

बालाम्योऽक्षयराज एष तु ततो निश्चित्य रात्रावथ,
सनह्य त्वरयाभ्यगात् सह भटैर्लीनश्च कुत्राप्यभूत् ।
केचित्तेषु पुर गताश्छलयितु शत्रु तथाहृत्य गा
दूर दुद्रुवुरित्यबोधि[3] च रिपोर्भ्रातु. सुतो नाहर[4] ॥३३॥

---

१ युद्ध प्रयाणमद्य श्वो वास्त्विति भाव । २ एकाग्रचित्ता ।
३ इति गोहरणपूर्वक तेषा पलायनम् । अबोधि ज्ञातवान्, 'दीपजनबुध' इत्यादिना कर्तरि च्लेश्चिण् । ४ नाहरखाँनामा ।

सार्धं म्लेच्छभटैर्विनह्य स तदा तत्पृष्ठमेवान्वगात्,
तावत्तेऽपि पुरोपशल्यत इतोऽधावन् निशम्येति सः ।
नव्वाब पुरदिल्लखा इति मतो युद्धेच्छया प्रस्थित-
स्तैर्भूपालभटैः सम च युयुधे शस्त्रास्त्रपातैर्मुहु ॥३४॥

म्लेच्छैरुत्पतिता पृथक् पृथगथो वीरा हयारोहिणो
बालाह्वोऽक्षयराज आक्रमणकृद् हस्तिस्थमूचे रिपुन् ।
भो भोस्त्व पुरदिल्ल[1] मा युधि जहि प्रौढोऽसि युद्धेषु चे-
त्तावच्छक्तिमथाक्षिपत् स सहसा म्लेच्छोऽक्षयास्य प्रति॥३५॥

आयान्तीं स विलोक्य शक्तिमपि दो शक्त्यैव[1] जग्राह तां,
शक्त्याऽहन् निजया जयाय तदिभ गर्जन् पुनर्हन्तिपम् ।
निस्त्रिंशेन निपात्य हस्तिनमथो शत्रो शिरश्चाच्छिनद्,
हत्वान्यानपि तद्भटान् नृपजय युद्धस्थलेऽघोषयन् ॥३६॥

तद्द्रव्य तुरगोष्ट्रमस्त्रनिचय[2] यच्चर्मवर्मादिक,
तत् सर्व परिगृह्य निर्भयमनो गव्यूतिमात्र[3] गत. ।
तद्वृत्त निखिल निशम्य जनतस्तद्भ्रातृज.[4] सत्वर,
तूर्ण पार्श्वत एत्य शत्रुसुभटेषूग्रोऽपतद् मत्सरी ॥३७॥

भूयोऽत्राजिनृपयोध-यवनैरन्योन्यमायुध्यन,
तावत्तत्र समीपवर्तिगिरितो टक्कारवोऽश्रूयत ।
श्रुत्वा म्लेच्छगणास्तु दैन्यमगमन्नुत्साहमन्ये भटा-
स्तत्काल त्वरयन् स्वकीयतुरग धावेचिरत्रागमत् ॥३८॥

धावेचि प्रजहार तान् रिपुगणाञ्शक्त्या मदाद्युन्नदन् ।
बालाह्वास्तु भटा प्रगर्ज्य यवनानेकैकशोऽचूर्णयन् ।

---

१ बाहुबलेनैव । २ 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकत्वम् ।
३ गव्यूति स्त्री क्रोशयुगम्' इत्यमर । ४. नाहरसिंहनामा ।

शेषान् वीक्ष्य पलायितान् किल विभज्योपस्करं वै मिथो
धावेचि स्वजनैर्निजालयमगाद् वाला[1] अपि स्वान् गृहान् ।।३६।।

इत्थं ते पुरदिल्लखानमपि तं हत्वा रणे दुर्जयं,
चक्रुर्निर्यवन पुनः स्वभवनं[2] स्वस्वामिकेलीवनम् ।
तत्तद् गुर्जरतोऽभिदिल्लयधिपतिं सम्प्रेष्यमाणं धनं
हृत्वा बाहुबलैर्निजैर्बुभुजिरे निःशङ्कमुल्लासिनं ।।४०।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये द्वादशः सर्गः
समाप्तः ।

---

१ वाला नामका क्षत्रियाः । २ स्वगृहम्प (वनम्) ।

# त्रयोदशः सर्गः

यातोऽवाच्या कदाचिद् यवनपतिसुतोऽकब्बर प्राह दुर्ग,
गत्वा शम्भुक्षितीश[1] निगद मरुवरा गन्तुमिच्छाम आशु ।
वीरस्तन्मन्त्रिवर्यं कविकलसमुपेत्याग्रग तं च कृत्वा,
भूप व्यज्ञापयत् त वरमिति कथयन् सोऽपि तत् स्वीचकार ।।१।।

प्रादाद् रत्नानि राजा गजतुरगवराश्चापि सोऽकब्बराय,
दुर्गायाश्वाश्च वस्त्राण्यपि च गणपति श्रीकवे पुत्रमग्र्यम् ।
कृत्वा सार्धं स्वसैन्यैर्व्यसृजदित उभौ साधु समान्य हर्षात्,
तौ दैवज्ञप्रशस्ते क्षण उपगतवत्यादधाता[2] प्रयाणम् ।।२।।

यावत् माल्हेर-माल्हेरगढमुपगतौ तौ निशम्यातिदूराद्,
म्लेच्छाधीशस्य भृत्यो मुकरव इति च प्राकृत खानवाव ।
राज्ञेन्द्रेणाथ सार्कं तदिति सकलमाकर्ण्य चारात् स्वकीयाद्,
वीरं संनह्य दुर्गोऽकथयदकबर दृश्यता मेऽद्य युद्धम् ।।३।।

दृष्ट्वैव म्लेच्छसेना प्रथमतरमित. प्राद्रवन् दाक्षिणात्या
दुर्गो वीरं स्वकीयैरपतदभि रिपू स्त्रासयञ्शस्त्रघातं ।
म्लेच्छा घ्नन्त निरीक्ष्य स्वचरणतलगा भूमिमुत्सृज्य पश्चाद्,
दूर गत्वा स्थितास्ते पुनरपि खलु तान् नात्यजन् दुर्गवीरा. ।।४।।

दृष्ट्वा काश्चिद्धतास्तान् मुकरव इति च प्राकृत खाँन्नवाबो
भूत्वा पश्चान्मुखश्च[3] [4]प्रधनभुवमथोत्सृज्य मेन्द्र प्रयात ।
दुर्गो वीक्ष्य व्यसून्[5] स्वान् समरनिपतितास्ताश्च सस्कृत्य पश्चा-
दम्येत्यात्मानुभूत निखिलमकबरायाभिवादयावदत् स ।।५।।

---

१ सभाजी नृपम् । २ अकुरुताम् । 'कृञौ करोत्यावहति विदधात्या-
दधाति च ।" इति क्रियाकोश । ३ पराङ्मुख ।
४ रणाङ्गणम् । ५ मृतान् ।

म्लेच्छानामीश्वरस्यात्मज इति वचनं प्राह दुर्गं सुचिन्त्य,[1]
त्व वीरश्रेष्ठ! गच्छानय च मरुभुव शौर्यविभ्राजि सैन्यम् ।
तावत्तत्रैव वत्स्याम्यहमभयमना यावदत्रैष्यसि त्वं,
पश्चाद् यास्याम एव प्रथितमरुभुवं प्राप्य तत्सैन्यसाह्यम् ।।६।।

इत्युक्त्वाकब्बरस्तु स्वयमचिरमितो हन्त! तत्रैव यातु-
मारुह्याश्व प्रवृत्तो दुरग उपसरन्नाह धृत्वाश्ववल्गाम् ।
स्वामिंस्त्यक्त्वा त्वमस्मान् व्रजसि कथमहो! दोषहीनान् स्वदासा-
नस्मद्दोषं प्रकाश्य व्रज यदि मनुषे मा त्यजास्मान् वृथाद्य ।।७।।

श्रुत्वैतद्दुर्गवाक्यं यवनपतिसुत प्राह वीर! प्रयाहि,
वीराणा सैन्यमुग्रं त्वमिह यदि समानेष्यसि प्रस्फुटं चेत् ।
तर्ह्यायास्याम्यवश्य कथमपि खलु नो तद् विना गन्तुमीहे,
विष्वग् म्लेच्छेन्द्रभृत्या बहव इह वसन्त्येत्य गृह्णीयुरस्मान् ।।८।।

तस्मात् सेनामृतेऽहं पदमपि चलितुं नोत्सहे नूनमद्य,
दुर्गं श्रुत्वेत्युवाच त्वमधिप! किमु नो[2] दोषहीनाञ्जहासि ।
एव नम्र स उक्त्वा पुनरपि च पुनः प्रार्थयामास किन्तु,
सोऽत्यन्त प्रार्थ्यमानोऽप्यहह! न हि वचोऽमंस्त क्लृप्तोपचार.[3] ।।६।।

दत्त्वाऽस्मै वाजिवस्त्रादिकमतुलकृपा दर्शयन् मानय श्च,
नून प्रागुक्तमुक्त्वा पुनरपि स इमं प्रेषयामास सम्यक् ।
शम्भो पार्श्वेऽगमच्च स्वयमचिरमित स्वेच्छया तद्विसृष्ट,
सिन्धुं तीर्त्वोरुनावाऽगमदथ[4] हबश[5] हब्शराड्-रक्ष्यमाणम्।।१०।।

म्लेच्छाधीशस्य पुत्रे प्रगतवति परावृत्य वै दुर्गदासो
रेवामुत्तीर्य सार्धं निखिलनिजभटैर्जविद प्राप तत्र ।

---

१ सुतरा चिन्तयित्वा २ नोऽस्मान् । ३ दर्शितशिष्टव्यवहार ।
४ उरुर्महती नौस्तया ५ देशविशेषम्

आरक्तस्वच्छवस्त्रारचितगृहमथ स्थापयित्वा विशङ्क,
ताहग्[1] म्लेच्छ प्रकल्प्याऽकवर इति जयोद्घोषमाघोषयच्च ॥११॥

गत्वा माल पुर[2] घ्नंस्तदधिपतिमथो म्लेच्छमालुण्ठ्य तच्च,
तस्मादग्रेप्यलुण्ठीत् सपदि स नगरग्रामकान् खेटकाश्च ।
क्षत्रास्तद्दिग्विभागे य उदहृयत[3] तत्सार्थमासाद्य यातो
रेवाडी तत्समीपस्थितनगरवराण्यप्यसौ सलुलुण्ठ ॥१२॥

गत्वाग्रे मार्गलब्धान्यपि किल नगराण्याशु लुण्ठन्नलुण्ठीत्,
पश्चाद् मौहीमसञ्ज रुहितकविरहामौ दुहाणाख्यमग्रे ।
उग्र व्याघोष्य च श्रीमदजितनृपते शासन यत्र-तत्र,
दुर्गो लुण्ठंश्च तत्तज्जनपदविभव यावदग्रे प्रयाति ॥१३॥

तावत्त्वाकर्ण्य चारादुपगतमिह त दुर्गसिह भटेन्द्र,
चित्ते निश्चित्य नून त्वरितमुदयसिंहाह्वयश्चापिवर्य ।
देश सीरोहिकीय सपदि समधिगम्याह खीचीमुकुन्द,
भो भूमन्! भूमिपालाग्रगमजितनृप दर्शयादर्शवीरम् ॥१४॥

नो जाने क्व क्षितीन्द्र: स हि यवनगणाद् रक्षित प्रागिहासी-
च्चेदस्ति क्वापि लभ्य: सुभटसमुदये दुर्ग एवात्र वेत्ति ।
चापि श्रुत्वेति तेन[4] प्रकथितमवदत् प्रीणयन् वाक्यमुच्चै-
र्भो भूमन्! भूमिभर्तु पुरत इह कदाप्यग्रग त्वा करिष्ये ॥१५॥

खीचीश्रेष्ठाग्रतो[5] मे वदसि किमु मृषा त्वं हि जानासि भूप,
राजेन्द्रस्त्वत्करस्थस्त्वदविदितमहो वर्तते नाणुमात्रम् ।
श्रीमन्! स्याद्दर्शन चेदजितनरपते स्वामिनो मेऽद्य साक्षा-
देतन्मन्यस्व सत्य भवति यदि नृपोपायन प्राक् तवास्तु ॥१६॥

---

१ तदनुकारिण यवनम् । २ माल पुर मालपुरमित्यर्थ , ३ ये क्षत्रा क्षत्रिया उदहृयत म्लेच्छराजभुजपञ्जरत उद्धृता , तेषा सार्थमासाद्येति अर्थयोजना । ४ खीचीमुकुन्देन ५ हे खीचीश्रेष्ठ मुकुन्द ।

श्रुत्वा खीचीस्तदुक्तं नरपतिमजित दर्शयामास तस्मै,
दृष्ट्वा तत्पादपद्मेऽश्वधनमुपहरन्[1] भूरि स प्राणमत् तम् ।
वस्त्रै· सभूष्य पार्श्वे द्रुतमनुरचयन्नश्वमाला ध्वज च,
सच्छत्रं चामरैस्तं नृपमलमकरोद् राज्यसिंहासनस्थम् ।।१७।।

वालक्ष्मापाल[2]पालप्रकटनमवगम्याविदूरा भटा ये,
संढौक्योपायन ते सरभसमपि तत्पादपद्मं प्रणेमु· ।
खीचीवर्येण सार्धं तुरगवरमुपारुह्य राजा ससैन्यो
यातोऽभूद् यत्र यत्र स्वयमलघुजनै[3] पूजितस्तत्र तत्र ।।१८।।

इत्थ तद्भूमिभर्तु· क्रमत इह चराद् वृत्तमिष्टं निशम्य,
प्रादुर्मोदाद् बलि ते जनपदजजना आशिषं च द्विजाद्या· ।
राजस्त्वद्राज्यवृद्धिर्भवतु भुवि भृशं त्वत्प्रतापप्रदीपो
लोकागारेऽत्र नित्यं ज्वलतु जय रिपून्जीवतात्त्व सदेति ।।१९।।

एव मूर्धाभिषिक्त परित इह[4] मरुक्षोणिमागाहमान,
प्रीतो नानास्थलानि क्रमत उपजगामावहन् प्रीतिमुच्चै ।
दृष्ट्वा वालावनीश निखिलमरुजना मेनिरे सार्वभौम,
तस्थावन्तेऽनुरुद्ध[5] स विषमविषये ग्रामके पिप्पलादे ।।२०।।

अत्रस्थेनायतास्यो[6] यवननरपतेर्भृत्यवर्यो नवाब,[7]
श्रुत्वा तद्भूपवृत्त स्वनियमविधिना स्वामिनेऽदत्त पत्रम् ।
ज्ञात्वौरगोऽपि तं प्रत्यलिखदिति किल त्वं गृहाणाऽजिताख्य-[7]
माप्त्वा तत् सोऽप्युपायानकुरुत विविधान् किन्तु नाभूत् कृतार्थ ।।२१।।

तिष्ठन् निर्भीति राजा त्विह किल ससुख ग्रामतो ग्रामतोऽत्र,
भाग स्वं वार्षिक स्वैर्नियतभटजनैर्ग्राहयामास सम्यक् ।

---

१ अश्वा एव धन वा अश्वाश्च धनानि चैषा समाहारोऽश्वधन तत् ।
२ क्ष्मापालपालो राजेन्द्र । ३ अलघुभिर्महद्भिर्जनै । ४ अत्र जगति । ५ अनुरुद्धो मन्त्रिप्रभृतीनामनुरोध प्राप्त सन् स (राजा) ।
६ अत्रस्थो योधपुरराज्यस्य इनायतखानामा । ७ बन्दीकुरु ।

रक्षा तत्र स्थितानामकुरुत च सदा त्यक्तमान्द्य' प्रजानां,
वल्यादान[1] कदाचिन्नहि खलु विफल धार्मिकाणां नृपाणाम् ।।२२।।

कालेऽथैनायतास्य कतिपयदिवसैर्दुष्टपृष्ठव्रणेन,
रुग्ण कष्टानि भुक्त्वा यमसदनमगात् स्वीयदुष्कर्मयोगात् ।
श्रीमान्म्लेच्छाधिनाथो मृतमिममचिराच्चारलोकाद् विदित्वा,
तत्स्थाने तत्र गन्तु स्वमनुचरमथाज्ञापयद् गुजरस्थम् ।।२३।।

भो! आज्ञा मे गृहीत्वा झटिति मरुधरा गच्छ गच्छेति सेच्छ,
नव्वाबो वै सुजाताह्वय उपलिखित स्वामिपत्र' सुवाच्य ।
प्रस्थान मङ्क्षु कृत्वा सह यवनगणैरल्पविश्रामयात्र,
प्रागादुत्साहशाली सुभटपुरमथ प्राप्य तत्र न्यवात्सीत् ।।२४।।

तत्रत्यान् प्राक् स पृष्ट्वा निजमनसि विमृश्याथ भव्यस्थलेषु,
सप्रेष्यापि स्वकीयान् वरयवनगणान् दु स्थलेष्वाजितास्तान्[2] ।
प्रादात् स्व कार्यभार सुभटपुरमधिष्ठाप्य काजम्मखान,[3]
सस्थाप्यैन्द्र कुमार मुहकममपि सत्पत्तने मेडनाख्ये ।।२५।।

म्लेच्छान् काश्चित् स्वकीयान् निखिलपुरवरेष्वेव सस्थाप्य तत्र,
नीत्या सम्यक् शशास प्रतिजनपदकप्रान्तमन्त[4] प्रसन्न ।
काश्चिद् मासानुषित्वा स इति भटपुरे तोषयन् सर्वलोकान्,
सैन्यै सार्ध स्वकीयैर्जनपदत इतो गुर्जरान् सप्रतस्थे ।।२६।।

म्लेच्छो विश्रम्य मार्गेऽल्पतरमहमदावादमाश्वागतोऽसौ,
प्रीत्या नीत्या शशासानुदिनमपि मरुक्ष्मा तथा गुर्जरक्ष्माम् ।
नव्वाब काजमाख्य समधिगत इह प्रीतिसमानमुच्चै,
क्षत्राश्च म्लेच्छसघान् समुचितविधिना सशशासाऽप्रमत्त ।।२७।।

---

१ करग्रहणम् । २ अजित(नृप)सबन्धिनो जनान् । ३ कायमखाँ-नामान जोधपुरमधिष्ठाप्य अधिवास्य । सुभटपुरमित्यत्र 'अधिशीङ्स्थासा कर्म" इत्यधिकरणे कर्मत्वम् । ३ इन्द्रसिहम्य (कुमार मोहकमसिहम्)
४ मरुजनपदस्य प्रत्येक प्रान्तमित्यर्थ

कोऽप्येकः सैयदोऽभूत् स च यवनपतेः प्राग् निदेशं ह्यवाप्य,
साकं स्वीयैः शशास प्रतिभटविजयी सोजताख्यं प्रदेशम् ।
जैत्रारण्येऽपि तद्वद् बहुसमरजयी वर्तते सैयदाग्य.
... . ... . ... ... ... ...[1] ॥२८॥

नव्वावात् प्राक् सुजातादविकलमिह तं मेडतीयाधिकारं[2],
प्राप्य प्रोद्यत्प्रतापः सुदधदतितरां शूरता साहसित्वम् ।
इन्द्रक्ष्माभृत्कुमारो मुहकम इति नामोद्धतश्चोग्रकर्मा,
मात्सर्यं चाप्य दर्पं सह सुभटजनैस्तत्पुरं प्रत्ययासीत् ॥२९॥

*श्रुत्वोपेतं कुमारं सपदि तु मिरजा-मम्हदल्लोस्तदानीं,
निर्यातो मेडतातः सपरिकरजनस्तस्थिवान् मार्ग एव ।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये त्रयोदश सर्ग.
समाप्त ।

१ पुस्तके चतुर्थश्चरणो न लभ्यते ।
२ मेडताख्यपुरे शासनाधिकारमित्यर्थ ।
* एष श्लोको द्विचरण एवोपलब्ध. । एतदाशयस्तु अग्रिमसर्गारम्भे स्फुटीभवेत् ।

# चतुर्दशः सर्गः

* तावच्चैनायतस्यात्मभव उरुबल सावरोधोऽतिधृष्टो[1],
बद्ध्वा पूर्वा प्रयातु[2] सुदृढपरिकरं प्रोद्धत प्रोन्नदन् स ।
सार्धं म्लेच्छैः स्वकीयैरहितमभिलषन् दुर्हृदा क्रूरकर्मा,
क्षत्रानिष्टप्रकर्ता झटिति पुरवरात् प्रस्थितो मेडताख्यात् ।।१।।

[3]चाँदिभूभारमिहस्तदनु च हरिरामात्मज शीघ्रमेत्य,
[4]मौरारिं चाँदिमाह प्रवचननिपुणो भ्रातरं सूर्यमल्लम् ।
म्लेच्छो हीनायतस्यात्मज[5] इह कुमति सावरोधोऽतिधृष्ट,
क्षत्राणा शल्यभूत किल महमदलीर्याति जीवन्निदानीम् ।।२।।

पृथ्वीराजस्तु चाँदि क्षितिपतिसुभट श्रीकुशाग्रापुरेशो
गत्वा नून कदाचिन्निजजननिकरैर्मुद्गडाग्रामतो वै ।
हृत्वा भाग निज व्यश्रमदथ रजनौ मद्यमापीय तत्र
स्वीयैः सार्धं तदानीमपि बहुविवशोऽवाप्तवान् गाढनिद्राम् ।।३।।

चारादेतन्निशम्योषसि यवनगणैरेत्य सनद्धसैन्यै-
स्तद्ग्राम प्राप्य तूर्णं सपदि च परितस्तद्गृह चोपसृत्य ।
रुद्ध्वा तं गोलपातैर्निशितशरगणैश्चातिमत्त निहत्य,
तद्भृत्याश्चापि हत्वा जयपटहमथोद्घोषयन् य[6] प्रतस्थे ।।४।।

---

* एतदाशयात्मक त्रयोदशस्य सर्गस्य त्रिश पद्यमन्तिम रचयितुमिच्छु कवि पूर्वार्धमात्र रचयित्वा स्वकीय विचार तत्रैव स्थगयन्नेतत्सर्गारम्भेऽत्र प्रथमश्लोके तमेवाशय प्रकटयतीत्यनुमीयते । तच्च पूर्वार्धं तत्र तथव स्थित कवेरपमार्जनविस्मृत्या गतानुगतिकया च लेखक नाम् ।

१ सान्त पुर । २ पूर्वा प्राची प्रयातु सुदृढ परिकर कटिबन्ध बद्ध्वेति योजना । ३ चाँदावत । ४ मुरारपुत्रम्, 'मुरार' शब्दादत इञ् ।
५ इनायतखाँ-पुत्र । ६ महमदअली ।

श्रुत्वा यो जैत्रसिंहाऽऽवसथमुपगतं[1] स्त्रीकुलं चाँदि-वश्य,
दोहाग्रामं प्रयातोऽयतत निजजनैरात्मसात्कर्तुमेतत्[2] ।
ज्ञात्वा तज्जैत्र[3] एकोऽगतिरखिलवधू शीलरक्षणाय[4] हत्वा,
पश्चाद्दुष्टांश्च हत्वा स्वयमपि सुबहूनात्मना खण्डशोऽभूत् ॥५॥

दुर्म्लेच्छो य कदाचिन्नजमनसि विमृश्याऽथ धृष्टस्वभाव,
सर्वैं सैन्यैरुपेत स्वपरिकरयुतोऽन्त पुरेणानुयात ।
त्यक्त्वा वै मेडताख्य नगरमभिययौ चारु पीपाडनामाऽ-
तिष्ठत्तत्राणकर्त्रे स्वसृपतय इह स्वाशय सूचयित्वा ॥६॥

भाम[5] त प्राहिणोच्च प्रतिनगरवर मेडताख्य स तत्र,
प्रीत्या गत्वा न्यवात्सीत् प्रतिदिनमखिल प्राप्य रक्षाधिकारम् ।
तत्प्रान्तीयांश्च लोकान् सममदयदसौ[6] कूटभावस्य नीत्या,
तस्मात्प्रावर्धयद् वै परित इह निजा दिक्षु कीर्ति स्फुरन्तीम् ॥७॥

श्यालोक्त चिन्तयित्वा सुचिरमथ विसालत्तिखाँ-म्लेच्छ एष,
सध्यर्थ प्राहिणोत् स्व कमपि मुहकमस्याऽग्र्यवीरस्य पार्श्वे ।
युक्त्योपायेन साम्नाऽन्वनयदनुदिन त स सम्यक् प्रलोभ्य,
क्षत्रं स्वीयं समागात् तदनु मुहकमो मेडताख्य पुर स ॥८॥

दृष्ट्वा त मेडनाऽऽप्त तदनु मुहकम कैशवि वीरवर्य,
प्रीत्या सत्कृत्य तस्मै स तुरगवसनादीनि वस्तूनि चार्प्य ।
प्रोचे प्रीतो विनीतोऽत्र हि वसतु भवान् स्वेच्छया क्षत्रमित्रै-
र्विश्वस्तो वेवचाख्ये सरसि सुरसिकं सोऽपि मित्रै सहास्थात् ॥९॥

तत्रैव वीरवर्ये निवसति नितरा सौख्यतोऽटन् कदाचित्,
प्रागाच्चेनायतीयो निशि महमदनीर्वेवचाख्ये तटाके ।

---

१ जैतसिंह-गृहम् । २ स्त्रीकुल आत्मसात् कर्तुं स्वाधीनीकर्तुम् ।
३ एकाकी अगतिर्निरपाय (जैत्रो जैतसिंह ) ४ शीलरक्षणाय ।
"यजमाचयतविच्छ प्रन्छ रक्षोनङ्" इति नङ् । ५ भाम भगिनीपति
विसालतखाँ-नामानम् । ६ प्रामोदयत् ।

स्वीयैर्म्लेच्छैर्न्यवात्सीदपि च मुहृक्मस्नेहवल्लीप्रवृद्धयै,
प्रादाद् वस्त्राणि तस्मै कतिचन च हयांश्चाप्यगात् स्वस्थितिं स ।।१०।।

एवं वै मह्यदल्लीः पुनरपि कतिचिद् वासरान् यापयित्वा,
स्थाने श्रीमेडताख्ये नृपवरसरस सौध आस्थाय तस्थौ ।
प्रस्थानस्याथ काले मधुरबहुफलादीनि तस्मै प्रहित्य,
चारद्वारेति सम्यक् समदिशत[1] बहुस्नेहत प्रीतिपूर्वम्[2] ।।११।।

एकः सिंहोऽस्त्यदूरे ह्युषसि वयमितो याम एवाऽचिरेण,
तस्याखेटार्थमित्थं चरकथितवचोऽवेत्य स[3] स्वीचकार ।
तत्रोषित्वा तु रात्रावुषसि च स विबुध्याभिनह्याभिगम्य,
क्षिप्रं वै तस्य पार्श्वे सदसि च तमथाभाष्य तत्रैव तस्थौ ।।१२।।

म्लेच्छ प्रीत्या तमूचे कथय भटमण[1] वर्तमाना प्रवृत्ति
तेनोचे वीरवर्या अजितनरपते सन्ति दूरे त्विदानीम् ।
सोऽथ ज्ञात्वा रहस्य न्यगददिति भटाऽऽक्षाल्य[4] पञ्चाङ्गमेष[5]
एमि स्थेयं तु तावत् सुखमिह भवताऽऽवां च पश्चाद् व्रजाव ।।१३।।

उक्त्वा म्लेच्छस्तमेवं स्वयमपि स समुत्थाय सौधं जगाम,
तत्र च्छन्ने स्वकीयौ मुहृकमहतयेऽबोधयद्[6] म्लेच्छवीरौ ।
विश्वस्तस्तत्र सस्थः सदसि मुहृकमोऽभूत् प्रकुर्वन् प्रतीक्षा,
दैवात् पार्श्वस्थितानप्यहह[1] स शिबिरे प्रैषयच्छुद्रवृत्ति ।।१४।।

प्राप्ताज्ञौ सज्जितौ तौ सदसि लघु[7] गतौ पृष्ठगस्तत्र चैकः,
वामस्कन्धे द्विधा तं द्रुततरमकरोत् खड्गघातेन नूनम् ।
सव्ये[8] पार्श्वेऽसिधेन्वा[9] प्रहरणमकरोद् मोदमानस्तदन्यो,
मीतेऽत्रैनायनि[10] सोऽह्यपदहह[1] खला किं नु विश्वासयोग्या ।।१५।।

---

१ सदेशं दत्तवान् । २ आनन्दपुरस्सरम । ३ मुहृक्मर्मिह ।
४ पञ्चाङ्ग मुखं पाणिपादं च आक्षाल्य धौत्वा । वजू' इति प्रसिद्ध पञ्चाङ्गक्षालन कुर्वन्ति मोहम्मदीया । ५ एष एकाकी वेत्ति ।
६ मुहृक्मर्मिह मारयितुम् । ७ शीघ्रम् । ८ दक्षिणे ।
९ यमदंष्ट्रया । १० अत्राऽस्मिन् मुहृकमर्निहे मीते मृते (सति) ऐनायति इनायतखा-पुत्रोऽह्यपत् तुष्यति स्म ।

तत्रैव मृत्युमाप्ते किल महमदली- सनियुक्तास्तु सर्वे,
म्लेच्छास्तस्यानुगेष्वृद्ववपुरनलयन्त्रोत्थगोलान् भटेषु[1] ।
वीराग्र्यो मेडतीयो धृतधृतिहरिरूपाह्वयोऽरींस्तु हत्वा,
शस्त्रास्त्रैराहत सन् रणभुवि पतितो हन्त विच्छिन्नगात्र ॥१६॥

हत्वैव त स धूर्तश्छलत इह पुरे मेडताख्ये न्युवास,
पीपाडे च स्वभाम व्यसृजदथ पुनस्तं विसालत्तिखानम् ।
एवं म्लेच्छेन दम्भात् कतिचन निहता घोषणा च प्रचक्रे,
मामेत्य घ्नन्तु केऽपि प्रथितनिजबलास्तेषु चेच्छौर्यमस्ति ॥१७॥

श्रुत्वैतत् सूर्यमल्ल स्वमनसि सुचिर सविमृश्याथ नून,
चारद्वारा स्म सम्प्रेषयति विलिखितं पत्रमेतच्च लब्ध्वा ।
यौध[2] सग्रामजेता सपदि तु हरिनाथाह्वयश्चान्द्रभाणि.[3]
स्त्रीयैर्वीरैं सह द्रागुषसि खलु ततस्तेन[4] सार्धं प्रतस्थे ॥१८॥

तत्रत्य जावलाख्यं सपदि लघु पुरं प्राप्य तद्वासिन च,
श्रीमन्त मेडतीय निखिलनिजकुलालङ्कृतिं गोकुलाख्यम् ।
यौधैर्गत्वा जगादाऽत्र मुहकमभट सनिहत्यापि जीवन्
सहत्याऽस्मद्यशोऽय भुवि महमदली सावरोधोऽद्य याति ॥१६॥

तस्मादेन निहन्म क्वचिदपि मिरजामह्मदत्ली प्रपद्य,
नो चेद् ध्वस्तास्तु तेन त्रिदिवमधिगताः कीर्तिवल्लीं वितन्म ।
श्रुत्वैतद् गोकुलाख्य परित उदसृजत् पत्रवाहान् किलोष्ट्रैः,
सामन्तास्ते समन्तात् सभटमुपययुर्ज्ञात-तत्पत्रवृत्ता. ॥२०॥

आगात् तद्भ्रातृजन्मा[5] सपदि किल तदाकर्ण्य वै भावसिंहो
वीरश्चै वाक्षयाख्यस्तदनु च सुदृढ केशवान्वय्युदार ।[6]

---

१ तस्य मुहकमस्याऽनुगेषु अनुचरेषु (तन्मरणोत्तर सपत्नत्सु इति भाव ) ।
२ योधवशीय । ३ चन्द्रभाणपुत्र । ४ तेन सूर्यमल्लेन सार्धम् ।
५ तस्य गोकुलस्य भ्रातृज । ६ केशवकुलोत्पन्न ।

धीर कल्याणमिहात्मज इति विदितश्चापि निश्शङ्कचेता,
सनह्याऽत्र स्वपक्षैः सह बहुभिरश्वैर्मिहनामा समायात् ॥२१॥

तत्रत्या मेडतीया अपि सुभटवरा ये तदीयास्तदासन्-
श्रुत्वा ते पत्रवृत्त प्रमुदितमनसो योद्धुकामाः सुसज्जा ।
आजग्मुस्तत्र वीरास्तदनु स निखिलैर्गोकुलाख्यस्तदैव,
हन्तु चैनायति त किन्न महमदली जावलात् सप्रतस्थे ॥२२॥

तावद् दूरे गतः स[1] क्षितिपतिसुभटा न प्रयाणद्वयेना-
प्यापुस्त ते तदन्ते निजचरवचनाद् दूरता तस्य बुद्ध्वा ।
कृत्वा स्वीय प्रयाण द्विगुणमतिजवैर्घोटकैः खाद्यतृप्तै-
र्म्लेच्छ दृष्ट्वा सुदूरादधिकतरकृतान् सम्भ्रमात्[2] प्रापुरेव ॥२३॥

प्राप्तान्तान् वीक्ष्य वीरान् स्वयमपि च परावृत्य तेष्वाययौ स,
तद्-योधास्तावदाराज्[3] ज्वलदनलसुयन्त्रोत्थगोलानवर्षन् ।
वीरास्ते गोकुलीयास्तदवगणनयोत्साहहीनान् रिपू स्तान्,
कुर्वन्त शस्त्रघातैः समिति[4] युयुधिरेऽन्योन्यमाबद्धवेगा ॥२४॥

यौधिर्वै[5] चान्द्रभाणिर्वरतुरग-गत सयुगे खड्गपाणि-
र्निघ्नन् म्लेच्छान् पुरस्तादभिसरति हि यास्ताञ्ज्वलत्क्रोधवह्निः[6] ।
हत्वा हत्वा प्रयाति प्रथितनिजबलो विद्रुताश्चेक्षमाणो
दूरादाहत्य बाणैर्बहुनिशिततरैस्तान् गतासून् प्रचक्रे ॥२५॥

म्लेच्छ खुम्मालखानस्त्वरितमथ गृहीतासिदण्डो निहन्तु,
विद्राव्याश्व तमागात्[7] तदसिनिहनन चर्मणा सोऽप्यरुन्ध ।
पश्चाच्छक्त्या प्रचक्रे प्रहरणमहिते[8] चर्मवर्मान्विते तु,
तस्मिंस्तस्योरुशक्तिप्रहरणमपि नहि प्राप साफल्यमेतत् ॥२६॥

---

१ महमदली २ वेगात् । ३ दूरात् । ४ युद्धे ।
५ चन्द्रभाणपुत्रो हरनाथ । ६ हरनाथम् ।
७ शत्रौ खुमालखानाम्नि ।

तावच्चैनायति· सोऽप्यथ महमदलीः स्वीयसेनासमेतो
दीव्यत्प्रोद्दामवर्मावृतविकटमहाविग्रहो[1] विग्रहेऽस्मिन् ।
चञ्चन्तं तीक्ष्णखड्गं तडितमिव दधत् प्रावृषेण्य[2] पयोदः,
संवर्षन् बाणधारा पवनपरिचितामुच्चकैराप गर्जन् ।।२७।।

दृष्ट्वायान्तं तमाराद्चलभद्रसुतो गोकुल सौरताणि-
र्म्लेच्छैः सार्धं सुयोद्धु समरभुवि लसत्खड्गपाणिह्यु पेत ।
उच्चैर्योधानपृच्छद् व्रजति नु मिरजामह्यदल्लीः क्व भीत ?
क्षिप्र तावत् समागादिह तु फरकवेगाह्वय खड्गपाणि ।।२८।।

म्लेच्छ प्रोचेऽमुमेवोऽस्म्यहमिह मिरजामल्लदल्लीर्भटेन्द्र
इत्युक्त्वाऽसिप्रहार तदुपरि कृतवान् किन्तु सोऽपि प्रहारः ।
तस्मिन् सच्चर्मवर्माभिवृतवपुषि तु प्राप नो हन्त सिद्धि,
किन्तूच्चिक्षेप सोऽपि प्रसभमविकलस्तत्र[3] शक्ति स्वशक्त्या ।।२९।।

भित्त्वा तद्वर्म पूर्वं तदनु च वसन तस्य वक्ष प्रदेशं,
साऽविक्षत् कालदंष्ट्रा दृढबलसहित पातिता तेन[4] तत्र[5] ।
पश्चाद् वीरः स बाह्वोरधिकतरबलादाचकर्ष द्रुत तां,
शत्रो प्राणैस्तु सार्ध स च निजतुरगात् संगरोर्व्या पपात ।।३०।।

तावत्तद्भ्रातृजन्मा सपदि[6] खुरमवेगाह्वय स्वीयसैन्यैः,
प्राप्तो दूरात् कृपाणप्रहरणमकरोत्तत्र वै सौरताणौ[7] ।
तद्घात सोऽपि शीघ्र करकमललसच्चर्मणाऽपोह्य शक्त्या,
म्लेच्छ हृद्याजघानाऽपि तु दृढकवच प्राप्य सा कुण्ठिताऽभूत् ।।३१।।

भ्रात्रीयो[8] राघवि स्म प्रहरति यवनं भावसिह· स्वशक्त्या,
यौधो[9] नथाह्वयो वै तमरिमभिजघानाऽसिना कौम्भकर्णि ।

---

१ शरीरपर्यायोऽ्य विग्रहशब्द , उत्तररतु युद्धवाची । २ प्रावृषि भव "प्रावृष एण्य " इति एण्य । ३ फरकवेगनाम्नि योधे ।
४ तेन गोकुलेन । ५ तत्र फरकवेगे । ६ युद्धभूमौ ।
७ मुलनानपुत्रे तस्मिन् गोकुले । ८ तस्य गोकुलस्य भ्रातृज ।
९ 'जोधा' इति प्रसिद्ध ।

मौरारः सूर्यमल्लः सपदि तु तमुपेत्याऽवधीत् स्वासिनाऽऽशु,
सर्वाण्यस्त्राणि किन्तूपधृतदृढमहावर्मणा व्यर्थ्यभूवन् ॥३२॥

वीरा सर्वे समेत्याभित उदितरुष स्वास्त्रपातैं प्रजह्रु-
स्त रुष्ट सोऽपि धृष्टो बहु वहु युयुधे वर्षितैरस्त्रशस्त्रैः ।
दृष्ट्वाऽभेद्यं तनुत्र त्वचलभटसुतोऽक्षिप्त कण्ठेऽसिघात,
तेनैवाऽसौ धराया व्यसुरपतदथो तद्भटा योद्धुमायान् ॥३३॥

प्राप्तास्तांस्ताञ्जवान प्रथितपृथुयशा गोकुल खड्गपाणि-
र्गर्जन्नुत्साहमर्जन् रणगतयवनान् नाशयामास सर्वान् ।
दृष्ट्वा दूराद्धतास्तान् स्वपरिकरमथ[1] स्त्रीजन स्व यशश्च,
त्यक्त्वा तत्र स्वपक्षानपि महमदलीद्राक् पलायाबभूव ॥३४॥

हत्वाऽस्य क्षत्रवीरा ध्वजपणवहयान् तद्धनं तद्गजाश्च,
तज्जायां तत्सवित्रीं[2] पुनरपि भगिनीं भ्रातृजा भ्रातृजायाम् ।
जामि[3] तातस्वसार तदनु च तनुजां भागिनेयीं तथैव,
सर्वस्व सर्वमन्यत्त्वरिततरमथो पृष्ठगाश्चाप्यभूवन् ॥३५॥

धावन् प्रागेव तेभ्य स तु महमदली रैणवाधि समेत्य,
तस्मिस्तत्रत्यनाथ कमठकुलभव स्वाश्रय सययाचे ।
सोऽपि स्वीकृत्य तस्यार्थनमुदितदयो द्वा कपाटान् विधाय,
पुर्या वप्रात् प्रसह्य ज्वलदनलमुखप्रोत्यगोलान् ववर्ष ॥३६॥

प्राप्तास्तावद् भटास्ततुरगवरखुरन्यासमन्वेषयन्तो
निश्चिक्युस्तत्पुरान्तर्गतमथ मिरजामह्यदल्ली स्वशत्रुम् ।
दूतद्वारा तदीश जगदुरिह कथं रक्ष्यते म्लेच्छ एष
देयो निष्कास्य नो चेदचिरमुदयिता वन्युवैर नवीनम् ॥३७॥

---

१ निजपरिवारम् ।     २ जन्मानरम् ।     ३ कुलस्त्रियम्, भगिन्या प्राग्निर्दिष्टत्वाद् भगिनीह न गृह्यते । 'जामि स्वसृकुलस्त्रियो' इत्यमर ।
४ एतस्याश्रयप्रदानम् ।

श्रुत्वेत्थं दूतवाक्यं स तु नगरपति प्राह भो ! किं प्रकुर्या,
चेदश्रोष्य हि वोऽत्रागमनमपि पुरा तर्ह्यदो नाकरिष्यम् ।
युष्म त्त्रासात्प्रविष्टं शरणमुपगत चेदर्थेन त्यजेय,
तद्धर्मोल्लङ्घनात् स्व मुखमहह ! कथ दर्शयिष्यामि लोके ।।३८।।

तस्माद् बद्धाञ्जलेर्मे सविपुलविनया प्रार्थना वीरवर्या,
क्षन्तव्यो मेऽपराधो व्यतिकर इह मा[1]-ऽऽभारपात्रीकुरुध्वम् ।
युष्मच्छौर्यं तु लोके स्फुटमिह किल यत् स्व स[2] शस्त्रादि मुक्त्वा,
त्यक्त्वा सर्वाश्च नष्टो युवतिपरिजनास्तत्तु जीवन्मृतोऽस्ति ।।३९।।

श्रुत्वैतत् कौर्मिवाक्य[3] स्वमनसि च विमृश्याथ सत्यज्य शत्रु,
धृत्वाऽग्रे तत्कलत्राण्यखिलमपि तथोपस्कर सविभज्य ।
कृत्वाऽग्रे तद्ध्वज स्वापहृतमथ जय स्व समुद्घोषयन्तो
वीरा सर्वे समीयुः प्रमुदितहृदया द्राग् मरुक्षोणिदेशम् ।।४०।।

प्राप्ता स्व स्व च वास सपदि च यवनीस्ता विभागोपलब्धा,
स्वस्वेभ्यस्ता ददुर्वै श्वपचकुलजनेभ्यो यथावत् समीक्ष्य ।
ता जीवन्ति स्म नून निजनिजसुभट-द्वा स्थल मार्जयन्त्यो
म्लेच्छ श्रुत्वेति वृत्त पथि पथिकजनाद् मृत्युमाप्नोदिवाहो ! ।।४१।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये चतुर्दश सर्ग
समाप्त ।

१ मा माम् । २ महमदली ।
३ कौर्मे 'कछावाह'-वंशजस्य तस्य रैणवालीशस्येत्यर्थ । वाक्यम् ।

## पंचदशः सर्गः

मेवाडक्षोणिपस्य ह्य ुदयपुरपते राणजैमिह्नाम्न,
क्रूरो ज्येष्ठ. कुमारोऽमर इति विदितो नामधेयेन लोके ।
तस्मिन् कालेऽपजह्रे निजजनकपद स्वैर्भटै सार्धमेत्य,
तात प्रातिष्ठताऽन स्ववसतिनगरं शीघ्रमुत्सृज्य दूरम् ॥१॥

घाणेरावाभिधान पुरमयनगमद् राणजैमिहभूप-
स्तत्रत्यो मेडतीयो भटकुलतिलकस्त निशम्योपयातम् ।
गोपीनाथाभिधानो विधिवदधिपते पादपद्म प्रणम्य,
कृत्वा च स्वागतार्चा क्षितिपतिमधिवास्य स्वय चान्तिकेऽस्थात् ॥२॥

मेवाडाधीश्वरस्तं निजमदसि समाहूय चैव जगाद,
प्राज्य राज्य सुतेनोदयपुरसहित यद् हृत तत् प्रकाशम्[1] ।
तस्मान्मत्पक्षगश्चेदजिननरपति स्यात् तदा राज्यलब्धि-
र्धीमन्! नान्योऽस्त्युपायो विमृश निजहृदा तत्प्रसाद कथ स्यात् ॥३॥

गोपीनाथाह्वयोऽपि क्षितिपतिवचन सनिशम्याऽथ धीमान्,
सम्यक् स्वान्ते विमृश्याऽकथयदधिपते ! देहि कन्या नृपाय[2] ।
पश्चाद् विज्ञप्तिमेनां नृपतिवर ! करिष्यस्यमुष्यान्तिके चेद्,
नून त्वच्चिन्तितार्थं सपदि स नृपति साधयिष्यत्यवश्यम् ॥४॥

श्रुत्वा तन्मेडतीयोदितमिति वचन चेतसि स्वे विमृश्य,
कन्या स्वीया ददेऽह प्रतिभटदलनासक्तचित्ताय तेऽद्य ।
यद् मत्पुत्रेण राज्य हृतमखिलमहो ! धृष्टदुष्टात्मना तत्,
त्यक्त्वा सर्वस्वमारात् स्वपुरमहमथोत्सृज्य घाणेरमाप्त[3] ॥५॥

तस्माद् भो राजराजेश्वर ! यदि मयि ते सत्कृपावीक्षण स्यात्,
तर्हि श्रीमन् ! पुनस्तद् विगतमिह महद् राज्यमामादयेयम् ।

---

१ प्रकटम् २ अजितनृपाय । ३ घाणेरावम् ।

इत्थं चालेख्य पत्रं सविनयमथ स प्रैषयद् भूमिपाय,[१]
चार शीघ्रं प्रपद्याखिलमरुपतिमानम्य पत्रं ददौ तत् ।।६।।

भ्रूक्षेपाद् भूमिपस्य न्यपठदिदमथो मन्त्रिवर्यस्तु पत्रं,
श्रुत्वा तद् दुर्गदाम पुनरुदयभट योद्धुमाज्ञापयत् स[२] ।
भूपालाज्ञा प्रपद्याऽखिलसुभटगणैराशु संनह्य वीरौ,
पृष्ट्वा विप्रं स्वरज्ञं कमपि च सहसा प्रापतुस्तौ मुहूर्त्तम् ।।७।।

आप्त्वा यूनि स्वरे तौ रविशशिसुबल योगिनी-राहु[३]दोष-
त्यक्तं प्राज्ञान्मुहूर्त्तं त्वरितमथ भटौ चक्रतुर्हि प्रयाणम् ।
अत्युग्रैर्मारवाडाऽभिजनभटजनैर्जग्मतुर्घाणराव,
कुर्वन्नासीन्निवास सह निजसुजनैर्यत्र मेवाडनाथ ।।८।।

मेवाडाधीश-पार्श्वे सममखिलभटैर्जग्मतुस्तौ तदानी.
दृष्ट्वा तौ स्वासनात् स प्रतिमुदितमना दूरतोऽभ्याजगाम ।
प्रीत्या सगम्य ताभ्या पुनरपरभटान् स्थापयित्वोचितेषु,
स्थानेषु क्षेमपृच्छोत्तरमखिलमपि स्वाशय व्याजहार[४] ।।६।।

श्रुत्वा दुर्गस्तदानीं तदुदितमखिल तच्च बुद्ध्वा विमृश्य,
मेवाडक्षोणिपाल न्यगददधिपते ! राज्यमद्धाप्स्यसि[५] त्वम् ।
धीमन् ! धैर्यं धरस्वेत्यथ च स विधिवद् व्यक्तमालिख्य पत्रं,
प्रादात् पुत्राय तस्येत्यमर ! मरुधराधीश्वराज्ञा शृणु त्वम् ।।१०।।

ब्रूम किं ते कुमारानुचितमिति कृत लज्जसे नो किमत्र ?
हृत्वा राज्य स्थितोऽसि स्वपितरि नृपतौ विद्यमाने पदस्थे ।
नान्योऽकार्षीन्न कर्तेदृशमनभिमतं कोऽपि यत्त्व करोषि,
राज्यं त्यक्त्वा च तप्त्वा सुतप उपययुर्द्या हि राजर्षय प्राक् ।।११।।

---

१ अजितमहाराजाय । ५ अजितभूमिप । ३ राहुशब्देन काल-राहुर्गृह्यते । ४ उवाच । ५ सत्यम् ।

भूपेन्द्रेणाजितेनाऽनुनयनमिति ते प्रोक्तमस्मत्समक्षं,
पक्षं कृत्वा पितुस्ते पुनरपि च पद नेतुमाज्ञापितास्तम्[1] ।
तस्याज्ञा मन्यसे चेत् करयुगलमथाबध्य सैन्यै सहैहि,
निश्शङ्कं प्राप्तकाल निजजनकपद प्राप्स्यसि प्रेक्ष्यमानम् ।।१२।।

इत्थं राज्ञा वचश्चेन्नहि निज-हितकृद् मन्यसे मानसे स्वे,
तर्ह्यास्ता भो कुमार ! ह्युषसि तु समरो नौ भविष्यत्यवश्यम् ।
मद्वाह्वाकृष्टचापोद्गतनिशितशरैर्भिन्नसैन्योऽचिरेण,
मद्वाणीं त्व तदानीं स्वमनसि सहसा सस्मरिष्यस्यवश्यम् ।।१३।।

चारात् पत्रं प्रपद्य प्रविशदमतिना मन्त्रिणाऽऽवाच्य सर्वं,
तद्वृत्तान्त विदित्वा निजमनसि विमृश्यायया स्वै सम स ।
दुर्गादास ससैन्यो निकटमुपगत सम्मुख तस्य गत्वा,
हस्तद्वन्द्व बबन्धोपवसनशकलेनाशु[2] तस्य[3]-प्रयत्नात् ।।१४।।

एव जैसिंहसूनु सह भटमणिरादाय तत्सैन्यवीरै-
स्तत्तातस्याङ्घ्रिपद्मे बहुविनययुत नामयामास सम्यक् ।
दृष्ट्वोपेत तनूज निजचरणनत सोऽपि चोत्थाप्य दोर्भ्यां,
गाढप्रीत्योपगूह्य तदवनतशिरस्यश्रुबिन्दून् मुमोच ।।१५।।

राण सत्कृत्य पुत्र सुखवसतिमदात् सागरे राजपूर्वे[4] ,
लब्ध्वाज्ञा तत्र गन्तु स च निजजनक सप्रणम्य प्रतस्थे,
याते तस्मिन् कुमारेऽजितनृपतिभटो दुर्गसिंहोऽविलम्ब,
प्रीत्या वाक्य जगादोदयपुरमधुना राणजैसिंह ! याम ।।१६।।

मेवाडेश गृहीत्वा तमुदयपुरमानीय तत्रोपवेश्य,
प्राघोष्याज्ञा तदीया निजनृपयशसा साकमुच्चै समन्तात् ।

---

१ त ते पितर (राज्य-) पद नेतु प्रापयितु दातुमित्यर्थ ।
२ उपवसन (रूमाल)-खण्डेन । ३ अमरसिंहस्य ।
४ राजसागरे (मुखावास ददौ ।

तत्रोषित्वाऽनुरोधात् कतिचन दिवसानर्चितस्तेन कामं,
स्वीयैः सार्धं स वीरोऽजितनृपचरणौ प्राप चोचे स्वसिद्धिम् ॥१७॥

मेवाडेशाय राज्यं विगतमपि पुनर्हिन्दुसूर्येण दत्त-
मित्थं राठोडभर्तुर्नृपमुकुटमणेः ख्यातसत्कर्मणोऽलम् ।
सत्कीर्तिर्यत्र-तत्र प्रतिदिनमवनी-मण्डले गीयते स्म,
दूरस्थो म्लेच्छराट् तां परित उपनिशम्याप शङ्कां नितान्तम्॥१८॥

नव्वाबश्रीमुजाताह्वय उचितमहाकार्यमुद्दिश्य किञ्चि-
न्नव्वाब काजमाख्यं निजनिकटमथाहूतवान्, सोऽपि शीघ्रम् ।
प्राप्याज्ञां सोजतेशं भटपुरनगरे ल्हश्करीखान-सञ्ज्ञं,
नव्वाबं स्थापयित्वा मरुजनपदतो गुर्जरातं जगाम ॥१९॥

एवं वै सोजतेशं सुभटपुरगतं प्राप्य सर्वाधिकारं,
नव्वाबो ल्हश्करीखाँ इति भुवि विदितोऽसूं मरुक्ष्मां शशास ।
यः सार्धं म्लेच्छवर्यैः प्रतिदिशमनवरत् कुञ्जरेन्द्राधिरूढो,
राज्ये धीरोऽतिवीरो मनसि समधिकं स्वाभिमानं दधानः ॥२०॥

बालक्ष्मापालवर्यो न्यवसदविरतं पिप्पलोदाद्रिमध्ये,
तच्चाविज्ञाप्य चाँपावत उदयहरि[1] सार्धमात्मीयवर्ग्यैः ।
वीरोऽन्यैर्माधवीयैरपि सह गिरितोऽस्माद् विनिर्गत्य जातु,
गृह्णन् सर्वप्रजाभ्यः किल करमखिलं गोढवाडं जगाम ॥२१॥

चारादाकर्ण्य तन्निर्गमनमिति[2] पुराल्ल्हश्करीखाँ-भटेन्द्रो,
म्लेच्छैः सार्धं प्रतस्थे त्वरितमथ तमासाद्य तत्र त्वकस्मात् ।
उत्साहोद्रेकपूर्वं स्वकरविनिहिताग्न्याग्नियन्त्रास्यमुक्तान्,
गोलानेवाभ्यवर्षज्ज्वलदनलघनाङ्गारतुल्यान् समन्तात् ॥२२॥

---

१ उदयसिंह । २ उदयसिंहादीनां (गिरितो) निर्गमनम् ।

श्रुत्वा म्लेच्छं तमत्रागतमथ तुरगांस्तेऽधिरुह्य यथाम्वं,
वीरा क्रोधाद् घनात्वास्त्वरितममखिलं चाभिजग्मु सुधीरा ।
म्लेच्छः शत्रून् प्रकृत्याभिमुखमभिमुखं त्वर्कवार तु पृष्ठे,
तैरुग्रैरग्नियन्त्रैः पुरत उपधृतैरन्यवर्याँदधृष्य ॥२३॥

प्राप्याज्ञा स्वामिनस्ते निजतुरगवरान् प्रेर्य चाभिद्रवन्त,
श्रीराधामाधवेशाऽच्युत-मुरमथन-श्रीधरेति ब्रुवन्त ।
युद्ध चक्रुर्महोग्रासिभिरिपुभिरथ त्रोटयन्तोऽग्निमौलीन्,[1]
पेतु. शत्रूपरिष्ठान्नृपतिभटवरा क्रोशयन्तश्चिरश्च ॥२४॥

म्लेच्छास्ताश्छिन्नमौलीन्मरणमुपगताँल्ल्हश्करीयाँ निरीक्ष्य,
काश्चित्पार्श्वस्थिताश्च स्वयवननिवहान् विद्रुताश्चावलोक्य ।
दृष्ट्वा वीरास्तथोग्रान् प्रहरणनिकरैराहतान् सैन्यमध्ये,
मुञ्चन्ति श्वासमुच्चैर्भटनगरदिश प्रत्यगाद् भग्नमान ॥२५॥

वीरा म्लेच्छध्वजं तं सपदि निजरिपोरानक चापहृत्य,
जित्वा ता शत्रुसेनां प्रकटितविजय दुन्दुभि वादयित्वा ।
राजेन्द्रस्याक्षतैस्तै सह सुभटजनर्माधवीरैर्ननन्दु-
स्तद्भर्ता चाननन्दाऽजिननृपतिलक स्वस्थले तत्र तिष्ठन् ॥२६॥

युद्धक्षेत्राद् विनष्टोऽजिननृपतिभयाल्ल्हश्करीवान इत्थ,
नव्वाब श्रीमुजानाह्वय उपगत-तच्चार-पत्रादवेत्य ।
सम्यक् स्वान्ते विमृश्य स्वमनसि मुहु कृत्यमेतद् विबुध्य,
नव्वाबं काजमान्य न्यदिशत मरुभूशासन साधु कर्तुम् ॥२७॥

स प्राप्याज्ञा मुजातान् त्वरितमहमदाबादत पत्तनाद्र्वं,
कृत्वा प्रीत प्रयाण सह यवनजनैर्गुर्जरक्ष्मा मुमोच ।

---

[1] शत्रुशिरांसि ।

विश्राम्यन्नल्पमेवाध्वनि सुभटपुर प्राप्य तस्थौ सुखेन,
निस्मृत्य ह्लक्करीसों अपि सह यवनैः सौजत स्थानमापत् ॥२८॥

तस्मिन् वै गोडवाडऽजिननृपतिलके वर्तमाने कदाचित्,
गणेशस्यात्मज सोऽमर इति विदित संविमृश्य स्वसैन्यै. ।
सार्ध सद्य प्रतस्थे पुनरपि जनकाद् राज्यमाहर्त्तुकाम ,
सूनोर्दु्र्व्याशय तं जनक इममनिन्द्योपचार चकार ॥२६॥

आलिख्योद्वाहपत्र स मरुनृपतयेऽसूचयत् स्वीयवृत्त
यद् राज्य हर्तुकामोऽमर इह समुपायात्यसौ दुर्मनस्क ।
दुर्वार वारयैन त्वरितमिह समागम्य कन्या गृहाण,
ज्ञात्वा तत्पत्रवृत्त सह निजसुभटै सोऽपि चक्रे प्रयाणम् ॥३०॥

तस्मिन् मार्गे तदानीं क्रमत उपगत भूपमाकर्ण्य चारात्,
सार्धं सैन्यै स्वकीयैस्तदभिमुखमथागात् स जैसिहराण ।
वीक्ष्यायान्त सुदूरादजितनरपति स्वाश्वमुत्सृज्य नम्रोऽ-
यासीत् पद्भ्या पुरस्तादथ स मरुनृपोऽप्यश्वतोऽवातरद् द्राक् ॥३१॥

श्रीमान्[१]राणावतमो मरुधरणिपति सस्वजे प्रीतिपूर्वं,
सन्मानेन स्वय च क्षितिपतितिलकायाददात् सनिवासम् ।
तस्मिन् वास चकार प्रतिदिनमखिलं सो[२]ऽन्वितो माधवीयै-
रप्याप्तो देहवारी[२]मजितनृपभयान्नाऽमरोऽगात् पुरस्तात् ॥३२॥

श्रुत्वायात कुमार स्थितमथ दहवार्या बहिर्भूमिपाल[३]
इत्थ सलेख पत्र स्वचरवरकरात् प्रेषयामास तस्मै[४] ।
कस्माद्धीमस्त्वमत्र स्वबलपरिवृत. प्राप्तवान् दुर्विचाराद्,
यद् धर्मज्ञ पुरोक्त पितरि सति सुतस्तत्पदं नाप्तुमर्हेत् ॥३३॥

---

१ सोऽजितक्षितिपति । २ दे (द) हवारीग्रामविशेषम्ताम् । आप्तोऽपि अमरसिह )। ३ अजितमहाराज । ४ कुमारायामरसिंहाय ।

पित्राज्ञामेव पूर्वं रघुपतिरभजन्नैव तद्राज्यलक्ष्मीं,
ज्येष्ठश्रीरामभक्तो नहि खलु भरतोऽप्यैच्छदेना कदाचित् ।
[1]आतिष्ठासुस्तदाज्ञामथ स कथमपि प्राप्य तत्पादुके तु,
धृत्वाऽल ते स्वमूर्ध्नाऽनुचर इव नमस्तत्प्रजा सशशास ॥३४॥

तस्मात् स्वान्ते विमृश्य व्रज निजवसतिं धेहि शान्तिं तु धीमन् !
नो चेद् मेवाडराज्यात् त्वरितमिह मया वञ्च्यसे प्राणतश्च ।
ज्ञात्वा तत्पत्रवृत्तं सपदि निजपुर सागर राजपूर्वं,
त्यक्त्वा तत् स्थानमारादपि स खलु परावृत्य यात कुमार ॥३५॥

याते तस्मिन् कुमारे तदनु स सहसाहूय दैवज्ञविप्रा-
स्तैः कन्योद्वाहलग्न शुभदिवसगत निश्चितीकार्य सम्यक् ।
पुण्याह वाचयित्वा द्विजजननिकरैर्वेदविद्भिर्यथेष्ट,
कन्याया मङ्गलार्थं सविधि गणपतिं राणजैमिह आर्चत् ॥३६॥

कन्योद्वाहोत्सवेऽस्मिन् निखिलमपि पुर भूषयामास भूपो
निःशेष राजमार्गं सुरभितसलिलैः सेचयामास सम्यक् ।
पूर्वं समार्ज्य शुक्लीकरणसुरुचिराभूषणैर्यत्र- तत्राऽ-
[3]मात्रैश्चित्रैर्विचित्रैरपि समघटयन्मन्दिरागारसौधान् ॥३७॥

राजेन्द्रोऽथाजितोऽपि श्रुतिवचनपरैर्ब्राह्मणैः शान्तदान्तैः,
पुण्याह वाचयित्वा गजवदनमथापूज्य यत्नाच्छुभेऽह्नि ।
रक्षाबन्ध विधाय द्विरदवरमुपारुह्य सद्भूषणाढ्य,
प्रायासीद् माधवीयैः सह मुदितमना कारयन् वाद्यघोषान् ॥३८॥

श्रीमद्राणेन्द्रकन्याप्यथ युवतिजनैः स्नापिता पुण्यतोयैः
रक्षाबन्ध विधायाऽऽहितनववसना भूषिता भूषणैश्च ।

---

१ तस्य ज्येष्ठस्य रामस्याज्ञा आतिष्ठासु पालयितुकाम ।
२ वञ्च्यसे वञ्चयिष्यसे । वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमानता ।
३ अपरिमितैः ।

सानन्दा विप्रपत्नीकरकृततिलका कुङ्कुमालिप्तभाला,
नारीसगीतगीतध्वनिकृतसकलस्वस्तिवादा विरेजे ॥३९॥

श्रुत्वोपेतं नरेन्द्र तदभिमुखमुपागत्य संवर्ध्य विप्रा
वेदोद्घोषैरथान्त पुरमुचितमुपानीय चातिष्ठिपंश्च[1] ।
मातृणा पूजनं वै विहितविधि बुधा कारयामासुराभ्या,
दत्त्वा कन्याकराब्ज नृपकरकमले मण्डपे तौ च निन्यु ॥४०॥

विप्रा पूर्व ग्रहाणामभिहितविधिना मण्डल संप्रकल्प्य,
कुम्भ सस्थाप्य ताभ्या[2] श्रुतिवचनपरा कारयामासुरर्चाम् ।
वेद्यामग्निं निधाय ज्वलदनलमुखे तत्पुरोधा जुहाव,
कृत्वाग्निं दक्षिण तौ सपदि सुमुदितौ दपती सस्नतुश्च ॥४१॥

इत्थ मेवाडनाथो मरुधरणिनरेन्द्राय कन्या विवाह्य,
दत्त्वा सद्रत्नभूषा वररथतुरगाश्चोन्मदान् वारणेन्द्रान् ।
दासीदासाश्च दक्षान् सुरुचिरशिविकाश्चातिमूल्या समर्प्य,
प्रीत्या जामातुरग्रे द्रुततरहृदयो[3] नम्रमौलिर्ननाम ॥४२॥

दूराच्छ्रुत्वाऽजितक्ष्मापतिमुदयपुरेऽत्रागत देवलीश ,[4]
पत्रद्वारा विनीतो बहुविनययुतस्त समाहूय तत्र ।
रूपौदार्यान्वितायोज्ज्वलगुणयशसे तत्सदृक्षा सुशीला-
मुद्वाह्य स्वीयकन्यामुपकरणयुत पारिवर्हं[5] ह्यदत्त ॥४३॥

तत्राप्युद्वाह्य[6] कन्यामजितनरपतिस्तैर्विसृष्टः स्वकीयै ,
साक कृत्वा प्रयाण ह्युदयपुरमुपेत्याथ जैमिहगणम् ।
प्रीत्या विज्ञाप्य तस्मै स गमनमकरोद् देशमुद्दिश्य चास्थात्,
सानन्द सैन्ययुक्त सह युवतिजनै पिप्पलोदाद्रिमध्ये ॥४४॥

---

१ स्थानाधिष्ठिन चक्रुरित्यर्थ । २ वधूवराभ्याम् ।
३ अतिशयेन सार्द्रं हृदय । ४ देवलिया (प्रतापगढ) स्वामी ।
५ यौतकम् (दहेज) । ६ देवलियास्थानेऽपि । उद्वाहशब्दान्नामधातवीया-
ण्णिच्च क्त्वो ल्यप्, तेन परिणीयेत्यर्थ ।

नत्वाथ काजमाख्य सुभटपुङ्गव सन्निशम्य स्वचाराद्,
भूपालस्येति[1] वार्ता स्वमनसि सुचिर चिन्तयित्वा सुविज्ञ ।
राज्ञो वृत्तान्तपत्र विधिवदिति विनिरूप्याददात् प्राक् मुजात-
खाँ- नाम्नेऽधृष्यधाम्ने मरुधरणिजनप्राप्तभूयोमहिम्ने ।।४५।।

ज्ञात्वा तत्तत्रवृत्त स निखिलजनतासौख्यलाभाभिलाषी,
प्रादाम्लेच्छेश्वरायेत्यजितनरपते सर्ववृत्तान्तपत्रम् ।
औरङ्गाधीश ! राजन् ! निखिलमरुपते किं प्रवृत्ति ब्रवीमि,
स्वामिन्! किं तल्लिखामि प्रथितसुयशस ख्यातनाम्न पृथिव्याम्।।४६।।

राज्य प्रत्यापित.[2] प्रागुदयपुरपतिर्मारवाधीश्वरेण,
पर्याप्त तत्कृतज्ञ स्वदुहितरमथोद्वाहयामास त स ।
सद्वस्त्राभूषणानि द्विपरथशिबिकाश्वानुयातानि दत्वा,
भूयिष्ठ पारिबर्ह ह्युपकरणयुत तन्निमित्तीचकार ।।४७।।

आहूय क्षोणिपाल पुनरजितममु देवलीशोऽपि कन्या-
मुद्वाह्याथो तदानीन्तनशुभदिवसे तत्र[3] पूर्णोत्सवेन ।
प्रादात् सत्पारिबर्हं तदनु स नृपति सादर तद्विसृष्ट,
सार्ध स्वीयैरुपेत्य स्वजनपदगत पिप्पलोदाद्रिमास्ते[4] ।।४८।।

तत्राद्रौ पिप्पलोदे सकलभटजनै सेव्यमान स भूपो
गृह्णीते वार्षिको यो भवति निजकरो ग्रामतो ग्रामतस्तम् ।
इत्थ निष्कण्टक स्व प्रथितभुजबल शास्ति राज्य परन्तु,
नो पन्था गूर्जरीयो वहति किल यथापूर्वमेतद्भयेन ।।४९।।

स्वामिन ! म्लेच्छेश ! धीमन्नजितनरपति प्राप्य जालोरराज्य
तिष्ठेत्तत्रैव नित्य यदि सपरिजनस्तर्हि भद्र नृणा स्यात् ।

---

१ इत्थ विवाहादिमम चास्मु ।    २ प्रत्यापित । अत्र 'प्रति' पद प्राक्तन पुत्रकृत राज्यभ्र श सूचयति ।    ३ देवलीनाम्नि स्थाने ।
४ पिप्पलोदाद्रिमुपेत्य ग्राम्ने इति योजना अन्यथा 'अद्रौ' इत्यधिकरण स्यात् ।

पूर्वीयो गुर्जरीयोऽपि च सततमुभौ तर्हि मार्गौ वहेता,
पश्याम्येन ह्यु पाय सुखजननमह त्वग्रतस्त्व प्रमाणम् ।।५०।।

ज्ञात्वा तत्पत्रवृत्त स यवननृपतिर्मानसे स्वे विमृश्य,
प्रीत्या राज्ञे तदेव द्रुततरमलिखत् सूचयस्तत् सुजातम् ।
प्राप्यौरङ्गान्निदेश तमजितनृपतिश्चाप्य जालोरराज्य,
तस्थौ मार्गस्ततोऽभूत्पथिकसुखकरो मारवाश्चाण्यभीका ।।५१।।

इत्थ ससेव्यमानो नृपतिरविरत मन्त्रिणाज्ञापरेण,
वीराग्र्येणोंदयेनाऽ नुनयविनयिना श्रेष्ठचाँपावतेन ।
तास्तानुग्रप्रतापान्निजसुभटजनान् ग्रामखेटोत्करस्थान्,[1]
दु साध्येषु स्थलेषु प्रतिदिशमनिश माधवीयै शशास ।।५२।।

वन्दीन्द्रै र्मागधैश्चाजितधरणिपतेः कीर्तिमुद्गीयमाना,
भाटीवंशावतसामरनृपसमितौ[2] यत्र- तत्रापि शुभ्राम् ।
श्रुत्वाल तत्सुतापि स्वमनसि चकमे[3] त सुरूप ह्यु दार,
तल्लावण्य निशम्याजितनृपतिरपि प्रीतितस्तामवाञ्छत् ।।५३।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये पचदश सर्ग
समाप्त ।

---

१ खेटा 'खेडा' इति ख्याता लघुग्रामा । उत्कर समूह ।
२ अथ भाटीवश्योऽमरसिंहनामा नृपो जैसलमेराधिराजो ज्ञेयः ।
३ कामयते स्म ।

## षोडशः सर्गः

भाटी जैसलमेरनामनगराधीशोऽजितक्ष्माभृते,
सुप्रीतोऽमरसिंहरावलनृपो लाला प्रदित्सुः सुताम् ।
आहूय द्विजपुंगवान् सपदि तैर्निश्चित्य लग्नं शुभं
वेदोच्चारणमङ्गलध्वनिभिरेवाकारयद् मङ्गलम् ॥१॥

विप्रैः स्वस्त्ययनं विधाप्य विधिवत् कृत्वा प्रयाणोत्सवं,
श्रीमज्जैसलमेरमाशु सुभटैः सवादयन्नानकम्[1] ।
आरुह्योन्मदसिन्धुरं नरपतिर्भूषा वरार्हा दधद्,
सगीतैश्च सुमङ्गलैर्दश दिशः संघोषयन्नाययौ ॥२॥

भाटीभिर्विधिनार्चितः प्रथमतः प्रत्युद्गतः सोत्सवं,
वेदोद्घोषपरैर्द्विजैश्च समये नीतस्तयाऽन्तः पुरम् ।
भूपालः स्वकरेण चारु जगृहे कन्याकराम्भोरुहं,
दीप्तेऽग्नौ प्रजुहाव ऋक्प्रवचने दक्षः पुरोधा[2] हविः ॥३॥

उद्वाह्येति विधानतः स्वतनयां राज्ञे नृपो रावलो
हस्त्यश्वाम्बरभूषणानि निपुणाः दासीश्च दासास्तथा ।
दत्त्वा सद्विनयेन सादरमितः प्रास्थापयत् प्रीतिमान्,
सोऽपि प्रीतियुतः स्वसैन्यनिकरैर्जालोरमेवागमत् ॥४॥

झालावंश्यनृपो हलोदनगरेन्द्रश्चन्द्रसेनाभिधः,
कन्यां स्वामजितेश्वराय शिविकायानेन[3] सम्प्रैषयत् ।
जालोरं समुपेत्य तस्य[4] सचिवोऽप्युद्वाह्य कन्यां च तां,
स्वामिप्रेषितपारिबर्हमददाद् देशं ययौ चाहृतः ॥५॥

---

१ पटहम् । २ पुरोहितः । ३ कन्यामारोह्य तद्विवाहार्थं वराधिष्ठानभूतं स्थानं प्रति यच्छिविकायानं पित्रा प्रेष्यते तत् 'मामा डोला' नाम्ना व्यपदिश्यते एतत्स्थानीयभाषायाम् । ४ चन्द्रसेनस्य ।

चह्वाणान्वयदीपकोऽप्यथ फतेसिंहाभिध प्राददात्,
कन्या स्वामजितेश्वराय विधिना[1] पुण्येऽह्नि राजाभिधाम् ।
चह्वाणश्च चतुर्भु ज स्वतनयामुद्वाह्य लग्ने शुभे,
सतोष्याम्बरभूषणैश्च नृपति प्रस्थापयामास च ॥६॥

भाटीवंशदलेलसिंह-नृपतिर्देरावराधीश्वरो,
भूपाय स्वसुता विवाहविधिना प्रादात् प्रशस्ते दिने ।
सम्यग् भूषणवाहनानि विनयी भूत्वा नृपाय स्वय,
प्रादात् सोऽप्यभिनन्द्य तन्नगरत सैन्यैरगात् स्व पुरम् ॥७॥

साँचोरेऽथ महन्तमल्लचहुवाणाग्र् यस्तु राणाङ्कित,
सद्रूपा तनया विवाह्य विधिवद्दत्वा च सद्यौतकम् ।
सत्समानपुरस्सरं नरपति प्रस्थापयामास च,
स्वीयैर्भू पतिराजगाम नगर जालोरसंज्ञ तत ॥८॥

प्राधान्ये सुनियोज्य धीरतनय[2] धीर च वीराग्रगं,
चाँपि चोदयसिंहमार्ययदथो राज्यस्य मुख्या धुरम् ।
निर्भीकोऽजितसिंहभूपतिलक स्वाभिर्वधूभि. सम,
रेमेऽन्त पुरगो दिन निशमपि प्रायेण सोऽतर्कयन् ॥९॥

सेवन्ते स्म तदा नृप भटवरा यौधास्तथा चाँपयो
जैता मेरतियाश्च कूँपकुलजा ऊदावताश्चाँदय ।
धावेचाश्चहुवाणजा सुनिपुणा श्रीजैतमालादयो
बाला मण्डलजाश्च[3] कर्मकुलजा[4] श्रीधाँधला खींचिन ॥१०॥

एव तान्निखिलान् प्रधानवशगान् सस्थाप्य सम्यक्तया,
रामाभि सह कामकेलिकुशलो रेमे रसज्ञोऽन्वहम् ।

---

१ वैवाहेन विधिनेत्यर्थ । २ धीरसिंहपुत्रम् । ३ मांडल ।
४ करमसोन ।

सत्कर्मोदयसिंहमुख्यसचिवोऽप्येकाग्रचेता वली,
तद्देशस्थलवर्तिनोऽखिलजनाञ्शास्ति स्म वश्यैर्भटैः ॥११॥

नव्वावस्तु सुजातखाँमहमदावादे तु तावद् मृतो,
म्लेच्छेन्द्रस्तु निशम्य तं मृतमथात्मीयात्मजं वल्लभम् ।
प्रान्ताध्यक्षतयाऽचिरादहमदावादे नियुज्याजमा-[1]
भिख्यं प्रेषयति स्म सोऽपि किल तं प्राप्याकरोच्छासनम् ॥१२॥

जालोरे वसतः सुखं विलसतः क्षोणीशचूडामणे-
र्दृष्ट्वा स्वावसरं तदीयहृदये धर्मो ध्रुवं[2] प्राविशत् ।
चौहानेश-चतुर्भुजस्य तनया गर्भं ततोऽधारयत्,
तेजस्तज्जठरं[3] प्रपद्य ववृधे धर्मः[4] स एवानिशम् ॥१३॥

वर्षे निध्यसुवारिधीन्दुसुमिते[5] मार्गे च पक्षेऽसिते,
मार्तण्डात्मजवासरेऽपि[6] च चतुर्दश्यां तिथौ स्वातिभे ।
चण्डांशोरुदयाद् गतास्वथ चतुस्त्रिंशद्-घटीषु स्फुटं,
निर्यातिष्वलिसंक्रमान्मुनिदिनेष्विष्टे सुकालोदये ॥१४॥

चौहानेशचतुर्भुजस्य तनया राजाभिधाना सती,
राज्ञी मारवभूमिपाजिनमहाराजस्य मुख्या प्रिया ।
सल्लग्ने मिथुनेऽप्यसूत तनयं योगे सुनन्दाह्वये,
जातः सोऽभयमिह इत्यभयदो नॄणां परं शर्मकृत् ॥१५॥

भूपालाधिपतिर्निशम्य सुतरां जातं सुतं सोत्सवं,
श्रुत्युक्त्या[7] सुविधाय जातकमथाहूय द्विजाञ्श्राधनान् ।
स्वर्णं गास्तिलपर्वतानपि पुनः क्षोणीं च वस्त्राण्यपि,
प्रादात् सद्गणकानपृच्छदथ ते प्रोचुर्नृपाधीश्वरम् ॥१६॥

---

१ आजमखानामानम् ।   २ ध्रुवमिति कवेरुत्प्रेक्षासूचि पदम् ।
३ तस्मात् (कारणात्) ।   ४ तेजो वीर्यम्, तद्रूपो धर्म इत्यर्थः ।
५ अङ्कानां वामतो गतेः १७५६ मिते वर्षे इति फलितम् ।   ६ शनिवारे ।
७ वेदवाक्येन ।

राजंस्ते तनयोऽभयोऽयमभय नॄणां परं दास्यति,
क्षोण्या रूक्षविपक्षलक्षशमनो देवद्विजाद्यर्चक. ।
आप्त्वा राज्यमकण्टक खलु मरुक्षोण्या पर धर्मकृद्,
धर्मज्ञोऽर्थिजनार्थितोऽर्थद इह ख्यातो भविष्यत्यलम् ।।१७।।

दैवज्ञोदितमित्थमात्मतनयप्रौढप्रभाव नृप,
श्रुत्वा समुदितो बभूव [1]गणकास्तास्ताश्च सत्पण्डितान् ।
सश्रद्धं[2] विधिवत् प्रपूज्य च तत स्वर्णाम्बरार्थाश्च गा,
प्रादात् ते च शुभाशिषं निजगदुर्नारायणोऽव्यादमुम् ।।१८।।

वीरा केचन तत्प्रधानवशगा केचिन्नृपाज्ञारता,
स्वाधीना सुभटाश्च केचन हृदा ये माधवीयादय ।
तेष्वेकोऽचलसिहजोऽस्ति कुशलो[3] य स्वामिधर्माश्रितो
भूपाज्ञा समवाप्य तत्प्रभृतय[4] स्व स्व निवास गता ।।१९।।

जैताग्र्य[5] वगडी-पति गतमतिं नाम्ना गुणैर्दुर्जन,
प्रागाहूय मुहौकम कुमतिमानिन्द्रस्य राज्ञ सुत ।
भृत्यत्वे विनियोजयन् प्रथमत समानयामास त,
पश्चात् स्वाशयमादिशन् मरुपने. पार्श्वे छलात् प्रैषयत् ।।२०।।

जालोर स उपेत्य भूपमजित सम्यक् सिषेवेऽन्वह,
प्रेमाण सह मन्त्रिणाऽथ परम सवर्धयन् कर्हिचित् ।
तेनैक्य च निदर्शयन्नवसरे गुप्ताशय व्यक्तवान्,
यद्दौर्जन्यपथं क्रमेण नयते युक्त्याऽपर दुर्जन[6] ।।२१।।

जालोरेऽजितसिंहनाम्नि नृपतौ स्त्रीभि समं क्रीडति,
जैताग्र्यो वगडीपतिर्हृतमतिर्नाम्ना गुणैर्दुर्जन ।

---

१ दैवज्ञवरान् । २ सादरम् ।
३ कुशलसिंह । ४ कुशलसिंहादय ।
५ जैतावत-मुख्यम् । ६ दुष्ट, दुर्जनसिंहश्चेति श्लिष्टोऽयमर्थान्तरन्यास ।

तिष्ठस्तूदयमिहचेतसि परं प्रारोचयल्लोभनं,
भावित्वाद् विभिदे स चापि खलु तच्छास्त्रेष्वपि ख्यायते ॥२२॥

पुंसा दैवहतात्मना खलु धियः कालभ्रमच्चेतसा,
दुर्मन्त्रान्महतामपीह सहसा ह्रासं[1] प्रयान्ति क्षणात् ।
भेदं प्राप्य विमृश्य चेतसि चिरं निश्चित्य सम्यग् हितं,
[2]चांपिर्दुर्जनसयुतोऽथ रहसि स्थित्वा तथैवाकरोत् ॥२३॥

पत्रं चारु विलिख्य तौ निजचरद्वारा रहस्यान्वितं,
प्रेराते[3] स्म मुहौकमाय स च तं गत्वा तदाश्वार्पयत् ॥२४॥
श्रुत्वा तद्गदितं च पत्रमखिलं संवाच्य सचिन्त्य सः[4] ,
पृष्ट्वा तद्विषये स्वमन्त्रिसुभटान्निश्चित्य च प्रीतवान् ।

दुर्मन्त्रेण स इन्द्रमिहतनयो मौहोकमाख्यः कुधीः ,
समन्त्र्य स्वसुमन्त्रिभिः सह तदान्यत्रैव यातुं वदन् ।
प्रस्थानं कृतवत्यथौष्ट्रके[5] इतस्तत्पादमार्गानुगं
उद्घोष्य स्वयमाशु पश्चिमदिशि स्वीयैः प्रतस्थे निशि ॥२५॥

क्रोशान् कांश्चिदतीत्य यावदभजच्चासौ दिशं नैर्ऋतीं,
कैश्चित् तत्सहगैर्ह्यतीत्यवगतं जालोरमेष्यत्ययम् ।
तत्रैवेति विमृश्य तेष्वचलजो जूंभारमिहाभिधो,
भ्रात्रे स्वौष्ट्रिकमेकक[6] प्रहितवान् पत्रं लिखित्वाशयम् ॥२६॥

चांदारुणमितो गतोऽदित सः[7] तज्[8] ज्ञात्वाश्वमारुह्य सः[9] ,
निश्चिक्ये च हृदीति नूनमधिपं दृष्ट्वैव भोक्ष्ये त्वहम् ।

---

१ धियो ह्रासं प्रयान्ति क्षीयन्त इत्यर्थः । २ उदयमिह ।
३ आदादिकस्य ईर्धातो रूपमिदम् । प्रेषयतः स्मेत्यर्थः ।
४ मुहौकमसिंह । ५ औष्ट्रके उष्ट्रसमूहे । ६ उष्ट्रेण चरन्ती त्यौष्ट्रिक उष्ट्रारोहीत्यर्थः । 'ओठी' ति मरुभाषाप्रसिद्धः । ७ स औष्ट्रिकः ।
८ तत् पत्रं (अदित दत्तवान् )। ९ जूंभारसिंह ।

ऊचे त विजयाय[1] चाशयमितो गत्वा बलू दाश्रये[2] ,
निश्चित्य त्वरयैव मत्सरपरौ सनह्य तौ[3] प्रस्थितौ ।।२७।।

जालोरे यवनैरुपेतमपि तं[4] श्रुत्वाऽजितेश स्वयं,
सनह्योदयसिंहमादिशदथो योद्‌धु समं वैरिभि ।
स श्रुत्वा समुपैक्षत स्वसदने क्षत्रान् समाहूय च,
रुद्ध्वा द्वारमतिष्ठदेव विजने धृत्वाऽरिभाव परम् ।।२८।।

चॉपिस्तावदुपेत्य भूपमवदच्छ्रीतेजमिहाभिध ,
स्वामिन्! पश्यसि किं न हन्त! यदिमे योधा द्विधा सगता ।
तस्माद् याम इतोऽन्यतोऽथ सुभटानन्यान् समाहूय च,
प्रत्येत्यारिगणैर्वियुध्य समरे हन्मश्च चेन्मन्यसे ।।२९।।

श्रुत्वेशोऽपि तमाह वैरिभिरयुद्‌ध्वैव क्व यामो वयं
युद्‌ध्वा सयति[5] हन्म एव निखिलान् हन्युर्न चेन्न परे ।
स प्राहानुचित भवन्निगदित स्वामिन्ननीतेर्वच
आरोह त्वरया हय नृप! न चेद् मोक्ष्ये तनु त्वत्पुर ।।३०।।

दृष्ट्वेश स्वतनु त्यजन्तमथ त सद्योऽवरोधान्वित[7] ,
सर्वोपस्करसयुतो निजजनै सार्ध प्रतस्थे तत ।
चॉपिर्दुर्जनसयुत स्वसदनद्वार पिधाय स्थितो
भूपस्तत्पुरतो निरित्य गतवान् मार्गं त्रिगव्यूतिकम्[8] ।।३१।।

श्रुत्वा प्राप्तमथेन्द्रज त्वभिगतस्तत्रोदय स्वैर्भटै-
र्नत्वा चार्च्य सदुर्जनो मुहकम चानीय सैन्यैर्वृतम् ।
जालोरेत्यभिधानचारुनगरे सस्थापयामास स[9] ,
[10]सोऽप्यध्युष्य पुर प्रमोदमतुल तस्या निशि प्राप्तवान् ।।३२।।

---

१ विजयाख्याय । २ बलूंदा नाम्नि ग्राम इत्यर्थ ।
३ जूंभारविजयौ । ४ मुहौकमम् । ५ सग्रामे ।
६ न चेदन्यथा परे शत्रवो नोऽस्मान् निहन्यु । ७ मान्त पुर ।
८ पट्क्रोशमितम् । "गव्यूति स्त्री क्रोशयुगम्" इत्यमर । ९ उदयमिह ।
१० मुहुकम ।

भूपालोऽप्यविदूरनेत्य वसतिं कृत्वा गवाक्षे स्थितो
दूरादेव ददर्श तत्र च समायान्तीं चमूं संमुखे ।
तावत् तत्र तु मेडनीय-कुशलश्चादिविजैसिंहक,
सम्प्राप्य क्षितिपं ननाम विधिना पप्रच्छ सोऽनामयम्[1]

कार्यार्थे कुशलोऽथ तत्र कुशलो राजेन्द्रमित्यब्रवीत्,
स्वामिन् ! वैरिगणमाहवे सह भर्टहन्तुं द्रुतं सज्ज्यताम् ।
तावद् वै जगराम औदिरपि त प्राप्तस्तदेवागदीत्,
सनह्यावनिपोऽपि वर्धितजय सर्वे प्रतस्थे तत ॥३४॥

यौर्विविश्व नभादराजनपुरान् क्षत्रैश्च भिल्लैर्वृत-
स्तत्रैवोपगतो ननाम नरप नाम्ना विहारी भट ।
नानावशसमुद्भवाश्च सुभटा दिग्भ्य समायानिह,
तै सर्वैर्मिलितो बभौ जलधिवत् क्षोणीशसेनाचय ॥३५॥

भूपाल पुनरागत मुहकम श्रुत्वा स्वसैन्यैर्वृतो
निर्गत्योदयमिहदुर्जनयुनाऽन्येन प्रनष्ट पथा ।
मामुद्री[2]-मभिगम्य सत्वरतया यावत् पुरो याति वै,
तावच्छ्चनेवर कपोतकमिव क्ष्मापस्तमाक्रान्तवान् ॥३६॥

दृष्ट्वा हन्तुमिहोद्यन मुहकम क्षोणीशनि तत्क्षणाद्,
[3]भग्नो मडक्षु विमुच्य सैन्यनिचय दुनाडमासीसदत् ।
तत्सैन्यान् सजयध्वजान् हयचयान् भेरीं तथोपस्करान्,
हृत्वा राजवरोऽजित प्रहितवान् हन्तु तमग्र्यान् भटान् ॥३७॥

दुनाडादपि विद्रवन् स तु धन त्यक्त्वाऽवशिष्ट निजान्,
प्राणान् हन्त ! ररक्ष रात्रिचलित प्रातर्गतो मेडताम् ।

---

१ क्षेमम् । २ 'ममदडी' नि प्रसिद्धो ग्रामविशेष ।
३ पलायित ।

तत्सर्वस्वहरैर्भटैश्च सहितो भूपालचूडामणि-
स्तत्तद् दैन्यमवेत्य तस्य मुदितो जालोरमेवागमत् ॥३८॥

[1]तत्रत्यास्तु गतच्छवि च विमद दृष्ट्वेन्द्रसिहात्मज,
तिष्ठन्त किल यत्र-तत्र मिलिता अन्योन्यमित्यब्रुवन् ।
क्षिप्र नाशमय गमिष्यति महीपालप्रतापानलात्,
स्वामिद्रोहरताविमावपि[2] भटौ नाशं ध्रुव प्राप्स्यत. ॥३६॥

धात्रा याक्षरमालिका विलिखिता नून ललाटस्थले,
कस्ता मार्जयितुं महामतिरपि प्रौढप्रतापोऽप्यलम्[3] ।
शास्त्रैरुक्तमथो जनं. श्रुतमिति स्युर्ये महान्तो जना-
स्ते वै काल उपागते स्वमतितो भ्रष्टा विनष्टा ध्रुवम् ॥४०॥

[4]पौलस्त्य कथमन्यदारहरणे दोषं न विज्ञातवान्,
रामेणापि कथ न हेमहरिणस्यासंभवो लक्षित ।
अक्षैश्चापि युधिष्ठिरेण सुमहान् प्राप्तो ह्यनर्थः कथं,
प्रत्यासन्नविपत्तिमूढमनसा प्रायो मति. क्षीयते ॥४१॥

श्रुत्वा त तु पलायित भटपुरस्थो जाफराख्य सुधी-
र्निष्कास्याशु मुहौकम स्वयवनं तस्मिन्[5] पुरेऽस्थापयत् ।
दृष्ट्वा म्लेच्छमुपागत स्वयमसो श्रीमेडताख्यात् पुरा-
न्निर्गम्योपजगाम नागनगर[6] ताभ्या युतो नि श्वसन् । ४२॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये षोडश सर्ग
समाप्त ।

---

१ मेडतावासिन । २ उदयदुर्जनौ । ३ अल समर्थ ।
४ एतत्पद्य प्राचीनम् । ५ मेडतापुरे । ६ 'नागौर' इति प्रसिद्धम् ।

# सप्तदशः सर्गः

एवं शत्रुं विजित्य प्रबलभटयुतस्तत्र जालोरधाम्नि,
तद्देशस्थाञ्शशास स्वयमुपबुभुजे चानिशं सर्वकामान् ।
सर्वामुर्वी स्वकीर्त्या सपदि धवलयन् सुप्रदीप्तप्रतापो
राठोडेन्द्रोऽजितेशो निखिलगुणगणाम्भोनिधिः पुण्यशीलः ॥१॥

वर्षे वह्नयङ्गवाजिक्षितिपरिगणिते[1] भाद्रके कृष्णपक्षे,
सप्तम्यां सोमवारे सरमिजभवभे[2]-ऽर्कोदयाद्वै घटीषु ।
वीतास्वक्ष्यग्निमानास्वथ[3] सति विगते सिंहसङ्क्रान्तितोऽब्धि-
क्षोण्यङ्के[4]-ऽह्न्न समूहेऽजितधरणिपतेर्वल्लभिह सुतोऽभूत् ॥२॥

चह्वाणक्षत्रभर्तुर्धरणिपतिचतुर्बाहुनाम्नः[5] सुपुत्री,
पुत्रं राज्ञी विनीता मरुधरणिपतेः सद्दिनेऽजीजनत् सा ।
भूपालेन्द्रो निशम्य स्वतनयजननं जातकं कारयित्वा,
भव्या गाः काञ्चनं च क्षितिमपि मुदितः प्राददाद् ब्राह्मणेभ्यः ॥३॥

शङ्कुद्वारा विदित्वा गणकगणवरा कुम्भलग्नं तमूचु-
र्भूपं तज्जन्मपत्रग्रहजनितफलं राजराजेश[1] तेऽयम् ।
पुत्रः प्रौढप्रतापो मरुभुवि भविता पूजको ब्राह्मणानां,
नीतिज्ञः पुण्यशीलो हरिचरणरतः पालकः सत्प्रजानाम् ॥४॥

कृत्वोद्योगं प्रयत्नादजितनरपतिः प्रस्थितो दिग्जयार्थं,
गत्वा श्रीरायचार्यां करमपि चहुवाणान्वयिभ्योऽग्रहीत् स ।
श्रुत्वा चौरंगजेबं मृतमखिलधराधीशमापृच्छच मन्त्रं,
मन्त्रीशं विठ्ठलाख्यं सह निजसुभटैरभ्यगाद् योधदुर्गम् ॥५॥

---

१ १७६३ मिते (वैक्रमेऽब्दे) ।  २ रोहिण्याम् ।
३ ३२ मितासु (घटीषु वीतासु) ।  ४ सप्तदशपरिमिते । अत्राब्धिशब्दः सप्तसंख्यावाची । 'चतुरः सप्त चाम्बुधीन्' इति वाग्भटोक्तेः । अत्राङ्कशब्दस्तु संख्यामात्रवाची ।
५ चतुर्भुज ।  ६ जन्मवृत्तसूचकेभ्य इति शेषः ।

तत्रस्थो यो नवाबो यवनबलयुतो जाफराख्य स चारा-
च्छ्रुत्वा भूपालमाप्त प्रकुपितहृदयो दुर्गतो द्राक् प्रतस्थे ।
सार्धं चायुद्ध राज्ञा ज्वलदनलसुयन्त्रोत्थगोलैश्च बाणै-
र्म्लेच्छस्त्राश्च प्रवर्षद्द्रवदहन इव ज्वालजालप्रकारान् ।।६।।

वीरास्तेऽपि प्रचण्डा अजितनरपतेर्म्लेच्छयोधानपिघन्,
दृष्ट्वाऽजय्य नृपालं स्वयमपि समराज्जाफरोऽद्द्रुवद् द्राक् ।
[1]एवकार तदीय बलमनुदलयन् सोऽजितक्ष्माधिनाथ-
स्तत्सर्वस्व च गृह्णन् विजयमनुपम सद्यशश्चोपलेभे ।।७।।

पौरा सर्वेऽभिजग्मु सपदि समुदितोपायनास्तत्पदाब्ज,
विप्रा स्वस्त्यूचुरुच्चैस्तदनु नरपति नेमुरन्ये सहर्षा ।
सद्वंश्या कुम्भहस्तास्तदभिमुखमिता मङ्गलोद्गानलग्ना
नम्रा विप्राश्च तांस्तान्[2] स तु सदयशुभालोकनै सच्चकार ।।८।।

श्रुत्वा त पत्तनान्तर्गतमजितनृप राजमार्गेण तावद्-
द्रष्टु हर्म्याणि हन्तारुरुहुरतिरयात्[3] सप्रमोदा रमण्य ।
काश्चिद् द्राग्[4] वैपरीत्यात् परिधृतवसनाभूषणा काश्चिदन्या
विस्मृत्यैक तु तत्रैव च झगिति धृतैकैकताटङ्ककर्णा[5] ।।९।।

अश्नत्य काश्चिदन्या सपदि च तदपास्याययुर्द्रष्टुमेन-
मस्नात्वाऽभ्यङ्गमुद्वर्त्तनमथ कतिचित् प्राग्विधायाऽप्यधावन्[6] ।
सुप्ता उत्थाय काश्चित् कलकलकलनात्[7] कोमलाङ्ग्य प्रचेलु-
रङ्क्त्वा काप्येकमेव स्वनयनमचलच्चञ्चला चञ्चलाक्षी ।।१०।।

---

१ इत्थमित्यर्थ । 'अन्यथैव कथमित्थमु मिद्धाप्रयोगश्चेन्'इति स्वार्थे णमुल् ।
२ अन्यानधिकारिप्रमुखानित्यर्थ । ३ अतिवेगात् ।
४ त्वरा हेतोरित्यर्थ । ५ कुण्डलम् ।
६ अभ्यङ्ग तैलमर्दन अथ पुन उद्वर्तन पिष्टकलेपन विधाय कृत्वाऽपि अस्नात्वा स्नानेन तत्परिशोधमकृत्वैवेति योजना ।
७ कोलाहलप्रवर्तनादुत्थायेति योजना ।

यात्यब्दे वैक्रमेऽब्दे त्रिरसहयधरासंमिते[1] कृष्णचैत्रे,
    पञ्चम्यां जीववारे नरपतिरभिजिद्भे शुभव्ये मुहूर्ते ।
नारीभिर्नागरीभिर्विकसितवदनो वीक्षितो योऽत्रदुर्गं,
    सपूर्णेनोत्सवेन द्विजजननिकरैः प्राविशद् गीतकीर्तिः[2] ॥११॥

तावत् तद्वद् द्वितीयेऽहनि यवनगणान् सर्वतो वै विलुण्ठ्य,
    तिष्ठन् स्वैर्माधवीयैः सह किल कुशलः सद्भटो मेडतायाम् ।
आघोष्याज्ञां नृपस्य व्यपगमितभयं पौरलोकान्शशास,
    सर्वत्रैव मरुर्व्यां क्षितिपतिसुभटा खण्डखण्डं शशासुः ॥१२॥

निर्याते म्लेच्छसङ्घे निखिलमरुधरां शासति क्षोणिपाले,
    सर्वेऽभूवन् सहर्षा मरुधरणिजना स्वस्वकर्मानुरक्ताः ।
देवा नव्याः प्रतिष्ठां दधुरमरगृहेषूत्सवाः सत्कथाश्च,
    सर्वत्र श्रौतशब्दो द्विजवसतिषु च प्राचरद् धर्महेतोः ॥१३॥

तावद् धूर्त्तोऽथ कश्चित् कतिपयसुभटैः सोजतं प्राप्य तस्थौ,
    स्वं प्रख्यान्[3] [4]स्वर्गतोर्वीशसुतमिह दलस्तम्भनाम्न्यं नृपालम् ।
तद्दुर्गं सज्जयित्वा दिशि दिशि सुभटैर्न्यास्य यन्त्राणि वह्ने-
    स्तत्रत्यान् सशशास स्वयमपि च करं तेभ्य एवाददानः ॥१४॥

तच्छ्रुत्वा भूपवर्यः सपदि सह भटैराशु सनाह्य सैन्यं,
    तत्रागाद् योधदुर्गादथ परिवृतवान् सोजताख्यं पुरं सः ।
युद्धं जज्ञेऽग्नियन्त्रैरपि निशितशरैरग्निबाणैश्च विष्वक्,
    तद्बाह्यान्तःस्थचम्वोः प्रतिदिनमनिशं वद्धभित्त्यन्तरालम् ॥१५॥

धूर्तेऽस्मिन् युध्यमानेऽविरतमथ तदा षड्दिनानि व्यतीयुः,
    क्रुद्धः प्राहावनीशो निजसुभटगणान् वप्रमद्यैव भङ्क्त्वा ।

---

१ १७५३ । २ श्रीमन्भागवतीयदशमस्कन्धस्य-'वर्हापीड' मित्यादि पद्यान्तिमभागस्याशेन कृतेव समस्यापूर्तिरियं प्रतीयते ।
३ कथयन् । अन्तर्भावितण्यर्थतया प्रख्यापयन्नित्यर्थो वा ।
४ स्वर्गत उर्वीशो राजा यसवन्तसिंहस्तस्य सुतम् ।

आविश्यान्तर्दुर्ग चासिहतिभिरदयं घ्नन्तु धूर्तं प्रसह्ये-
त्याज्ञामीशस्य लब्ध्वा प्रमदमदयुतास्तेऽपि वप्र तमीयुः ॥१६॥

योधा विक्रम्य धूर्तं झगिति खलु तमाक्रम्य जघ्नुस्तदानीं-
मन्ये तत्पक्षगास्तु क्षितिपतिचरणावेत्य नेमुः शुभाप्त्यै ।
दत्त्वा तेभ्योऽभयं [1]सोऽखिलपुरमनुजान् निर्भयान् द्रागकार्षीत्,
तद्दुर्गे सम्प्रविश्याऽपहृतभि[2] कतिचिद् वासरास्तत्र चास्थात् ॥१७॥

तत्र स्वान् स्थापयित्वा स्वयमुपगतवान् पत्तन योधपूर्व,
श्रुत्वा पौरास्तमाप्त तदभिमुखमुपाजग्मुरुत्साहयुक्ताः ।
भूप समान्य नारतान् स्वपुरजनवरानुत्सवाश्चेक्षमाण.,
सप्रेमस्त्रीकदम्बाक्षिकमलनिकरैरर्चितोऽत्राविशत् स. ॥१८॥

योधद्रङ्गे वसन्नप्यखिलमरुधरा य स्वय सशशास,
यन्नामाकर्ण्य चौरा सपदि मरुधरा दूरमुत्सृज्य याताः ।
निर्विघ्न यत्प्रभावाद् वहति मरुपथोऽह्निश द्रु स्थलेषु,
सप्राप्य प्राज्यराज्य स्वहृदि स मुमुदे कामिनीकेलिलोल ॥१९॥

साचोरीयस्य राज्ञो नृपतिवरफतेसिंहनाम्न सुपुत्री,
भूपालेन्द्राजितेन्द्रात् तनयमजनयद् भव्यचौहानवंश्या ।
वर्षे बाणाङ्गवाजिक्षितिपरिगणिते[3] शुक्ल आषाढपक्षे,
पञ्चम्या शुक्रवारे शुभतरपितृभस्यान्त्यपादे[4] प्रशस्ते ॥२०॥

वीतास्वर्कोदयाद् वै क्षितिशरतुलितासूत्तर सद्घटीषु,
रामक्षोणिप्रमाणेष्वपि मिथुनखराशोगतेष्वशकेषु ।
तग्नेऽस्य[5] मेषसज्ञे मरुमनुजपते सूनुरानन्दसिंहो
योऽभूद् योधे पुरे तज्जननमवनिपोऽवेत्य रुक्म ववर्ष ॥२१॥ युग्मम् ।

---

१ सोऽजितमहाराज ।　　　२ अपनीतभय यथा स्यात्तथेत्यर्थ ।
३ १७६५ वर्षे ।　　　४ मघानक्षत्रस्य ।
५ योऽस्य तनयोऽभूत् ।

म्लेच्छेशस्य त्रिपुत्रेष्विह निजनिजया संज्ञया विश्रुतेषु,
ज्येष्ठः काबिल्लसंस्थो भुवि विदितयशाः शाहबाहादुराख्यः ।
ख्यातोऽन्यश्चाजमाख्यो रिपुगणविजयप्रौढताप्राप्तकीर्ति-
रासीत् तावस्य पार्श्वे विजयपुरमुपास्तानुजः कामबक्सः ॥२२॥

औरङ्गे सार्वभौमे निजपितरि मृते ह्याजमश्छत्रमस्य,
धृत्वा स्वाम्यं दधानः स्वयमपि च पितुर्मन्त्रिभिः सन्नवाबैः ।
स्वैश्चाथो तातसैन्यैर्गजरथतुरगैर्व्याप्नुवन् क्षोणिमेतां,
याम्याशायाः प्रयत्नात् सुविदितनगरीमागराख्यां प्रतस्थे ॥२३॥

श्रुत्वौरङ्गं स्वतातं मृतमुपगतवानागराख्यां पुरीं द्राक्,
काबिल्लात् स्वीयसैन्यैः सह निजतनयैराजमेनाभियोद्धुम् ।
आत्रा युद्धं च कृत्वा द्विरदरथहयश्रेणिघातं विधाय,
पुत्रैः सार्धं जघानाजममनुजमथो शाहबाहादुराख्यः ॥२४॥

धृत्वा छत्रं स्वमौलौ प्रवरयवनपैराधिपत्येऽभिषिक्तः,
प्राधान्ये खानखानाभिधमपि च नियुज्याशु दिग्भ्यो नवाबान् ।
म्लेच्छानाहूय यातः सह यवनगणैः सार्धमम्बावती[1] सोऽ-
वात्सीत्तत्र प्रविष्टः सह युवतिगणै राजहर्म्येषु सौख्यात् ॥२५॥

जीवन्तः पर्यधावन् बहुयवनगणाः प्राग् जिता येऽजितेन,
सप्रत्याकोपयंस्ते स्वनवनरपतिं तत्पुरावैरशुद्ध्यै[2] ।
तेषां तत्रैव तत्तत् कथितमनुदिनं सन्निशम्याऽकुपत् स,
कोपाग्निर्युक्षते द्रागवसरसमुपस्थापितैर्भावितर्यत् ॥२६॥

सोऽम्बावत्याः प्रतस्थे सह यवनगणैः कौर्मराजाद्[3] मरुक्ष्मां,
म्लेच्छैराच्छन्नयाऽथो द्विरदहयरथैः पत्तिभिश्चोग्रचम्वा ।
मार्गे तेन प्रयाता[4] मरुलघुनगरग्रामखेटादिकानि,
दग्धान्युल्लुण्ठितान्यप्युचितमनुचितं वेत्ति नारिर्हि रुष्टः ॥२७॥

---

१ 'आमेर' इति प्रसिद्धा जयपुरराजस्य पुरातनराजधानीम् ।
२ तस्यार्जितनृपकृतस्य पुरावैरस्य यौवपुरप्रत्यपकाररूपस्य शुद्ध्यै प्रतीकाराय ।
३ कौर्माणां कच्छपाह्वा-(कछवाहा) नां राजाधीशेन । ४ गच्छता (तेन)

देशोऽनूपत्वमापद् मरुरपि तदिभस्यन्नदानाम्बुपूरं,
[1]क्वाचित्कोऽनूपदेशोऽप्यधरत मरुता तद्वयोद्भूततूल्या ।
प्रौढा श्रुत्वा विभूतिं मरुभुव उदभूदेप लालायितास्यः,
किन्तु श्रुत्वा प्रतापं त्वजितनरपतेरेष शुष्कान्तरोऽभूत् ॥२८॥

दत्त्वाऽतोऽनल्पसैन्यं यवननरपतिः स्वाग्रग सविधाय,
वीराग्र्यं प्राहिणोद् द्राक् पटुतरमहराखानसञ्ज्ञं नवाबम् ।
तद्देशाधीश्वरत्व यवनकुलपते प्राप्य नत्वेश्वरं स,
प्राक् पीपाड प्रयातो भटनगरपथं सततं गाहमानः ॥२९॥

तावच्छुश्राव तत्र प्रतिपथिकजनात् स क्षितीशस्य कीर्ति,
सद्योऽसौ तत्प्रतापानलपरिचयतो म्लानहृद्वारिजोऽभूत् ।
चिन्तामुग्रा प्रपद्याऽजितमनुजपतेस्तन्महत्त्वं लिलेख,
म्लेच्छेशायाऽऽप्य तत्[2] सोऽप्यधरत हृदये भूरिचिन्ता तदीयाम्[3] ॥३०॥

म्लेच्छेशोऽपृच्छदग्र्य निजसचिवमथ प्रत्यवोचत् स नम्र
स्वामिन्[1] संधिं विधत्स्वाजितनरपतिना नो विरोधो विधेय ।
सम्राट् श्रुत्वा स सप्रैषयदथ मुहबत्खानसंज्ञं नवावं,
गत्वा सैन्यं पुरस्तात्तदनु स[4] नरप सधये याचते स्म ॥३१॥

भूप श्रीविट्ठलेनाप्यथ निजसुभटैर्मन्त्रयित्वा तदङ्गी-
चक्रे चातः प्रतस्थे स्वभटबलयुतस्तन्नवाबेन सार्धम् ।
म्लेच्छाधीशोऽवलोक्याजितमवनिपतिं सस्वजे प्रीतिपूर्वं,
दत्त्वा सद्रत्नभूषाम्बरतुरगगजाश्वाधिकं सच्चकार ॥३२॥

राडौरेन्द्रेण सार्धं यवननरपतौ प्रस्थिते दक्षिणाशा,
पृष्ठे प्राप्तेश्वराज्ञो भटनगरमधिष्ठाय लब्धप्रतिष्ठ ।

---

१ मरुदेशेऽनूपप्रदेशस्य दुर्लभतेरयत उक्त क्वाचित्क इति तादृशश्च साँभरादि-प्रदेशो ज्ञेय । २ स म्लेच्छराजोऽपि तदनेसवृत्तमाप्य ।
३ अजितप्रतापसवन्धिनीम् । ४ मोहब्बतखाँनवाव ।

सम्यग् म्लेच्छैः शशास स्वयमथ महराब्खाननामा नवाब,
प्राप्यैव राज्यमग्र्य तदनु सयवनो दृप्ततामावहत् स ॥३३॥

सम्राडाज्ञानुसार तदनु तु महराब्खानमाकर्ण्य चाराद्,
योधद्र ङ्गे निविष्ट मरुधरणिपतिर्निर्णयस्तस्य[1] दौष्ट्यम् ।
क्रुद्धस्वान्तो नितान्त पुनरपि मरुभूस्त्रीं समुद्धर्त्तुकामो
दिल्लीश प्रोज्झ्य दूरात् सपदि निववृते स्वैर्जनैः खाचरोदात्[2] ॥३४॥

गच्छन् मेवाडवीथ्या[3] क्रमत उपसरन् गोढवाटप्रदेश,
तत्रत्यैर्मान्यमान समदमनुगतश्चात्मवर्ग्यै सुयोधैः ।
एष क्ष्मापालवर्योऽखिलमरुधरणीभागतो म्लेच्छसघान्,
विद्राव्येहामृगौघानिव[4] मृगमथनः स्वा. प्रजा सशशास ॥३५॥

नीत्याऽनन्यार्यलोकास्तदनु नरपतिर्मन्त्रिभिर्मन्त्रयित्वा,
लुण्ठित्वा चाजमेर पुरमथ चलित. साभर प्राप शीघ्रम् ।
तत्रस्यालीग्रहम्मद्[5] समभिधयवनेनाऽकरोद् घोरयुद्ध,
तत्र क्षीणे बले स्वे स[6] हि यवनवर स्वयमपि प्लाय्य वप्रे निलिल्ये ॥३६॥

श्रुत्वैतन्नारनोलात् सह करितुरगैर्गैरतीत्याख्य आद्य,
सत्सेनोऽन्यो हुसेनोऽप्यथ च हसनखानामधेयस्तृतीय ।
कृत्वैक्य सैयदा इत्युपपदविदिता धन्वहस्ता सदशा,
प्रापु शाकम्भरी ता सह किल दधत सप्त-सैयद-सहस्रीम् ॥३७॥

वीरास्ते सद्द्विपस्था दृढकवचभृतस्तत्र बह्वस्त्रयुक्ता
उद्यत्क्रोधारुणास्यास्त्रय उरुविशिखान् स्फारयन्त स्वचापान् ।
भिन्दाना अप्यभेद्यान् प्रवरकवचिना गाढवक्ष.कपाटा-
न्शस्त्रौघान् वर्षयन्तोऽरिगणमगणयन्तो विवव्रु[7] स्वशौर्यम् ॥३८॥

---

१ तस्य सम्राजो दौष्ट्य दुष्टताम् । २ अयं खाचरोदग्रामो मालवप्रान्तीय । ३ मेवाडमार्गेण । ४ वृकगणान् (मृगमथन सिंह इव) । ५ अहमदअलीति नाम्ना तत्रत्येन शासकेन (सह) । ६ अहमदअली (तत्र युद्धे बले स्वकीये क्षीणे सति) । ७ प्रकटितवन्त ।

श्रुत्वा यावत् स्वशत्रून् स्वचरवरमुखादागतान् सैयदाग्र्यान्,
प्रागेवोपेत्य भूपो विजयसमुचितं क्षेत्रमध्यारुरोह ।
तावद्दूरात् पुरस्ताद् बहुतुरगखुरोद्धूतधूल्यन्धकारं,
पश्यन्नुल्लोलमालोकत[1] यवनबलाम्भोधिमुद्वेलवेगम् ॥३६॥

धृष्टाः संबद्धशस्त्रा सुदृढकवचिनो जेतुकामाः सहर्षाः,
कुर्वन्तस्तीव्रवर्षं निशितशरततेः सैयदाग्र्या महोग्रा ।
मृष्यन्तोऽग्न्यस्त्रगोल-प्रचयभवमपि क्लेशमक्षीणधैर्याः,
शस्त्रौघैर्युध्यमाना असिभिरथ गदातोमरैरश्रमन्नो[2] ॥४०॥

भीमोऽभ्येत्याह तावत् खलु सबलसुत[3] स्व प्रभुं कौपिरेव,
राजन्नत्राद्य हत्वा प्रतिभटनिकरास्तत्तदस्त्रप्रहारैः ।
भूत्वाहं खण्डशश्च स्वयमपि च तनुं प्रोज्झ्य धारौघतीर्थे,
जन्मप्रत्यर्जिताघप्रचयविरहितोऽद्यैव नाकं प्रपत्स्ये ॥४१॥

इत्युक्त्वारुह्य सोऽश्वं न्यपतदसिकरः[4] सैयदानां समूहे,
केषाचित्तेषु वीरस्ततडततडिति त्रोटयन् मस्तकानि ।
सैन्याब्धेः पारमेत्य त्वरितमपि परावृत्य तन्मध्यतश्च,
स्वीयस्याधीश्वरस्य क्षतजपरिवृतो वन्दनानि व्यधत्त ॥४२॥

तं सत्कृत्य क्षितीशस्तुरगवरमदात् सोऽपि भूपं प्रणम्याऽ-
धिष्ठायाश्वं तदैव न्यपतदथ पुनः सैयदौघेऽसिपाणिः ।
यं यं वीरोऽभिधावत्यरिभटमचिरादेव हत्वैव तं तं,
गच्छत्यग्रेऽपशङ्कं ज्वलदनलसमः स स्म दीप्तप्रतापः ॥४३॥

प्रोद्यद्दीव्यत्कृपाणः सपदि हुसनखाँसञ्ज्ञकं वै नवाबं,
यावत् सोऽगाज्जिघांसुस्तदुरसि विशिखान् प्राक्षिपत् पञ्च सोऽपि ।

---

१ उत्कर्षेण सतृष्णम्, कल्लोलवन्तं च । 'महत्सूल्लोलकल्लोलौ' इत्यमरः । अर्श-आदित्वादच् । 'सतृष्णे चचले लोलः' इति वैजयन्ती । २ नो अश्रमन् श्रान्तिं न प्रापुः । पुषादित्वाच्च्लेरङ् । ३ सबलसिंहपुत्र (भीमो भीममिह कौपि कूँपावत ) । ४ खड्गपाणिः ।

भीमं सद्राव्य सोऽश्वं [1]तदिभरदनयोस्तत्पदाग्रं[2] निधाप्याऽऽ-
[3]जघ्ने तावत् स्वशक्त्या प्रहरति यवने [4]तच्छिरश्छिन्नवान् स[5] ॥४४॥

तत्सैन्याः मैयदा अप्यभिन उपगता आशुगं शक्तिखड्गैः,
क्रुद्धा ये विव्यधुस्त सपदि समुदिता भीम एकैकशस्तान् ।
हत्वा सच्छिन्नगात्रः स्वयमपि समरे भिन्नभालो गतासु-
भित्त्वा मार्तण्डबिम्बं त्रिदशपुरमगात् स्वाभिमानी विमानी ॥४५॥

तत्रौदिर्नाहराल्यो युधि सह युयुधे मैयदैरुद्यतासि-
र्हत्वा म्लेच्छांस्तु कांश्चित् प्रवरहयगतोऽन्येति यावत् पुरस्तात् ।
दृष्ट्वा तं मैयदास्ते समदमुपगता बाणवर्षं प्रचक्रु-
श्छित्वा तत्तच्छिरांसि स्वयमपि स हतोऽनूनयत् स्वर्गलोकम् ॥४६॥

यौधाश्चांपा इहायुत्सत युधि रिपुभिः कौंपिनो मेडतीया
मत्ता ऊदावताश्च प्रबलभटयुता आदि-चौहानवश्या ।
वालेया जैतमालाः क्षितिपतिपुरतो माण्डलाः कर्मवश्या
धावेचा ओहडाश्च [6]प्रधनविजयिनश्चेश्वरा जैतिनश्च ॥४७॥

राठोडेन्द्रप्रतापप्रबलहुतभुजा मैयदा दह्यमाना,
शाकम्भर्यां क्षणेन प्रलयमधिगता नैतदाश्चर्यमत्र ।
दृप्यद्दैतेयसेनासमुदयपतयो येन वृत्रासुराद्या
नीता नाशं तदानीमसुरसुररणेऽसौ स एवास्ति शक्रः ॥४८॥

राजेन्द्रेणैवमत्र प्रबलतरबलं मैयदानां समग्रं,
नाशं नीत्वाऽल्पकाले तमहमद-अलीमज्ञमागृह्य वीर्यात् ।
त्यक्त्वा प्राणावशेषं तदनु जयवहं दुन्दुभिं वादयित्वा,
गीतप्रौढप्रताप निजशिबिरवरं सर्वसैन्यं प्रजग्मे ॥४९॥

---

१ तस्य नवाबस्य इभस्य रदनयोः हस्तिदन्तद्वयमध्ये । २ तस्याश्वस्य पदाग्रं निधाप्य अश्वद्वारा संस्थाप्य । ३ आजघ्ने (यावत्) अताडयत् । अकर्मकत्व-विवक्षयाऽऽत्मनेपदम् । ४ तस्य यवनस्य हननज्ञानात् मैयदस्य । ५ स भीमः । ६ युद्धजयिन (तत्तद्वंश्या अतुल्तन युध्यन्ते स्म) ।

तावच्छाकम्भरीया द्विजकुलतिलका· केऽपि विद्वद्वरेण्या
आशीर्वाद ददुर्भो क्षितिप ! जय जयेत्युच्चकैः सप्रमोदम् ।
तेष्वेक· काव्यदक्षो नृपनिकटमुपेत्याह राजन् ! कृपालो !
किं ब्रूयां[1] त्वत्प्रभाव तदपि नरपते ! वच्मि वाक्चापलेन ।।५०।।

सिक्ताया युद्धभूमौ यवनगणशिरश्छेदरक्ताम्बुवृष्टचा,
विष्वग् दिक्षूल्लसन्त्या दलितकरिघटाकुम्भमुक्तासमूहे ।
निर्विघ्नं पुष्पिताया नृपवर ! भवत खड्गवल्या इदानीं,
जात [2]नामोपभुक्त्यै फलमधिकरस सज्जयश्री-समाख्यम् ।।५१।।

प्रोद्यत्खड्गप्रहारक्षतरिपुमदभृत्कुम्भिकुम्भस्थलान्त -
प्रस्यन्नासृक्स्रवन्तीतटनिकटलसत्कौणपाणाट्टहासा[3] ।
राजेन्द्र ! त्वद्-रण-क्ष्मा क्षतरिपुविकटोर स्थलस्फोटलुभ्यद्-
गृध्रौघ-त्रोटि-कोटि-प्रकटचटचटाशब्दरौद्राऽभवद् द्राक्[4] ।।५२।।

पुन कश्चिदाह—

नैवालिङ्गन्ति नून कठिनकुचयुगं त्वद्-गज-क्रूरकुम्भ-
द्वन्द्वत्रासेन वेण्या दधति न च रतिं त्वत्कृपाणभ्रमेण ।
भ्रूक्षेपाच्च त्रसन्ति त्वदसरलधनुर्भ्रान्तितो वैरिभूपा
इत्थ स्नातामपि स्त्री जहति हतिभयात्[5] ते महीपालमौले ! ।।५३।।

---

१ किं ब्रूयां कथयितु शक्नुयाम् । शक्यर्थे लिङ् । न किमपीत्यर्थ ।

२ नामेति सभावनायाम् । ३ अन्तस्तोऽभ्यन्तरत प्रस्यन्ना प्रसृता या असृक्स्रवन्ती रक्तनदी तस्यास्तटे लसन्त शोभमाना कौणपाना अस्रपाणा (राक्षसाना) अट्टाट्टहासा यत्र सा (त्वद्रणक्ष्मा) । ४ शत्रुवक्षसा स्फोटाय विदारणाय लुभ्यतो गृध्रौघस्य यास्त्रोटय चञ्चवस्तासा कोटयोऽग्रभागास्तासा चटचटाशब्दै रौद्रा भीषणा (रणक्ष्मा) द्राक् शीघ्रमभवत् ।

५ (स्वकीय) हानिभयात् । इत्थमेवम् । स्नातामृतुस्नातामपि स्त्री भार्या जहति त्यजन्तीति योजना, स्नातेतिकथनमात्रेण ऋतुस्नातापि गृह्यते । यथा–"स्नाता तिष्ठति कुन्तलेश्वरसुता" इत्यादि ।

श्यानत्वं वारिदस्य व्यपगतमधुना त्वद्रिपूणां मुखेऽयाद्
विद्युद्धाम स्थिरीसत्[1] त्वदसिवरमगाद् [2]गर्जितं दुन्दुभिं ते ।
वृष्टिस्त्वद्वैरिजायासुनयनयुगलेष्वेव वासं प्रचक्रे,
कोदण्डे ते विचित्रेऽजितनृप ! बलिभिच्चापकान्तिः[3] प्रविष्टा ।।५४।।

मत्वाऽत्युक्तं मदुक्तं ह्यजितनरपते ! कुप्यसि त्वं न चेद् भो !,
स्वस्वान्ते वा कदाचित्कविजन-कथितं[4] नो मृषा मन्यसे त्वम् ।
तद् वच्मि त्वत्प्रतापाभिधतपनमहातापतः शोषमाप्ता
अप्यम्भोराशयस्त्वत्प्रतिभटवनिताहृग्जलैरेव पूर्णाः ।।५५।।

श्रुत्वैतद् द्रव्यपुञ्जैर्द्विजवरनिकरान् हेमवासोभिरुच्चैः,
सत्कृत्य श्रेणिवर्यान्निखिलपुरजनान्निर्भयांश्चापि कृत्वा ।
स्वाज्ञामाघोष्य तत्रोचितमपि सुजनं स्वाधिकारे नियुज्य,
स्थित्वा कंचिच्च कालं पुनरजितनृपस्तत्पुरात् सम्प्रतस्थे ।।५६।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये सैयदसेनाविध्वंसो नाम
सप्तदशः सर्गः समाप्तः ।

---

१ स्वाभाविकं चलत्वं विहाय स्थिरीसत् स्थिरीभवदित्यर्थः ।
२ प्रकरणवशाद् मेघगर्जितम् । ३ इन्द्रधनुःशोभा ।
४ अस्माभिः कविजनैः कथितमित्यर्थः ।

# अष्टादशः सर्गः

श्रीमान् राजाधिराजो निजसुभटवरैरुद्यतैश्च स्वसैन्यैः,
शाकम्भर्यां प्रयाणे युवकसमभिधे सुस्वरे सज्जयाङ्के ।
हन्तुं हन्तेन्द्रसूनुं सुभटमुहकमं दृप्तमात्मीयशत्रुं,
सम्यक् सनह्य धीमानहिपुरमभितः[1] प्राप्तशोभः प्रतस्थे ॥१॥

श्रुत्वा सप्रस्थितं तं स मूहकमभटो लाडनूं प्लाव्य यातो
गत्वाऽर्वाङ् मूँडवां स त्वजितनरपतिः स्वीयसैन्यैरतिष्ठत् ।
ग्रामा उच्चावचाश्चाप्यहिपुरमभितो[2] लुण्ठितास्तत्पुरोगै-
रिन्द्रस्तु स्वीयपुत्रैः सह किल सुभटैर्वप्रमध्ये निलीनः ॥२॥

इत्युच्चैः प्राह वीरानजितनरपतिः कालवद् भीषणास्यः,
क्षिप्रं वप्रं हि भङ्क्त्वा ससुतमवनिपं मत्पुरोऽत्रानयन्तु ।
चेद् युध्येतैष कामं स्वरिपुवदविशङ्क्यैव निघ्नन्तु तत्र,
वीरास्ते तन्निदेशं समुचितमिति सगृह्य गन्तुं प्रवृत्ताः ॥३॥

श्रुत्वोग्रां तां नृपाज्ञां स्वयमपि च तदा सविमृश्येन्द्रसिंह,
तन्माता प्राह पुत्र ! त्वममरकुलजः क्षात्रधर्मं प्ररक्षन् ।
युध्यस्वाद्यैव नो चेदजितपदयुगं गच्छ नान्योऽस्त्युपायो
वप्रं रुद्ध्वा स्थितः स्याः किमवधि तनय! त्वं निरापत् तदग्रे! ॥४॥

स प्रोचे मातरं स्वां निखिलमिदमहं वेद्मि किं नाम कुर्वे,
भो मातर्हृत्प्रकम्पः प्रभवति मम तन्नाममात्रश्रुतेन[3] ।
तस्मादेतर्हि[4] गच्छ त्वमजितनिकटे ज्येष्ठपौत्रं गृहीत्वा,
तस्मै चाभूषणान्यप्युपहर करिणीं शीघ्रगां सन्धिहेतोः ॥५॥

---

१ नागपुरम् (नागौर) । २ नागपुर (नागौर) अभितः परितः, "अभितः परितः" इत्यादिना द्वितीया । ३ अजितनामश्रवणेनैव । भावे क्तोऽयम् । ४ इदानीम् ।

साम्ना कार्यं यथा स्यादथ कथमपि मज्जीवन रक्षित च,
भूपोऽसौ नोऽथ मुञ्चेद् भटपुरमपि चेयात् तथा त्व कुरुष्व ।
प्राप्त काल[1] हि साक्षात् त्वरितमिह जनो यो व्यपोहेत[2] बुद्ध्या,
नून धीनाद् स एव प्रतिदिनमखिलान्येव भद्राणि पश्येत ।।६।।

श्रुत्वेत्थ दीनवाक्य निखिलमपि पुराधीश्वर म्लानवक्त्र,
प्राहेन्द्र तस्य माताऽहह ! तनय ! जनापीडन यत्कृत प्राक् ।
नून तस्य त्विदानीं फलमिह परम भोग्यमेव त्वयाऽऽशु,
स्मृत्युक्ता न श्रुता किं कथमपि भवता राजधर्मा कदाचित्? ।।७।।

अव्यङ्ग शुद्धभूपान्वयज इह लसल्लक्षणाढ्य कृपालु,
कोशाढ्य सत्यमधो व्यसनविरहितो न्यायकृन्न्यायवेत्ता ।
शश्वद् वृद्धानुरक्त किल सकलकलाभृच्च लोकानुरञ्ज
आसिद्धे कार्यकर्ताऽखिलसमरजयी निग्रहानुग्रहेश[3] ।।८।।

धर्मोपायार्जितश्री सकलमिह च यो वेत्ति सच्चारदृष्ट्या,
भव्यौजस्वी यशस्वी जनक इव प्रजा-पालको निर्मदश्च ।
अश्रान्त दूरदर्शी स्फुटमधिकतर शस्त्रशास्त्रप्रवीण,
शश्वद् योऽदार्यवीर्यो जगति सुविदित सात्त्विकस्तात्त्विकश्च ।।९।।

गम्भीरश्चाप्युदारोऽनिशमधिकतया राजनीतिप्रवीण,
क्रोधो यस्य प्रणामावधि भवति पुमर्थत्रयीपोषकर्ता ।
दुष्टे त्विष्टेषु तुल्य फलपरिणमने कार्यदक्षस्तथेत्थ,
षट्त्रिंशत्-सद्गुणाढ्यो जगति नरपतिर्वर्णितो बुद्धिमद्भि ।।१०।।

राजान धार्मिक वै परपुरजयिन पालकं स्वप्रजाना
क्षान्त्या धैर्येण नीत्या युतमथ दधत स्वप्रसादावलोक्म्[4] ।

---

१ मृत्युम् । २ व्यपगमयन् । ३ निग्रहानुग्रहयोरीश समर्थ ।
४ स्वप्रसादावलोक अर्थात् स्मेरमुखता दधतम् ।

शास्त्रज्ञं शस्त्रविद्यानिपुणमतितरां पूजकं सद्-द्विजानां,
[1]मन्यन्ते सर्वमान्या जगति बुधवराः पारगा राजनीते. ।।११।।

पीड्यन्ते यस्य राष्ट्रेऽनिशमबलजना दुर्जनैर्हन्त राज्ञो
नूनं मत्तस्य तस्याप्यधिकबलवतोऽमूनि नश्यन्ति शीघ्रम् ।
ऐश्वर्यं कीर्तिरायुर्बलमपि जनतास्वेधमानः प्रभाव-
स्तस्माद् यत्नान्नृपालैर्निजनिखिलजना पुत्रवत्पालनीया ।।१२।।

राज्ञामेषोऽस्ति धर्मः परम इह महाबुद्धिमद्भिः किलोक्तो
दुःखार्तानां हि दुःखापहरणमनिशं पालनं धार्मिणां च ।
दुष्टानन्यायिनोऽन्यानपि शुचिमनसा शासतो ह्युत्पथस्थान्,
दृष्ट्वा शास्त्राणि तस्य त्रिजगति नृपतेर्गीयते कीर्तिरुच्चैः ।।१३।।

धर्मं पुंसा मनोवाक्तनुभिरनुदिनं सेवितं श्रद्धयाऽलं,
लोकान् निःशोकलेशान् वितरति तरति ज्ञो भवाब्धिं हि तेन ।
माता तातः स एवाभयद इह नृणां सर्वदा शर्मदायी,
तस्मिन् नष्टे तु नूनं धरणिपतिरपि क्षीयते क्षीणराज्यः ।।१४।।

चौरादिभ्यः प्रजा यः स्वयमवनिपतिः साध्वमात्यादिभिर्वा,
रक्षेद् गृह्णन् यथावत् करमिह स खलु प्रेत्य समोदतेऽलम् ।
हा दुष्टैर्मन्त्रिभिस्त्वं त्वनुदिनमयथावत् तुदस्येव[2] लोका-
स्तद्द्रव्यं भाति मृष्टं तनय ! विषयुतं भोजनं त्वन्तकृत्[3] स्यात्।।१५।।

सर्वैर्वर्णाश्रमैर्यत्पुर-जनपदयोः स्वस्वकर्तव्यनिष्ठैः,
कर्मद्वारा प्रमोदात् त्रिजगदधिपतिर्नित्यमाराध्यतेऽत्र।
तस्य स्वाचारमार्गे प्रतिदिनममले तिष्ठतः शासकस्य,
क्षोणीपालस्य सिध्यत्यभिमतमखिलं तत्प्रसादप्रभावात्[4] ।।१६।।

---

१ मङ्गलप्रद । २ व्यथयसि । ३ नाशकारि ।
४ तस्य निजगत्पते ।

दुर्भिक्षे दैवयोगादपि पतति यमाश्रित्य जीवन्ति सर्वे,
जीवाः कालोपलब्धं नवमिव कृषिका अम्बु पर्जन्यजन्यम् ।
सम्यग् यो राज्यवृद्धेरपि च जनपदाभ्युन्नतेर्हेतुभूत ,
पृथ्वीपाल पृथिव्या प्रथितपृथुयशा अस्ति धन्य स एव ।।१७।।

सरक्षा-शासनाद्यै र्निजगुण-निकरै राजते यो न तस्य,
राज्ञो व्यर्थ हि जन्माऽहह[1] ! भवति यथाऽजागलस्थस्तनस्य ।
नृ णा वाथो नृपाणा नृवपुषि समता राड्[2] गुणैरेभिरीश ,
शौर्य धैर्य प्रताप सुनयनिपुणता रक्षण शासन च ।।१८।।

भूपो य स्यादमान्द्यो[3] जनक इव सुतान् पालयेत् स्वा प्रजा यो
यस्मिन् सर्वा प्रजाश्च स्वजनक इव सुपूर्णानुरक्ता नितान्तम् ।
यो नित्य क्षात्रधर्मेऽभिरत इह तथा सोऽतुला राज्यलक्ष्मीं,
भुङ्क्तेऽत्रामुत्र[4] लोकेऽप्यमरवरगणा कुर्वते तत्सपर्याम्[5] ।।१९।।

यद्वन्नूतनो त[6] आम्राङ्कुर उचिततया पोष्यमाण प्रयत्ना-
न्नून कालेऽनुकूले सति सरसफल पोषकाय प्रदत्ते ।
तद्वल्लोक सुयत्नादनुदिनमधिक रक्षित स्यात् फलार्थ-
मेव स्वर्ण च रत्न गजतुरगरथादि प्रजापोषणात् स्यात् ।।२०।।

सर्पो यो निर्विष स्यात् स यदि निजफटाटोपकृद् भीतिद स्यात्,
तद्वच्चेद् भूप आडम्बरभृदरिजनैर्नाभिभूयेत जातु ।
सधि. स्यात् साधु सिद्धो यदपि सुशपथैर्नैव शत्रु प्रतीयाद्,[7]
यद् वृत्र राज्यलुब्ध सुविविधशपथैर्वश्यमिन्द्रो[8] जघान ।।२१।।

नोपेक्ष्य कश्चिदल्पोऽप्यरिरनुचितयावज्ञया बुद्धिमद्भि-
र्वह्नि स्वल्पोऽपि वृद्धो विततमपि वन भस्मसाद् यत् करोति ।

---

१ अहहेति दु खे । २ अत्र- 'किन्तु' इत्यध्याहार्यम् । ३ निगलस्य ।
४ परत्र । ५ तस्य पूजाम् । ६ नवप्ररोपित ।
७ विश्वस्यात् । ८ वश गतम् ।

नो बाधेताथ दीनं जनमबलमपि क्षोणिपालः कदाचिद्,
यस्मात् तेषां दुराशीर्हुतवहशिखया दह्यते वंशवृक्षः ॥२२॥

पुंसां निर्दोषदण्डादतिवहु रुदतामश्रुधारा स्रवन्त्यो[२]
मूलादुन्मूलयन्ति क्षितिपतितिलकस्यापि साम्राज्यवृक्षम् ।
नूनं सैन्यानि यस्य द्विजकुलविबुध[३]-द्रव्यपुष्टानि चेत्स्युः,
शीर्यन्ते तस्य राज्ञो विरचितसिकतासेतुवत्[४] [५]तानि सद्यः ॥२३॥

अग्निर्वा स्यात् प्रणीतः प्रणयननिपुणैरप्रणीतोऽथवा स्यात्,
सोऽभ्यर्च्यो देवतेति प्रकृतविधिपरैः सर्वदा वन्दनीयः ।
एवं विद्वानविद्वानुत भुवि जनुषा ब्राह्मणः पूज्य एव,
तेनाक्रम्यापि[६] भुक्तं क्षुदुपशमकृते राजसूयाद् विशिष्टम् ॥२४॥

राज्ञा सतर्जितोऽपि ह्युचितमवसरे दण्डितो वा दुरुक्तं,
स्वप्नेऽपि स्वामिदोषं किमपि न मनुते यः स्वचित्ते कदाचित् ।
भृत्योऽर्हः[७] सोऽस्ति राज्ञां नहि पुनरलसः क्रूर उग्रोऽप्यभक्तोऽ-
सतोषी दीर्घसूत्रो व्यसन-मिषपरश्चासहिष्णुश्च लोभी ॥२५॥

लुब्धं क्रूरस्वभावं व्यसनरतमथान्यायिनं चाप्रगल्भं,
[८]मन्दं वा दुष्कुलीनं जडमपि[९] सचिवं नो नियुञ्जीत राजा ।
नष्टीभूतं हि राज्यं भवति दुरधिकार्यन्वितं क्ष्माधिपस्य,
तस्माद् यत्नादमात्यस्तदनुगणगणो भूभुजा रक्षणीयः ॥२६॥

ये स्युः शास्त्रानभिज्ञाः पशव इव परं वञ्चिता राजनीत्या,
धृष्टत्वाद् वक्तुकामा विषयमवसरोपेक्षिणः[१०] मन्त्रकाले ।
ते ज्ञेया मन्त्रिरूपा रिपव इह निजा राजभिर्बुद्धिमद्भि-
स्तस्मात् सद्बुद्धिसाध्या भवति समुचिताऽमात्यमौलेर्नियुक्तिः ॥२७॥

---

१ दीनदुर्बलानाम् ।  २ वहन्त्यो, नद्य इत्यपि ध्वन्यते साम्राज्यवृक्षोन्मूलनात् ।  ३ देव ।  ४ वालुका- ।  ५ सैन्यानि ।
६ ब्राह्मणेन ।  ७ योग्य ।  ८ अलसम् ।  ९ मूर्खम् ।
१० अवसराननुरूपमित्यर्थः ।

[1]स्पष्टाशीर्वादवक्ता नृपतिहितरतो वेदवेदाङ्गवेत्ताऽ-
    प्यण्डेऽथो कर्मकाण्डे पटुरवनिभुजा स्यात् पुरोधा[2] अलुब्ध ।
दूतोऽन्तर्बाह्यभावेङ्गितविदथ यथोक्तानुभाषी स्फुटोक्तिः,[3]
    धीरो वीरः सहिष्णुप्रकृतिरपभयश्चोच्चवंशप्रसूत ॥२८॥

मेधावी सत्यवादी छलरहितमतिर्वाक्पटुर्लोभहीनो
    भाण्डागाराधिकारी सततमनलसः स्यात् सदा स्वामिभक्त.
भूपालस्येङ्गितज्ञोऽनिशमवसरवित् स्वामिभक्तो बलिष्ठो
    निर्भीक स्पष्टवक्ता व्यसनविरहित स्यात्तथा द्वारपाल ॥२९॥

शूर शस्त्रास्त्रवेत्ता समरविरचनोत्साहशाली बलिष्ठो
    भर्तुर्निर्देशकारी सुबहुलचतुरङ्गाढ्यसेनाकलाज्ञ ।
व्यूहादौ[4] सिद्धहस्त शकुनपरिचये पेशलो युक्ति-नीति-
    ज्ञानेऽथो पारदर्शी भुवि धरणिभुजामत्र सेनापति स्यात् ॥३०॥

नीतिज्ञात्रा विशेषादिह नरपतिना सर्वसाधारण-स्त्री-
    विश्वासो नैव कार्य कथमपि मधुराकारसमोहितेन[5] ।
भाव्य राज्ञां महिष्या स्वजनपरिजनान्तर्विदा स्वीयगेह-
    कार्ये निष्णातया[6] ऽच्छाच्छतनुवसनया सुव्यये मुक्तमुष्ट्या ॥३१॥

ये नून धर्मशास्त्रोदितविधिनियमान् सापवाद[7] विदन्ति,
    सत्य पथ्य च राज्ञोऽप्रियमपि खलु ये सुस्फुटीकर्तुमीशा ।
येऽरौ मित्रे च तुल्या सकलहितकरा शुद्धवंशप्रसूता-
    स्ते विद्वद्भिर्नमस्या[8] सदसि नरपते. स्यु सदस्या. प्रशस्या ॥३२॥

यस्या वृद्धा न सन्ति प्रभवति न सभा सा न ते सन्ति वृद्धा
    धर्मं ये नो विजानन्त्यथ विलसति नो यत्र सत्य न धर्म ।

---

१ स्पष्टशब्देन सदिग्धपदनिराकरण व्यज्यते । २ पुरोहित ।
३ स्फुटा उक्तिर्यस्य स स्पष्टभाषीत्यर्थ । ४ सेना-विन्यासादिकर्मणि ।
५ मनोहर । ६ निपुणयैव (भाव्यम्) । ७ प्रस्तुतस्य विधे- विशेषतयोक्तस्य तद्बाधको नियमोऽपवाद । तेन सह वर्तमान यथा स्यात्तथा ।
८ पूज्या ।

सत्यं तन्नास्ति सत्यं छ्नमणुकमपि स्यायि यत्रास्ति नूनं,
तस्माद् राज्ञां तथावद् भुवि भवति सभाऽऽयोजनं नो सुसाधम्[1] ॥३३॥

शास्त्राभिज्ञोऽतिधीरः प्रतिवचनपटु संस्फुरत्सूक्ष्मबुद्धिः,
प्रौढो नैपुण्यशाली सुबृहदनुभवोऽनीचवंशप्रसूत ।
धर्मज्ञो धर्मचर्यानिरतशुचिमना विश्वविख्यातकर्मा,
राज्ञा दूतः प्रभूत-स्मृतिपटुरपराभूतकर्मा सदा स्यात् ॥३३॥

दूतं कस्याचिदापद्यपि नृपतिवरः कर्हिचिन्नैव हन्या-
च्चेद्धन्याद् भूरिकाल वसति स नरके मन्त्रिसभ्यैं समेत ।
तस्माद् दूत ह्यु्पेत द्रविणवितरणै साधु सत्कृत्य राज्यात्,
कृत्वा च श्राव्यवाक्यै प्रमुदितहृदय स[2] प्रतिप्रेषयेत ॥३४॥

दीन चाऽऽनम्रमौलि सविनयमभय याचमानं स्वदोषं,
स्वीकृत्यायानुतप्त शरणमुपगत सापराध मनुष्यम् ।
मुञ्चेत् स्वल्पे तु दोषे यदि खलु स पुनर्वापराध्येत् कदाचिद्,
देश काल ह्यवस्थामपि समनुसरेत् किन्तु सर्वत्र विद्वान् ॥३५॥

मोहाद् द्वेषाद् भयाद्वा शरणमुपगतं यो न रक्षत्यविद्वान्,
न्याय्याद् भ्रष्ट पथस्तं जनमधमतया न प्रशसन्ति सन्त ।
राज्ञामेषोऽस्ति दोषो यदिह भुवि खलूपेक्षणं सश्रिताना,
तेषा सरक्षया तु प्रसरति सुयशोऽन्ते च नाकाधिकारः ॥३६॥

जातत्रासस्य पुंसः शरणमुपगतस्याभिरक्षाविधानात्,
संपूर्णस्याश्वमेधस्य हि भवति फलं दुर्लभं यत्त्रिलोक्याम् ।
आपन्नाना[3] रणाग्रे तृणमपि वदने गृह्णता पीडितानां,
यो धेनूनामिवाऽसूनवति[4] स हि नृपोऽस्तीह गोदीनपाल ॥३७॥

---

१ सुतरम् २ नृपतिवर । ३ आश्रितानाम् ।
४ प्राणान् (अवति रक्षति) ।

हन्तव्यो नाऽपि शत्रुर्युधि विनतशिरा प्राञ्जलिर्जातु[1] राज्ञाऽ-
ऽविभ्रष्टो वापि[2] वाहात्[3] पुनरपि पतितो भूतले य कथचित् ।
रक्षा वर्णाश्रमाणामवहितमनसा क्षोणिनाथेन कार्या,
हन्तव्यास्तेन दुष्टा अथ नरपतिना साधव॰ पालनीया॰ ॥३८॥
य॰ स्यात् सन्मन्त्रतत्त्वार्पितविमलमतिर्देशकालस्थितिज्ञो
यो वा राज्ञ प्रजानामपि हृदभिमत सा॒धु बोद्धु॒ समर्थ ।
धर्मज्ञो धर्मशास्त्रानुसरणनिरत स प्रसन्नास्यपद्म,
प्राच्यार्वाचीनवृत्तानुभवपदुरिह स्यात् परामर्शमन्त्री[4] ॥३९॥
अन्त सारैरजिह्मै[5]र्दृढबलविदितै कर्मकौशल्य-वित्तै,[6]
[7]सुस्निग्धै-र्भक्तिमद्भि[8]-र्जनहृदयहरैर्दूरदृष्टिप्रतीतै[9] ।
बिभ्राणै कार्यभार प्रथितमहिमभिर्मन्त्रिभिर्धार्यतेऽत्र,
प्राज्य राज्य नृपस्योच्छ्रितमिव सुमहन्मन्दिर स्तम्भवर्यै ॥४०॥
य स्याद् राज्ञो हितेच्छु स हि जनपदिना द्वेष्यता याति लोके,
यश्च प्रीत्या हितानीच्छति जनपदिना त न राजाऽनुरज्येत् ।
इत्यन्योन्य विरोधे सति जनपदिना भूपतेश्चोभयेषा,
यत्नादन्वीहमानो[10] हितममलमतिर्दुर्लभ॰ कार्यकर्ता ॥४१॥
योऽशृण्वानो[11] नृप स्यात् स तु जनविपद मन्त्रिभिर्बोध्य[12] आत्म-
दोषोन्मोक्षाय[13] यद्वद् बहुविधि विदुरेणाम्बिकेयो[14] व्यबोधि ।

---

१ कदापि । २ वाऽत्र समुच्चये । ३ वाहात् वाहनाद विभ्रष्टोऽपि नो हन्तव्य इति सर्वत्रोन्नेयम् । ४ परामर्शदाता मन्त्रीति मध्यमपदलोपी समास । समतिप्रदोऽमात्य (Adviser) । ५ अकुटिलाशयै *सरलश्चेति क्रमान्मन्त्रिपक्षे स्तम्भपक्षे च ।* ६ *राज्यकार्य*-विधाननैपुण्येन शिल्प-कौशलेन च प्रख्यातै । ७ प्रजा प्रति प्रेमवद्भिर्मुचिक्कणैश्च । ८ राजान प्रति भक्तिमद्भी रचनाविशेषवद्भिश्च ।
९ दूरदर्शनेन ख्यातैर्ज्ञानैश्च । १० (हितम्) अन्विच्छन् ।
११ अशृण्वान य श्रवणशीलो न स्यादित्यर्थ । "ताच्छील्यवयोवचनशक्तिषु चानश्" इति परस्मैपदित्वेन प्राप्त शतृप्रत्यय बाधित्वा ताच्छील्ये चानश्।
१२ 'स' इत्यनभिहितत्वेन विवक्षित कर्मानुसृत्य 'बोध्य (बोधनीय)' इत्यत्र पुस्त्व प्रयुक्तम् । "बुद्धिभक्षार्थयो शब्दकर्मकाणा निजेच्छया' इति वचनात् । १३ दोषादात्मान उन्मोक्तुमिति भाव । १४ अम्बिकाया अपत्य धृतराष्ट्र ।

पृष्ट स्वस्वामिना यो वचनमनुचित नैव जल्पेत् स एव,
मन्त्री स्याच्चेत् स नून प्रियवचनपरस्तर्हि राज्ञ. सखापि ।।४२।।

लोके लोकाः प्रभूता प्रियवचनपरा यत्र कुत्रापि लभ्या.,
पथ्यस्याथाऽप्रियस्य क्वचिदपि न मिलेद् भाषक. श्रावको वा ।
मन्त्री चेत् स्वामिभक्त सुमतिरपि भवेत् तर्हि सोऽतिप्रयत्नाद्,
बुद्ध्वा बुद्धचा स्वभूप हितमहितमथारम्भतो[1] बोधयेत् प्राक्।।४३।।

राजा स्यान्न्यायकार्ये समधिकसमदृक् पक्षपात विहाय.
समान्या सनिका अव्यवहितमति[2] तत्तत्-सुकर्मानुसारम् ।
ये नोत्माहाभिभङ्ग क्वचिदपि न भवेत् स्वामिनो वञ्चनाऽपि,
तस्माद् राज्ञा विशेषादुचितमनुचित वीक्ष्य भृत्येषु भाव्यम् ।।४४।।

क्रोधो यस्य प्रसादोऽपि च भवति सदा निष्फल स्वीयलोके,
नेच्छत्युर्वीश्वर त कथमपि जनता कामिनी स्त्रीव वृद्धम् ।
य सौम्यो मित्रवर्गेऽपि च सुजनगणे सुप्रसन्नाकृति स्यात्,
क्रुद्धश्चाऽमित्रवर्गेऽपि च खलनिवहे सोऽस्ति भूप प्रशस्य ।।४५।।

अत्युग्र नानुरज्येन्नृपमपि जनता ह्युग्रता द्वेषहेतु-
र्लोका नेच्छन्ति लुब्ध नृपमथ कृपण लम्पट नापि लोलम् ।
सर्वोऽपीदृग् विनिन्द्य किमथ नरपतिर्य प्रकृत्या कृतघ्न-
स्तस्माद्दोषैरशेषैर्भवति विरहितो यः स एवास्ति राजा ।।४६।।

भूपालेऽथागुणज्ञे सति सुगुणि-गुणा व्यर्थतामेव यान्ति,
कान्ते यद्वद् विमौढ्य गतवति युवतेर्यौवनं चारु साध्व्या ।
स्याद् वा स्वामी समृद्धो यदि स न वितरेद् व्यर्थ एवार्थिवर्ग,
नून कुर्यात् क्षुधावत्यपि सुकुसुमिते किंशुके कि शुकाली[3] ?।।४७।।

---

१ कस्यापि कार्यस्यारम्भात् प्रागित्यर्थ ?    २ अवहिता सावधाना मतिर्यत्र कर्माणि तत्तथेति क्रियाविशेषणम् ।    ३ शुकानामाली पङ्क्ति ।

रक्षेद् यो भूमिमेता स खलु निगदितो भूमिपालोऽत्र विज्ञैः,
कुर्याद् रक्षा प्रजाना सयतनमपि यः स प्रजारक्षक स्यात् ।
लोकानां रञ्जनेन प्रतिदिनमपि यो राजते सोऽस्ति राजा,
तत् पूर्वोक्तं गुणाना त्रितयमिह धरन् किं प्रजापीडकः स्यात्? ॥४८॥

य स्वीयासु प्रजासु क्षितिप इह यथावत् प्रवर्तेत नैव,
नो सोऽत्रं वापकीर्ति भजति स भजतेऽन्ते स्थितिं नारकेऽपि ।
नैव स्थायी निवास क्वचिदपि हि सम केनचित् कस्यचित् स्याद्,
देहो यद् देहिनाऽन्ते सह चलति न तत् किं सुताद्याश्रलेयु ?॥४६॥

चत्वारोऽमी सुतीक्ष्णा सहृदयहृदय कण्टका पीडयन्ति,
वीर्यान्मुक्तोऽप्यशक्तोऽप्यतिरुषमयते यो हि निष्कारण स ।
दीनोऽप्यप्राप्यमर्थं समभिलषति यो भिक्षुरारम्भवाश्च,
यश्चारम्भाद् विरक्तो भवति समधिकालस्यवान् सद्गृहस्थ ॥५०॥

द्वावेनौ वीरमध्ये सुदृढतरशिला कण्ठ आबध्य पात्यौ,[१]
वित्ताढ्यो बद्धहस्तोऽपि[२] च धनरहितस्त्वायतोऽतिव्ययी च ।
द्वावप्येतौ पुनासौ त्रिदशपतिपुरे तिष्ठतो दीर्घकाल,
शक्तश्चेत् स्यात् क्षमावान् भवति यदि दरिद्रो महोत्साहवाश्च ॥५१॥

भिन्दाते द्वावपीमौ खलु दिवसपतेर्मण्डल त्वत्र लोके,
योगाभ्यासी परिव्राडपि च रणमुखे समुखे यो विनश्येत् ।
अन्यायोपार्जितस्य द्विविध इह परीणाम उक्तो धनस्य,
सत्पात्रे त्वप्रदान वितरणमपि चापात्रहस्ते नितान्तम् ॥५२॥

जह्याद्[३] षीनान् षडेतान् भुवि विहततरो[४]-र्नाविको यद्वदब्धा-
वाचार्यं सूपदेशस्खलितमतिमथो ऋत्विज चाऽप्यशिक्षम्[५] ।

---

१ क्षेपणीयौ । २ कृपण इत्यर्थ । ३ त्यजेत् ।
४ (यथाऽब्धौ नाविकः) भग्ना नावो (जहातीत्यर्थ )। ५ शिक्षारहितम् ।

रक्षोद्विग्नं च नृपं कटुतरवचनं गेहिनीं स्नेहहीनां,
गोपालं ग्रामवासप्रियमथ वनवासेच्छुकं नापितं च ॥५३॥

हातव्या नैव पुंसा विमलमतिमता षड् गुणाः सर्वकालं,
सत्यं दानं क्षमाऽथो धृतिरनिशमनालस्यमीशार्चनञ्च[1] ।
त्यक्तव्याः सप्त दोषाः सपदि नृपतिभिर्दण्डपारुष्यमेवं,
वाक्-पारुष्यं स्त्रियोऽक्षाः पुनरपि मृगया-मद्य-निन्द्यव्ययाश्च ॥५४॥

पञ्चाप्येतान् प्रमत्तानिह भुवन इमे वञ्चयन्ते हि पञ्च,
रोगग्रस्तान् सुवैद्याः स्त्रिय उदितमनोजस्पृहान् कामुकांश्च ।
यज्ञेच्छून् याजकाश्चाऽप्यधिकविधि-विवादांश्च पुंसः क्षितीशा
बुद्ध्या हीनान् विमूढानपि विशदधियः पण्डिता यत्र-तत्र ॥५५॥

निश्चित्यैवैकया द्वे स्ववशमुपनयेत् त्रींश्चतुर्भिर्हि धीमान्,
जित्वा प्राक् पञ्च शत्रूंस्तदधिपतिमपि द्राग् वशीकृत्य षष्ठम् ।
द्यूतं मानं सुराऽथो परयुवतिरतिः स्तेयवेश्यानुरागा-
वाखेटश्चेति सप्तव्यसनविरहितः संभवन्[2] याति नाकम् ॥५६॥

अष्टैते सद्गुणाः सन्मनुजमनुदिनं प्रीणयन्ति प्रकामं,
सत्प्रज्ञा सत्कुलत्वं श्रुतमपि च दमः सत्कृतज्ञत्वयोगः ।
दानं द्रव्यानुसारं प्रथितशुचियशस्त्वं तथा विक्रमश्च,
तस्मादेतान् दधानस्त्वमपि वसुमतीमण्डले मण्डनीयाः[3] ॥५७॥

धर्मं नावैति मत्तः क्षुधित इह भयार्तः प्रमत्तः सकामः,
क्रुद्धः श्रान्तस्त्वरावानपि यदि न[4] महान् लुब्ध उन्मादवांश्च ।
वाग्बाणैर्विध्यमानो ज्वलति हि सततं दीन उच्छ्वासनादै-
स्तस्मात्तं नो कदाचित् परुषतरवचः श्रावयेद् व्यर्थमेव ॥५८॥

---

१ परमेश्वरार्चनं । २ एकया बुद्ध्या द्वे हिताहिते निश्चित्य चतुर्भिः सामाद्युपायैस्त्रीन् शत्रुमित्रोदासीनान् वशं नयेत् (प्राक् पञ्चाक्षाणि निर्जित्य पश्चात् तदधिपं षष्ठं मनोऽपि वशीकृत्य सप्तव्यसनरहितः सन् स्वर्गं यातीत्यर्थः । ३ भूपतीनिव चिरमव्ययमानिदम् ।
४ यदि न ममत्वादियुक्तो महानपि स्यादित्यर्थः ।

सत्यासन्ने विनाशे सपदि कलुषिता स्याद् यदा शुद्धबुद्धि:,
तस्मिन् कालेऽनयोऽपि[1] स्फुरति नयतया चित्ततो नो स याति ।
[2]सोऽनर्थं मन्यतेऽर्थं हितमहितमथो सारमेव ह्यसार,
दु:ख चापद्यमानं सुखमपि मनुते शिक्ष्यमाणोऽपि विज्ञ: ॥५६॥

वार्द्धक्य रूपमेवापहरति च पर धैर्यमाशा च मृत्यु,
प्राणान् सद्धर्मचर्यामपि नियतमसूया श्रिय चापि कोप ।
शील चानार्यसेवा ह्रियमपि सहसा कामवेग प्रवृद्धो
मैत्रीं चाप्रीतिरीति परमपहरते सर्वमेकोऽभिमान: ॥६०॥

आत्मा पुण्या नदीय वहति च निनरा सत्यमेवाऽमलाऽम्भ
एषा धैर्यप्रतीरा विलसति च दमोर्मिर्दयोत्कर्षपद्मा ।
यस्या स्नातो नितान्त सपदि सुमनुज पूयते पुण्यकर्मा,
तस्मादेवानुकान सुविशदमतिना पुण्य आत्मा विमृश्य ॥६१॥

एकाकी स्वादु वस्तु क्वचिदपि न सुधीर्भक्षयेत् तद् विरुद्ध-
मेको गच्छेन् प्रवासे न खलु यत इहामित्ररोगादिभी स्यात् ।
एकाकी निर्णयेन्नातिगहनविषयास्तत्र यद्भ्रान्तिभीति-
रेकाकी जागृयान्नाखिलजनशयनान्ते यतो दस्युभीति ॥६२॥

सर्वश्रेयस्कर स्यात् सततमिह नृणा शाश्वतो[3] धर्म एव,
पूर्णा शान्ति प्रदत्ते सकलमतिमता सर्वदैव क्षमैका ।
एका विद्यैव नून भवति तनुमता सूक्ष्मदृष्टिर्विशुद्धा,
एकाऽर्हिंसैव लोक नयति सदुदय[4] लौकिक चात्मिक च ॥६३॥

यो राजा धर्मकामान् सह निजसचिवैरात्मकर्तव्यनिष्ठ,
सेवेत प्राप्तकालं व्यसनविरहितस्त विपन्नो ग्रसेत ।

---

१ अनय (अनीति)। २ कलुषितबुद्धि । ३ सनातन ।
४ परमोन्नतिम् ।

कार्याकार्यं तथा यो हितमहितमथालोच्य कार्यं करोति,
प्रत्यर्थिस्पर्द्धिवर्गं[1] कथमपि न पराभूयते मोदते स ॥६४॥

लोके शास्त्रानभिज्ञा पशव इव नराः सन्त्यनेके पृथिव्या,
येऽज्ञात्वैवार्थसारं हितमहितमयो स्वामिन स्वस्य नूनम् ।
प्रागल्भ्याद् वक्तुमिच्छन्त्यनवसरमिहाऽङ्गीकृता मन्त्रकार्ये,
ते ज्ञेया मन्त्रिरूपा सुविशदमतिभि शात्रवा एव साक्षात् ॥६५॥

धाष्ट्र्याज्जल्पन्ति काले‍ऽहितमपि सुहितं दर्शयन्तः प्रभुं ये,
राज्यान्निर्वासनीया कथमपि खलु ते दुष्टचित्ता नृपालैं ।
यस्मात्ते क्ष्वेडकुम्भा·[2] स्फुटममृतमुखा सर्वतो नाशमेव,
कर्त्तुं नित्य यतन्ते प्रथममरिजनैं प्रेषिता गुप्तचारा ॥६६॥

मित्राकारानमित्रान् प्रथममवनिपः संपरीक्षेत पश्चात्,
प्रारब्धे मन्त्रकार्ये समवहितमना संनियुञ्जीत शुद्धान् ।
कार्येष्वेतादृशेषु त्वरितमिह समारोपणं मान्द्यमेव,
यस्मात्कार्ये विनष्टे सति भवति वृथा तत्प्रतीकारयत्न· ॥६७॥

योऽवज्ञायारिमल्प नहि खलु यतते रक्षितुं स्वं समन्तात्,
सोऽनर्थान् याति भूरीननवहितमति· स्थानतो भ्रंशनं च ।
तस्माद्धेतो क्षितीश सह सुमतिमता मन्त्रिणा मन्त्रकाले,
प्रच्छन्न मन्त्रयित्वा कथमपि परित शत्रुमुन्मूलयेत ॥६८॥

एतादृग्[3] भूमिपाल· क्वचिदरिनिकरैर्नाभिभूयेत जातु,
जित्वा शत्रून् समग्रानिह सह सुजनैर्मोदतेऽन्ते स्वरेति[4] ।
धर्मज्ञो धर्मशील शमदमनिरत· शुद्धधर्मप्रचारी,
ब्रह्मण्यो दानवीरोऽखिलजनहितकृद् मान्यसंमानलग्नः ॥६९॥

---

१ प्रत्यर्थिना रिपूणा स्पर्धिनामीर्ष्याविना च वर्गं । २ विषकलशा
३ उत्तरार्ध- वक्ष्यमाण- प्रकार इत्यर्थ । ४ स्व स्वर्गम् ।

य स्वीयासु प्रजासु क्षितिपतिरयथावत् प्रवर्तेत लोके,
सोऽवश्यं गर्हित· स्यादिह भुवि तु पुनर्यास्यिधश्चान्तकाले ।
चेद्देहेनाऽपि योगो भुवन इह भवेत् स्थावरो देहिनो नो,
सभाव्येतैष[1] तर्हि स्वसहज-गृहिणी-बन्धुपुत्रादिभि· किम् ? ॥७०॥

एकाकी जीव उर्व्या धरति हि जनन मृत्युमप्येक एव,
भुङ्क्तेऽसदेहमेक· सुकृतमपि तथा दुष्कृत चैक एव ।
तत् पापोर्पाजिनाया द्रविणवसुमतीमपदो हन्त नित्यं,
सभोक्ता तत्कुटुम्बी परिजनमिपत किन्तु दण्डच स एव ? ॥७१॥

जीव पुण्यात्यधर्मावरणपरिवृतो मोहत· स्वं कुटुम्ब,
तत्तु[2] स्वप्राणवित्तान्यजहदमुमहो[3] अन्तकाले जहाति ।
त्यक्तस्तै· सर्वथाऽसौ स्वयमघमुपगृह्यात्मधर्माद् विमुक्तोऽ-
सिद्धार्थो यात्यधस्तान्नरकमतिमहायातनाना निवासम् ॥७२॥

तेनैतत् स्वप्नतुल्य निजमनसि विमृश्यात्मनात्मानमेव
सयम्याशु प्रयत्नाद् भव भवविरतोऽर्हदिव शान्तचित्त ।
यो मायामोहितात्मा नहि भजति विभु कृष्णचन्द्र कदाचित्,
सोऽनन्तक्लेशहेतु प्रभवति तरितु नैव ससारसिन्धुम् ॥७३॥

ये स्वे गेहान्धकूपे पशव इव पतन्त्यज्ञताऽत्यान्धिताक्षा[4]–
स्तेषा साम्राज्यलक्ष्मीमदविकलहृदा भूभुजा दुर्दशैव ।
यत्तेषा केवल स्त्री-कुल-दुहितृसुत-भ्रातृ-सबन्धि-बन्धु-
चिन्ता-ज्वालैव नित्य ज्वलयति हृदय का कथा हन्त शान्त· ॥७४॥

स्वे देहे बुद्बुदाभे नरपतिरहमस्मीति जाताभिमानो
मत्तैर्भाश्वाधिरूढोऽगणितभटमहावाहिनीशैर्वृतश्च ।

---

१ एष स्थावरो योग । २ तत कुटुम्ब तु । ३ तत (जीव प्राणि) कृते प्राणवित्तोत्सर्गमकुर्वन् । ४ अज्ञानान्धकारेणात्यन्धीकृतनेत्रा इत्यर्थ ।

सुप्रौढ पर्यटन् गां[1] कमपि न गणयन्नन्ध एष क्षितीश ,
    स्थास्याम्येवेदृशोऽहं सततमिति निजे मन्यते मानसेऽज्ञ ।।७५।।

नित्य मर्त्योऽनिजुब्यो विमृशति मनसीद हि कार्यं प्रकार्यं,
    कार्य कार्य मयेय त्विति च निरवधिव्याप्तचिन्ताप्रपञ्च ।
नानाभोगानुरक्तो विषयसुखपरस्त कदाप्यप्रमत्त ,
    काल. क्रूर. कराल. कवलयति महामूषक कुण्डलीव[2] ।।७६।।

प्राग् मातङ्गेन्द्र-राजी-रथ-तुरग-पदाति-व्रजेनानुयात ,
    सर्वास्वाशासु गच्छन् कनकरुचितनु प्रोच्यतेऽय नृदेव ।
कालेऽतीते तदेव प्रवरवपुरहो ! भस्मसात् सत्वर स्यात्
    तस्माद् व्यर्थोऽभिमानो भवति हि भुवनेऽखण्ड-भूस्वामिनोऽपि।।७७।।

जित्वा दिग्मण्डल प्रागविकलमपुनर्योधनावश्यकत्व',
    सर्वेषामाधिपत्ये खलु धरणिभुजा राजमानोऽर्चितस्तै ।
उद्दृप्त सार्वभौमोऽप्यहह ! हृदयहृत्-कामिनीना कटाक्ष-
    [3]स्फेयोवाणै प्रविद्ध क्रियत इह जगत्याशु लीलाकुरङ्ग ।।७८।।

शत्रूञ्जित्वाऽपि बाह्यान् ध्रुवमजितषडभ्यन्तरारातिवर्गो
    नित्य दु खाभिभूतो भवति हि मनुजस्तप्यमानश्च तापै ।
तस्मात् सत्सङ्गमाप्त्वा हरिगुणरसमापीय सवृद्धभक्ति-
    राजीव सोऽत्र राधारमणमभयद भावयेद् मानसस्थम् ।।७९।।

ब्रह्मघ्नो वापि गोघ्नो भवतु च पितृहा मातृहा भ्रातृहा वा,
    मित्रद्रोही सुराप स्फुटमुत कुलकन्याऽभिमर्शी नृपघ्न ।
स्तेन स्त्रीघ्नो गुरुघ्नोऽप्युत गुरुगृहिणीगाम्युताहो कृतघ्न ,
    सर्वेऽमी कृष्णनामस्मरण-जप-समुच्चारणै स्युर्गताघा ।।८०।।

---

१ पृथ्वीम् ।    २ सर्प इव ।    ३ स्फेयोभि स्फिरतरै प्रभूततरैर्बाणै ।
'प्रियस्थिरस्फिर" इत्यादिना ईयसि स्फादेश ।

तादृक् पापी न शुध्यत्यति-यमनियमैर्भूरितीर्थव्रतैर्वा,
दानैः पुण्यैस्तपोभि पुनरपि हवनैस्तन्त्रमन्त्रोपचारै ।
यादृक् श्रीकृष्णविष्णु-त्रिजगदधिपतीत्यादिरूपं परात्म-
सन्नामोच्चारणैर्वा तदमलचरितोत्कीर्तनैर्नित्यमेव ।।८१।।

विद्यातीर्थाभिनेक-व्रतयमनियम-प्राणरोधैस्तपोभि-
र्जप्यैर्यज्ञैरनेकैर्गजरथ-सुरभि-क्ष्माऽश्व-हेम-प्रदानैः ।
नो शुध्यत्यन्तरात्मा कथमपि हि नृणां तत्प्रशोधोत्सुकानां,
तादृग् यादृग् मनोऽब्जे स्थितवति भगवत्यच्युते प्राणनाथे ।।८२।।

वापीकूपह्रदादौ निपतित उदकाधार[1] आध्यर्दितो वा,
कान्तारान्त स्थितो वा तुमुलरणगतो वाथ कारालयस्थ ।
जल्पन् वा जृम्भमाण. प्रबलपरवशो वा विपत्तिस्थितोऽपि,
श्रीमाँलक्ष्मीश्वरो मे शरणमिति वदन् मुच्यते पातकेभ्य ।।८३।।

विष्णु संकीर्त्यमानः श्रुतिगदितयशा भक्तचित्त प्रविश्य,
नि शेषं पूर्वजन्मार्जितमघनिचय नाशयत्येव सम्यक् ।
मिथ्यालापा मतास्ते तदमलचरित यत्र कीर्त्येत नैव,
यत्र प्रस्तूयते[2] स प्रकथितमिह तद् मङ्गल चापि सत्यम् ।।८४।।

वाग्विन्यासे न यस्मिन् किमपि हरियश पावन पावनाना,
पेयं पीयूषपूरप्रियमधुररस लभ्यतेऽलभ्यमज्ञैं ।
त हंसा ध्वाङ्क्षतीर्थास्पदमिव[3] सुजना दूरत सत्यजन्ति
यस्मात्ते साधुहंसा हरिचरितमये मानसे सरमन्ते ।।८५।।

यादृक्षस्तादृशोऽपि प्रभुचरितमयो वाग्विलास पृथिव्या,
सद्भि सग्राह्य एव प्रियमधुरतया का कथा चेत् स शुद्ध ।

---

१ जलाशये । २ स विष्णु प्रमन्नृपदमानीयते । ३ काकाना तीर्थस्थानमिव काकोच्छिष्टजलमित्यर्थ ।

किं सम्प्राप्तो गुडोऽपि प्रियमधुरतया त्यज्यते तद्रसज्ञैः,
सम्प्राप्ता स्यात्सिता[1] चेच्छुचिमधुररसा तर्हि किं श्लाघनीयम्?।८६।

लब्ध्वा ये मानुषत्वं हरिचरितरसं मूढचित्तास्त्यजन्ति,
सेवन्ते चानुकालं विषयरसकथा निष्फलं जन्म तेषाम्।
धर्मत्राणात्तलीलावपुष[2] इह हरेस्तच्चरित्राणि[3] यत्नात्,
सर्वौघध्वंसकानि ध्रुवमनुशृणुयात् संपठेच्छिक्षितस्तु ।।८७।।

संकेताद्वा छलाद्वा प्रहसनमिषतो वाथ हेलाप्रसङ्गाद्,
वैकुण्ठाधीशनामग्रहणमखिलजन्माऽघविध्वंसकं स्यात्।
[4]नष्टो दष्टश्च भीतः स्खलित इह हरेर्नाम यः संगृणाति,
सोऽवश्यं यातनां नार्हति शमनकृतामप्यहो[5] मर्त्यधर्मा ।।८८।।

यन्नामोच्चारणस्य त्रिजगति महिमा नैव शक्येत गातुं,
यस्मात् प्राणावसानेऽधमचरितरतोऽजामिलाख्यः स पापी।
याम्यैर्दूतैर्ग्रहीतुं ध्रुवमभिलषितोऽप्याशु नारायणेति,
स्वं पुत्रं भाषमाणो हरिपदमगमत् तन्महापाशमुक्तः ।।८९।।

अज्ञानाज्ज्ञानतो वा कथमपि जगति श्रीरमानाथनाम,
श्रेयः[6] संकीर्त्यमानं दुरितमपहरेदाशु वह्निर्यथैधम्[7]।
यद्वत् सर्पोपणस्यौषधमविकृतिमत् सेवितं केनचित्स्या-
न्निःशेषं शोषदोषं शमयति सुतरां तच्छरीरप्रवृत्तम् ।।९०।।

न स्याच्छुद्धिर्नराणां कथमपि तु तथा नाम दुष्टाशयानां,
विद्यातीर्थव्रताद्यैर्यमनियमतपःसत्क्रियापुण्यदानैः।
श्रीकृष्णस्य त्रिलोकीशितुरघशमिनो योगिभिश्चिन्त्यमान-
धाम्नो नाम्नो जपाच्च श्रवणमननतः शुद्धिरद्धा[8] यथा स्यात्।।९१।।

---

१ परिष्कृता मितशर्करा (मिश्री)। २ धर्मरक्षणार्थं गृहीतशरीरस्य।
३ तत् तस्मात्कारणात्। ४ पलायितः सन्। ५ यमराजप्रदत्ताम्।
६ प्रशस्यतरम् (नामविशेषणम्)। ७ एधमिन्धनम्। ८ सत्यम्।

लब्ध्वा पूर्वं सुपुण्यैरिह धरणितले दुर्लभ मानुषत्वं,
    ससारस्य प्रपञ्चेऽनवधि निपतितो मोहितो मूढभावात् ।
विष्णो पादारविन्दं न भजति कुमति कर्हिचिद् वा कथचित्,
    तस्याच्छन्नेऽन्धकूपे[1] पतितवत इवाऽसत्पशोर्व्यर्थमायु[2] ॥९२॥

नूनं यन्मायया ये विमुखितमतयो मानवास्ते कदाचित्,
    ससारध्वान्तविध्वसकमथ नमता कल्पवृक्ष जनानाम् ।
श्रीमद्राधामुकुन्द भवविषयसुखावाप्तिकामा भजन्ति,
    तत्सौख्य तूपभोग्य नरकगतिमतामप्यहो वर्तते हि ॥९३॥

इत्थ प्रोच्येन्द्रसिह निजतनयमथाश्वास्य सा नि श्वसन्त-
    मादायाऽथ स्वपौत्र त्वरितगतिमती हस्तिनी भूपणानि ।
आरुह्यागान्नृयान सरभसमजित-क्ष्मापति तस्य माता,
    नत्वा चाढौक्य तानि प्रकटितविनया स्तोतुमारब्ध चैनम् ॥९४॥

वीर ! त्व कार्मुक चेदजिननृप ! धरस्युग्रटङ्कारघोर,
    दृष्ट्वा जाग्रत्स्वपापोदितय[3] इव भवन्त्याशु कङ्कालशेषा ।
शङ्कातङ्काकुलान्त करण[4] उपसरद्भ्रान्तिभीतिप्रकम्प-
    स्त्यक्त्वाऽहकारमङ्काद् विसृजति गृहिणी हन्त दिल्लीपुरेन्द्र ॥९५॥

नो दृष्ट नो श्रुत वा क्वचिदपि तु मया जातुचिद् वारिणा यद्,
    नि शेषं वारि शुष्यत्यजितनरपते ! भूपवन्द्याङ्घ्रिपद्म !
म्लेच्छोल्लोलोत्तरङ्गप्रतिभटपृतना-तेज-उद्वेल-वारि,[5]
    यत् खङ्गालोकवारि[6] प्रभुवर ! भवत शोषयत्यद्भु त तत् ॥९६॥

भो भो वीराऽजितेन्द्र ! क्षितिपतिमुकुटश्रेणिदीप्ताङ्घ्रिपद्म !,
    सर्वक्षत्रावतस ! प्रणतभयहर ! त्वत्पदाब्ज श्रयेऽहम् ।

---

१ आच्छन्ने तृणगुल्मादिभिरिति भाव । २ दुष्पशोरिव ।
३ जाग्रत्स्वपापपरिणामा इव । ४ आतङ्क ताप । ५ म्लेच्छा एव उल्लोला कल्लोलास्तैरुत्तरङ्ग यत् प्रत्यर्थिसनातेजस्तदेव उद्वेल तीगतिगामि व रि जल (कर्म) । ६ खङ्गस्य आलोक उद्द्योत स एव वारि जल (कर्ता) ।

दीना चैकात्मजाऽहं शरणमुपगता त्वा विनीता प्रयाचे,
शश्वत्ते राज्यवृद्धि प्रभवतु च शिवं मुञ्च मत्पुत्रमद्य ॥९७॥

दीने दीनानुकम्पिन् ! विगतमद-बले मत्सुते किं प्रकोप ।
कुप्यन् कण्ठीरवो यत् पतति करिपतौ शावके नो शिवाया[1] ।
दुर्म्लेच्छश्रेणिसेना-क्षपणपरिचितस्त्वत्प्रताप पृथिव्या,
नित्यं सवर्धता मा शरणमुपगतां रक्ष शीघ्र सपुत्राम् ॥९८॥

श्रुत्वेत्थ तज्जनन्या निगदितमजित सस्मित तामवादीद्
नम्रेण त्वत्सुतेनाप्यनुदिनमनघे ! भाव्यमस्मन्निदेशे ।
आगन्तव्य च तेनावसर इह तदाऽऽहूयते वै यदा स,
[2]स्थास्यत्येवस्थिते सोऽपभयमपरथा नङ्क्ष्यति क्षिप्रमेव ॥९९॥

साऽऽधायाज्ञा स्वमौलौ प्रमुदितवदनाऽऽनम्य तत्पादपद्म,
प्रागाद् गेह सपौत्राऽऽह च सकलमिद सूनवे स्वानुभूतम् ।
स प्रोचे नीतिवाक्य समधिकबलिना वैरिणा वेत्रवृत्ति,[3]
य सरक्षेत् स धीमानिति नयनिपुणैर्यद् मत तद्धि सम्यक्॥१००॥

योधद्रङ्ग समागादजितनरपतिस्तत्र कृत्वाऽऽत्मसात्[4] त,
श्रुत्वा भूपालमाप्तं तदभिमुखमुपाजग्मुरत्रत्यपौरा ।
भेरीभाकारनाद पणव-झणझणझर्झराद्यारवश्च,
श्रेष्ठाना मागधाना जयजयविरवो व्याप दिक्चक्रवालम् ॥१०१॥

पश्यन्नीलोत्पलाक्षीनयनकुवलयश्रेणिसपूज्यमान-
स्वर्णभ्राजिष्णुमूर्तिर्मगधसमुदयैर्गीयमाना स्वकीर्तिम् ।
प्रोच्चै शृण्वन् समन्तात् प्रतिपदमखिलै श्रेष्ठिभिर्वन्द्यमान,
सम्यक् ससिक्तमार्गापणमतिविशद स्व पुर प्राविशत् स ॥१०२॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये
अष्टादश सर्ग समाप्त ।

---

१ शिवाया शावके सृगाले । २ जीविष्यति । ३ नम्रनाम् ।
४ आत्माधीन कृत्वेत्यर्थ ।

# एकोनविंशः सर्गः

अथास्थाय सिंहासने योधवप्रे,
शशासाजितो राट् समग्रां मरुक्ष्माम् ।
लसत्पुण्यकीर्तिर्यदीय: प्रताप ,
प्रदीपोपम: सर्वदिक्षूज्जजृम्भे ॥१॥

समाकर्ण्य कर्णोऽरयस्तं तु दूरा-
दमुञ्चन्निजा भामिनीर्यामिनीषु ।
ततो म्लेच्छसंघाः समन्तात् त्रसन्तोऽ-
भजन्त द्रुतं सावरोधा[1] दिगन्तान् ॥२॥

निजाभिर्वधूभि सम स स्वसौधे,
समुत् सानुराग परिक्रीडते[2] स्म ।
कदाचित्तु भाटीकुलेशामरेशा-
त्मजा गर्भमाधत्त लालाभिधाना ॥३॥

यथा वासवाशोन्मुख शुक्लपक्ष-
शशी वर्धते स्म क्रमादन्वहं स[3]
बभौ साऽधिकं वर्ष्मकान्त्या समोदा,
सुपूर्णे च मासे प्रसूते स्म सूनुम् ॥४॥

रसाङ्काम्बुधिक्षोणिसंख्यामितेऽब्देऽ-[4]
सिते चाश्विने रुद्रसंख्ये[5] तिथौ च ।
पुन सार्पभस्याऽन्त्यपादे[6] खवेद-[7]
घटीषु व्यतीतासु सूर्योदयाच्च ॥५॥

खचन्द्रोन्मितेष्वंशकेषु[8] व्यतीते-
ष्वथो कन्यकार्कोदयात् सन्मुहूर्ते ।

---

१ सान्त पुरा । २ "क्रीडोऽनुसंपरिभ्यश्च" इत्यात्मनेपदम् ।
३ गर्भ ४ १७६६ मितेऽब्दे वैक्रम इत्यर्थ । ५ एकादश्याम् ।
६ अश्लेषा-नक्षत्रस्य । सूर्योदयात् ४० घटीषु । ८ दशसंख्याकेषु ।

स्फुरत्युज्ज्वले युग्मसञ्ज्ञे[1] तु लग्ने,
कुमारः किशोराभिधानो बभूव ॥६॥ (युग्मम्)

स्थितास्तत्र नैमित्तिकज्ञानिविप्रा[2]
नृप प्रोचुरालोच्य[3] प्राक् शंकुमानम् ॥
महाराज राजेश! वीराजितेन्द्र!
त्वदीयः सुतोऽय महाभाग्यपुञ्ज ॥७॥

निशम्येति विप्रोक्तमाधापयत् स,
क्षितीशोऽपि तज्जातक वेदविद्भिः ।
ददौ गा. सुवर्ण मही मोदमानो,
द्विजेभ्योऽथ तेभ्यो महापुण्यशाली ॥८॥

कदाचिच्चिर चेतसि स्वे विचिन्त्य,
सुसनद्ध आरुह्य राजा स्वमश्वम् ।
अगात् सैन्ययुक्तोऽचिरेणाऽजमेर ,
ववर्षाऽथ तत्राग्नियन्त्रोत्थगोलान् ॥९॥

तमाप्तं समाकर्ण्य तत्रत्ययोधा ,
स्थिता व्यूहमाकल्प्य शैलस्थलेषु ।
तदा माधवीया सुयोधा समन्ता-
दवर्षन् मुहुर्वह्नियन्त्रोत्थगोलान् ॥१०॥

ततः स्तोकशैलस्थितास्तान् विजित्य,
समास्थाप्य तत्तत्स्थलेषु स्ववर्ग्यान् ।
पुरद्वारपार्श्वाद्रिमासाद्य वीरा
बृहद्वह्नियन्त्रोत्थगोलानवर्षन् ॥११॥

महान् खानजन्मा[4] ममाराऽथ कश्चित्,
तदीयप्रहारेण विध्वस्तसंधि ।

---

१ मिथुनलग्ने । २ ज्ञानिनो ज्योतिषिका ३ 'प्रह्ले वे' नि वचनादस्य लघुत्वमेव मन्तव्यम् । ४ 'खानजादा' इति प्रसिद्ध ।

तदा म्लेच्छवर्या धन सिन्धुराश्वान्,
समर्प्याजितेन्द्राय संधि प्रचक्रु ॥१२॥

गृहीत पुरं तद् विसृज्याजमेर,
प्रतस्थे पुरीं देवलीं नाम भूप ।
तमाप्तं तदाऽपूजयत् तत्पुरीशः,
स्वयं समुख हृष्टचित्तोऽभिगम्य ॥१३॥

तत सनिवेशे निवेश्याथ तस्मै,
समुद्वाह्य कन्या स्वकीया पुरीश ।
ददौ पारिबर्ह तदर्हं प्रसन्न,
तत स्व पुर प्रत्यगात् स क्षितीश ॥१४॥

स तत्र क्षितीशो रतीशोपमान,
समन्तात् समं ताभिरात्माङ्गनाभि ।
यथा तारकाधीश्वरस्तारकाभि-
र्नभोमण्डले खेलति स्म क्षपासु ॥१५॥

तदा भूपतोऽधत्त चह्वाणराज[1],
सुता गर्भमिष्ट फतेसिंहनाम्न ।
महाराजपुण्यप्रताप पृथिव्या,
समन्ताद् रिपूँस्त्रासयन् वर्धते स्म ॥१६॥

कदाचित्तु दिल्लीश्वरायाजमेरात्,
तदीयैर्जनैरित्यलेखि प्रवृत्ति[2] ।
हता मैयदा भूमिपेनाजितेन,
भुनक्त्यन्वह चात्र शाकम्भरी स ॥१७॥

पुर्नाडिवाणीयमुद्दण्डवीर्य
उपादाय भुङ्क्ते करं नित्यमेव ।

---

१ राज्-शब्दस्य षष्ठ्यन्तम् । २ वृत्तान्त । "वार्ता प्रवृत्तिर्वृत्तान्त" इत्याद्यमर ।

पुरान्त.स्थिता अप्यहो [1] स्मोऽतिभीता.,
त्वयाऽत. समेत्याऽत्र साह्ये न रक्ष्या ।।१८।।

निशम्येति दिल्लीश्वरो दक्षिणास्थ,
स्वकीयानुज भाग्यपुर्या वसन्तम् ।
रिपुं कामवक्स्श निहत्य प्रतस्थे,
दशघ्नोष्ठमाशु क्षितीशेन [2] योद्धुम् ।।१६।।

निशम्याथ त नर्मदोत्तीर्णमाशु,
क्षितीशोऽजितेशोऽपि सज्ज प्रतस्थे ।
लिखित्वाऽथ पत्रं तदैवेन्द्रसिंह,
प्रति प्राहिणोदेकमह्नाय [2] चारम् ।।२०।।

दल तत् पठित्वेन्द्रसिंहोऽभ्युवाच,
विदित्वोपयान्त पथि म्लेच्छनाथम् ।
वय म्लेच्छराजोपजीवाः सदा स्म,
परं सन्धिकार्यं कृत चेत् किमु स्यात्?।।२१।।

निशम्येति चारो निवृत्याह राज्ञे,
तदुक्त समाकर्ण्य सोऽपि प्ररुट ।
तमेवाभिजेतु विनिर्णीतवान् प्राग्,
बुध पूर्वकार्यं हि पूर्वं करोति ।।२२।।

बलेनैत्य तत्पत्तनं [3] सोऽनुवेष्ट्य,
बृहद्वह्नियन्त्रोत्थगोलान् ववर्ष ।
विमृश्याजित भूपमिन्द्रोऽप्यजय्य
पुन सधिवन्ध प्रकल्प्याभ्यगात् तम् ।।२३।।

नृपं वीक्ष्य दूरात् स दण्डप्रणाम,
प्रकुर्वन् विनीतोऽतिभीतोपमोऽध्यान् ।

---

१ राजाऽजितेन ।　　२ शीघ्रम् ।　　३ 'नागोर'-नाम तस्येन्द्रसिंहस्य पुरम् ।

प्रसीद स्वदासानुदासं ह्यवेर्मा,[1]
खला हि चछलादेव कुर्वन्ति कार्यम् ।।२४।।

त्वमग्निस्त्वमिन्द्रोऽसि रुद्रस्त्वमेव,
त्वमेवासि पाशी कुबेरस्त्वमेव ।
त्वमर्कोऽसि वायुर्यमश्चासि दण्डे,
किमस्मासु कुप्यस्यधीशाऽऽश्रितेषु ? ।।२५।।

इदानीमिहाऽस्वास्थ्यतोऽह वसेय,
भवेच्चेद् भवत्मत्कृपादृष्टिरीश ! ।
ततो नीरुगेष्यामि सेवा विधातु-
मसौ बालकोऽन्वेत्विदानी भवन्तम् ।।२६।।

तदुक्तं नृप स्वीचकारात्युदारोऽ-
नयड् डिण्डवानात्तदीय च पुत्रम् ।
ततस्तेन साक च शाकम्भरी स,
ययावध्यवात्सीच्च कत्यप्यहानि ।।२७।।

ततो मारवक्ष्माधिराजोऽजितेन्द्रो
महाराष्ट्रसज्ञ[2] पुर चारु जेतुम् ।
विचार्य स्वचित्तेऽभिमन्त्र्याऽथ मित्रै-
श्चमू प्राहिणोत् स्वा महोत्साहपूर्णाम् ।।२८।।

चमूस्तत्र गत्वाऽग्नियन्त्रोत्थगोला-
नसह्यान् विपक्षोपरि द्राग् ववर्ष ।
रुरोधाथ दुर्गं प्रगाढं बलेन,
प्रसह्य[3] प्रचक्रे च तत्राधिकारम् ।।२९।।

निशम्याग्निदूर तु दिल्लीशमाप्त,
तदग्रे स्वय राट् चकार प्रयाणम् ।

---

१ रक्ष भो अधीश ! इति व्यग्न्तम् । २ 'मारोठ' नाम पुरम् ।
३ बलात्कारेण ।

तदाग्रेसरैर्म्लेच्छभर्तुः सह प्राक्,
पथि प्राभवद् युद्धमुर्वीशचम्वा ॥३०॥

तदाऽसूचयत् खानखानाभिधानो
निजेशाय वृत्तान्तमग्रेसराणाम् ।
इतोऽग्रे सहास्माभिरेषोऽभियोद्धु,
स्थितोऽस्ति स्वय नाथ ! दुर्धर्षवीर्य ॥३१॥

प्रभो ! स्नन्यपत्वेऽस्य[1] दिल्लीपुरेऽल्पै-
र्भटैर्यत् कृतं तद्धि दृष्टं भवद्भि ।
किमेष स्वय योद्धुमाप्तोऽतिवीर्योऽ-
धुना दर्शयिष्यत्यहो ! वेद देव[2] ॥३२॥

तदस्मन्मत मन्यसेऽद्य प्रभो ! चेत्,
सुसधि विधायोद्यमं सहरैनम् ।
तदुक्त निशम्येश्वरस्त जगाद,
हित मन्यसे चेत् कुरुष्वेहित तत् ॥३३॥

तत स्वीयपुत्र मुहव्वत्तखान,
नवाब समाहूय चादिश्य सम्यक् ।
नृप छत्रसाल तुडगाधिराज,
तथा प्राहिणोत् सधये भूपपार्श्वे ॥३४॥

ततस्तावुपेत्याजित सत्स्वजाते,
सुसधि विधायाथ ताभ्या सहेव ।
नृपालोऽजितो म्लेच्छराज समीपे,
सम वीरवर्यैः स्वकीयैरुपागात् ॥३५॥

नवावस्तदा खानखानाभिधान',
समागत्य तत्समुख पूज्यभवतया ।

---

१ अस्याजितनृपस्य स्नन्यपत्वे स्तनन्धयत्वावस्थायामित्यर्थ ।
२ ईश्वर (वेद वेत्ति) ।

स्वय सार्धमादाय दिल्लीशपार्श्वं,
नृपालं निनाय प्रमोदानुयात' ॥३६॥

ततो म्लेच्छराज सुलश्राप्यजीम ,
पुरोऽभ्येत्य सत्कृत्य च क्ष्माधिप तम् ।
पितु समुखस्थाञ्जनाश्चापसार्य,
मुदाऽमेलयन्म्लेच्छराजेन भूपम् ॥३७॥

ततो रत्नभूषाम्बरै सद्गजाश्वै
सुसत्कृत्य राजानमत्यादरेण ।
सुखेनोत्ससर्जाऽनु तद्राजधानी,
स्वय चाऽऽप लाहोरक म्लेच्छराज ॥३८॥

तत पुष्करे स्नानमेव प्रकृत्य
द्विजेभ्यो धन गोधन च प्रदाय ।
उषित्वा त्रिरात्र तत सप्रतस्थे,
समागन्तुकाम पुरं मेडताख्यम् ॥३९॥

जिनोपासकस्तत्पुरे श्रेष्ठिवर्यो
वदान्योऽन्नदो हर्ष इत्याह्वयोऽभूत् ।
सुतास्तस्य ये तेषु मुख्यो वदान्यो-
भवद् भूरिभाग्यो भुवि ख्यातनामा ॥४०॥

विमल्दामसञ्ज्ञोऽन्नदाने[1] प्रसिद्ध ,
पुरा यद्गृहेऽगाद् यशस्वी[2] नृपाल ।
तदीयात्मजाना कनीयान् महीयान्,
कुशलसिंह आसीद् गुणिष्वग्रगण्य ॥४१॥

---

१ विमल इवाचरति विमलति तत कर्तरि क्विप् । एव कुशल् । छन्दोनियम निर्वाहयितु तथा प्रयुक्तम् । वस्तुतो 'विमलदास कुशलसिंह' इति नामनी आस्ताम् । २ यशवन्तसिंह ।

स आयान्तमाकर्ण्य चारान्नृपाल,
द्रुत चैत्य तत्समुख श्रेष्ठिवर्य ।
प्रणम्याऽङ्घ्रिपाथोजयुग्मं विनम्रो
निजागारपूत्यै नृप न्याममन्त्रत्[1] ॥४२॥

नरेन्द्रे तमोमुक्तवत्येव[2] नत्वा,
स चैत्यालय सर्वसभारमाधात् ।
पुनर्भू मिनाथोऽप्यटन् मेडतास्य,
पुर प्राप सैन्यै. स्वकीयै. समेत ॥४३॥

[3]प्रगे श्रेष्ठिवर्य स त तद्दिनस्य,
निमन्त्र द्दढीकर्तु माप क्षितीशम् ।
तथेत्युक्तवान् राजराजेश्वरस्तु,
समारोहतोऽगात् ततः श्रेष्ठिगेहम् ॥४४॥

[4]पुरद्वार आ-तद्गृह कोशपट्टे,
समास्तीर्ण आधाय भूप पदानि ।
समायातमुत्कण्ठयाऽपूजयत् स,
तदा पृक्तमुक्ताफलै स्वर्णपुष्पै· ॥४५॥

गृहान्तर्निनीयाऽथ[5] त सद्वधूभि-[6]
र्महारात्रिकैर्मौक्तिकै स्वर्णपुष्पै. ।
सुगीतैश्च समानितस्तेन[7] राजा,
महार्हासने हर्षितश्चोपविष्टः ॥४६॥

---

१ निमन्त्रितवान् । २ त श्रेष्ठिन श्री उक्तवति स्वीकृति सूचितवतीत्यर्थ ।
३ प्रात काले । ४ पुरद्वारो नगरद्वारात् आतद्गृह श्रेष्ठिगृहपर्यन्त समास्तीर्णे प्रसारिते कोशपट्टे कौशेयाम्बरे पदानि आधाय विन्यस्य समायात भूप स श्रेष्ठी पृक्तमुक्ताफलैर्मौक्तिकमिश्रितै सुवर्णकुसुमैरपूजयत ।
५ नैनिय वत्वो ल्यप् नीत्वेत्यर्थ । ६ शोभनाभि स्त्रीभि तद्दारैरित्यर्थ ।
७ प्रेरणार्थकण्यन्तात् क्तो न तु स्वार्थिकण्यन्तात्, उत्तरवर्तिनो 'हर्षित' इति तथाविधस्य साहचर्यात् ।

विधायाथ पाद्यं तथार्घ्यं विधिज्ञः,
सभृष्टान्नमुच्चैर्गुणाढ्यं सुभोज्यम् ।
महाश्रद्धयोपाहरत् प्रीतचेता
अनेकैर्भटैः राजमानाय राज्ञे ।।४७।।

ततो भोजनान्ते समाचम्य राज्ञि,
स्थिते नागवल्ल्यादि[1]-गन्ध-स्रगाद्यैः ।
तमाहृत्य सद्रत्नवद्-भूषणैश्च,
कृतार्थं स्वमामस्त स श्रेष्ठिवर्यः ।।४८।।

स विज्ञापितः श्रेष्ठिना भूमिपालो
विनम्रेण बद्ध्वाञ्जलिं श्राव्यवाचा ।
प्रभो! राजराजेश्वर! ख्यातकीर्ते!
कृपाम्भोनिधे! मारवेन्द्र! प्रसीद ।।४९।।

अहो[2]! भाग्यमस्माकमद्यास्मदीयं,
यदेतद् गृहं त्वत्पदाब्जेन पूतम् ।
अहो! सान्वयोऽहं भवद्भिः पवित्री-
कृतः स्वीकृतः प्रीतिपात्रीकृतश्च ।।५०।।

फलं जन्मनो लब्धमद्यैव सम्यक्,
प्रनष्टं ममामङ्गलं प्राक् कृतं चेत् ।
अहो! पुण्यपुञ्जाङ्कुरोऽद्योद्गतो मे,
गतो दुःखदुःस्वप्नजालप्रपञ्चः ।।५१।।

स तं श्रेष्ठिनेतेति विज्ञाप्य सम्यग्,
ननाम स्वशीर्ष्णा तदीयाङ्घ्रिपद्मम् ।
नृपस्तं समुत्थाप्य हस्तावलम्बा-
दवोचद् मदीयोऽसि मान्योऽसि मे त्वम् ।।५२।।

---

१ नागवल्ल्यादिभिस्ताम्बूलादिभिर्गन्धस्रगाद्यैः सद्गन्धपुष्पमालादिभिश्च ।
२ 'अहो' इति प्रशंसाया प्रयुक्तोऽत्र प्रसङ्गे ।

उषित्वा सुखं यामयुग्मं तु तस्मिन्,
विशाले गृहे श्रेष्ठिन. क्षोणिपालः ।
कृपावीक्षणै· साश्ववस्त्रप्रदानै-
र्व्यधात्त जनाना महामानयोग्यम् ॥५३॥

नृप· श्रेष्ठिनो गेहमित्थं पवित्वा[1],
प्रकारैरुदारैस्तथा सूपचारै ।
तमुत्साह्य साह्यं प्रतिज्ञाय च स्वं,
स्वकीय निवास निवृत्तः सुवृत्त·[2] ॥५४॥

समागत्य सौधं पुनस्तत्र[3] तस्मि-
न्नुषित्वा सुखेनैव ता यामिनीं स ।
नृपाल· समायान्निजा राजधानीं,
स्तुतो मागधैरुत्सवै शोभमानाम् ॥५५॥

तमायान्तमाकर्ण्य संप्राप्तमोदा·,
समीयुर्धृतोपायना पौरवर्या ।
शुभाशीर्गिरा चाभ्यनन्दन् द्विजाग्र्याः
प्रणेमुस्तदङ्घ्रिद्वयं केऽपि लोकाः ॥५६॥

पुरान्त प्रविष्ट तमाकर्ण्य काश्चि-
दवन्त्योऽपि भोज्यं विहायोपजग्मु ।
स्तन पाययन्त्य शिशून् प्रोज्झ्य चान्या,
सहर्षं समागुर्नृप द्रष्टुकामा ॥५७॥

स्वनेत्राञ्जने चोद्यता काचिदेक,
निजं चक्षुरेवाज्य[4] त द्रष्टुमायात् ।

---

१ 'पूङश्च'' इतोट्विकल्प, 'पुङ क्त्वा च'' इति किदभावात् गुणश्च ।
२ सदाचार इति नृपविशेषणम् । ३ मेडतानगरे । ४ एवमेव निज चक्षु आज्य (आ+अज्य) माञ्जनीकृत्य ।

[1]प्रियस्याऽश्नतोऽन्याऽद्रवत्कोमलाङ्गी,
शिशुस्नापने काऽपि लग्नाऽप्यधावत् ॥५८॥

अलक्तं ददत्यऽङ्घ्रिपद्मेऽप्यदत्त्वा,
तथान्यत्र पादेऽपरा प्राप तत्र ।
निधायाऽथ कल्यां स्वहार गले तु,
धरन्ती सुकाञ्चीं जगामाशु काचित् ॥५९॥

स्त्रियस्ता अमोदन्त पृथ्वीपतिं त,
दृगब्जेन दृष्ट्वा हृदेवोपगुह्य ।
निजाट्टस्थितास्ता गजेन्द्रस्थित त-
ममन्यन्त तारा इवोद्यन्तमिन्दुम् ॥६०॥

निवास नृप प्राप्य मान्याञ्जनान् म,
यथार्हं च समान्य हर्म्यं प्रविष्ट ।
तत स्वा. प्रजा पालयन् पुत्रवत् स,
मरुक्ष्मां समग्रामजस्रं शशास ॥६१॥

अथो राजराजेश्वराद् गर्भमाधात्
फतेसिंहचौहानराजस्य पुत्री ।
तत सूतिमासे समेते त्वसोष्ट,
सुतं रायसिंहाह्वयं पुण्यशीलम् ॥६२॥

तुरङ्गाङ्गवाजीन्दुसङ्ख्ये[2] सुवर्षे
शनौ श्रावणे दर्शघस्रे ससार्पे[3] ।
[4]पडिज्याघटीष्वङ्कयुक्तास्वितासू-
दयात् कर्कतोऽब्धिक्षमाशेष्वितेषु[5] ॥६३॥युग्मम्॥

---

१ षष्ठी चानादरे" इति षष्ठी । अश्नन्त भुञ्जान प्रियमनादृत्येत्यर्थ ।
२ १७६७ वर्षे । ३ अश्लेषामहिते । ४ अङ्क (नव) । युक्तासु घटी-माहचर्यान्नवपलयुक्तास्वित्यर्थ । पडिज्याघटीषु इह इज्याशब्देन पञ्च-महायज्ञोपलक्षण पञ्चसख्या ग्राह्या । तेन नवपलाधिकासु ५६ घटी-ष्विति ज्ञेयम् । ५ अब्धिशब्दोऽत्र चतु सख्यायोतक ।

शुभेऽस्मिन् मुहूर्ते च लग्ने युगाख्ये[1],
बुधेनाऽथ तस्मिन्[2] युते भार्गवेण ।
सुजात सुतं सप्रशस्य प्रसन्ना-
स्ततदैवानन्दुर्नृप दैवविज्ञा ॥६४॥

निशम्येति पुत्रोद्भवं भूमिपालो
मुदाऽऽस्नाय सपूज्य देवानृषींश्च ।
चकाराथ सज्जातक वेदविद्भि-
र्ददौ गा सुवर्ण मही चापि तेभ्य ॥६५॥

[3]पुराराजधान्यस्ति मण्डोवराख्याऽ-
विदूरे मिलन्मालती- केतकीका ।
सदा या हि नागाद्रिवारिप्रवाह,
प्रिय स्त्रीमिवाल रसाढ्या करोति ॥६६॥

लसन्ति द्रुमा दाडिमाशोकरम्भा,
कदम्बाम्रजम्बू-सुराजादनाख्या[4] ।
सदा यत्र पुष्पद्रुमश्रेणिकुञ्जा
विराजन्ति विष्वग्[5]-भ्रमद्-भृङ्ग-पुञ्जा ॥६७॥

कदाचित्तु मण्डोवरारामेत्य,
क्षितीशोऽजितेश. स्वय सावरोध ।
लसत्कामिनीकेलिकान्त वनान्त,
तदीय चचार द्विरेफप्रकार.[6] ॥६८॥

कदाचित् स रेमे निकुञ्जे प्रियाभि-
र्मुद केलिवाप्या च लेभेऽनवाप्याम्[7] ।

---

१ मिथुने (लग्ने) । २ तस्मिन् लग्ने । ३ पुराकालिकी राजधानीति मध्यमपदलोपी समास । ४ "राजादन प्रियाल स्यात्" इत्यमर । 'खिरनी',- 'रायणी' इति प्रसिद्ध । ५ विष्वक् समन्ताद् भ्रमन् भृङ्गाणा पुञ्ज समूहो येषु (कुञ्जेषु) तथोक्ता । ६ भ्रमरसदृश इत्यर्थ । ७ अनभ्या मुद लेभे । कदाचित् प्रियाभि (सह) इति पूर्वत आकृष्यते ।

स विक्रीड्य तत्तन्निकुञ्जेषु ताभि ,
समागात् पुना राजधानीं सुदानी ॥६९॥

स काल हि कंचिन्नृपस्तत्र नीत्वा,
मरुक्षोणिपूर्णप्रजापालनेन ।
भुवो भारमारोप्य सन्मन्त्रिमूर्ध्नि,
स्वयं संप्रतस्थे जयी दिग्जयार्थम् ॥७०॥

तदा राजदुर्गेश्वरो गौडवर्यो
नृपाधीश्वर· केसरीसिंहनामा ।
नृप समुखीकृत्य कृत्यज्ञ एन,
स्वकीय पुर सोत्सव द्रागनैषीत् ॥७१॥

समुद्वाह्य कन्यामदात् पारिबर्हं,
महारत्नहेमाम्बराभूषणौघम् ।
प्रपूज्याथ सैन्यै· सम सार्थगोऽभूत्,
क्षितीश सहर्षं तत संप्रतस्थे ॥७२॥

पुनस्तु वरेश [१] स्वय वख्शरामो
नृपः पाटणेशोऽजितेश प्रपूज्य ।
सुलग्ने समुद्वाह्य कन्या च दत्त्वा,
सुदाय [२] बहु तेन सार्धं जगाम ॥७३॥

स गत्वाऽग्रतो भूमिप प्राप्य दिल्ली,
सहर्षं बहिर्दूष्यमेवाध्यवात्सीत् ।
तदोत्रासिखांनामधेयो नवाब ,
पुर म्लेच्छनाथाज्ञया शासदासीत् ॥७४॥

करं संप्रगृह्याथ तत्र क्षितीश ,
कुरुक्षेत्रतीर्थं ययौ स्नातुकाम ।

---

१ 'तुँवर'-जातीय-क्षत्रिय । २ यौतकम् ।

ऋषीन् देववर्ग पितृ्णा गणं च,
प्रतर्प्य द्विजादींस्तथा पूजयित्वा ॥७५॥

धन गोधन भूमिरुक्माादिक च,
प्रदाय द्विजेभ्य. सुभक्त्या विनम्र ।
महापापखण्डे स रामस्य[1] कुण्डे,
[2]वगाह्येष्टदान ददौ दुर्गतेभ्य. ॥७६॥युग्मम् ।

विधानेन विष्वग् महीपालवर्यो
द्विजैर्दर्शितास्तीर्थभूमीरगच्छत् ।
वगाह्यावगाह्योत्सुकस्तत्र तत्र,
पुर वै जगामाशु माद्योरसंज्ञम् ॥७७॥

समन्ताच्च तत्रत्यदु सैयदेभ्यो
धन सद्धनाढ्येभ्य एवाभिगृह्य ।
उषित्वा च तत्रैव मासाश्च कांश्चिद्,
द्रुत सैन्यसघेन याति स्म गङ्गाम् ॥७८॥

प्रकुर्वन् द्यु नद्या जले क्षोभमुग्र
महीभुग्-जयाशसि-भेरी-निनाद ।
तदीयारिनारीस्थगर्भप्रपातो-
द्भवाघक्षयायेव तत्र न्यमज्जत्[3] ॥७६॥

क्षितीशोऽचलज्ज्वालपुर्या.[4] स्वपद्म्या,
जल द्वपथप्राप्तमेवानमच्च ।
हरिद्वारमेत्याचरत् स्नानचर्या,
सदाचारमार्या हि रक्षन्त्यखण्डम् ॥८०॥

---

१ परशुरामस्य । २ स्नात्वा । भागुरिमतेनात्र अल्लोप ।
३ अजितमहाराजस्य जयदुन्दुभिशब्दो यद् गङ्गाजल क्षोभयति स्म ततोत्प्रेक्षते स (शब्द) महाराजवैरिवनिताना गर्भपातजन्य पाप प्रक्षालयितुमिव तत्र गङ्गाजले निमग्न इत्याशय । ४ ज्वालापुरात् ।

तहव्वर-अली-शेखवृत्त तदाऽऽप्त,
स[1] दुष्टो वलिष्ठानपि द्राग् जिघासु ।
कर चाऽददाना· प्रजा साधु बद्ध्वा,
नयस्तद्वधूर्धर्षयत्यस्तशङ्क· ॥८१॥

गवा हन्त[2] ! वत्साद् घृते पाचयित्वा,
सुसस्कृत्य सम्यक् सदैवाऽत्ति दुष्ट ।
पुरग्रामखेटादिक यत्र-तत्र,
प्रलुण्ठ्य श्रिय लाति मासातिपुष्ट ॥८२॥

अत स्वाङघ्रिपद्माश्रित म्लेच्छतो मा,
प्ररक्षेर्यथेभ हरिर्नक्रवक्त्रात् ।
भवत्पादपद्माश्रितस्यान्यतो मे,
भय स्यान्न तद् युक्तमेव प्रकार्यम् ॥८३॥

इति[3]स्थापितोदन्तमेक सुपत्र,
सुविश्वस्तदूतेन सयत्नकस्थम्[4] ।
विसृष्ट तदैवार्जितक्ष्माधिपाय,
मरुक्षोणित श्रीन्द्रसिहेन राज्ञा[5] ॥८४॥

तदिन्द्रस्य पत्र स पृथ्वीपतीन्द्रो
निरीक्ष्यादिशद् भ्रूविभङ्गेन कचित् ।
निज मन्त्रिण सोऽपि लब्ध्वा तदाज्ञा,
स्फुट वाचयामास राज्ञ पुरस्तात् ॥८५॥

निशम्येदमिन्द्रस्य विज्ञप्तिपत्र,
प्रतस्थे हरिद्वारतो राट् ससैन्य ।

---

१ तहव्वर अली-शेख । २ हन्तेति खेदे । ३ इत्य-विन्यस्तवृत्तान्त (सुपत्रम्) । ४ सयत्नक 'लिफाफा' इति प्रसिद्धमाच्छादनपत्रम् । ५ नागोर-नराधिपेन ।

तत्राहूतोऽपि नागादजितनृपतिना राजसिंहो यदा स,
क्रुद्धोऽगृह्णात्तदाऽसावखिलमरुधराधीश्वरः कृष्णदुर्गम् ।
लुण्ठित्वा तत्प्रदेशानपि सपदि निजाज्ञामनूद्घोष्य तत्र,
रूपद्रङ्गं प्रपद्याखिलसुभटगणैर्विष्वगावेष्टय चास्थात् ।६।।

प्राग् म्लेच्छाजीमयुक्तान्यपि बृहदनलक्षेपयन्त्राणि धृत्वा,
तद्दुर्गस्थास्तदुत्थान् ववृपुरविरतं यान् महावह्निगोलान् ।
तेष्वेकोऽपि क्वचिन्नाऽस्पृशदजित-महीपालसैन्यं कदाचि-
न्नूनं पुण्यप्रभावः फलति सुकृतिनां हिङ्गुलानुग्रहश्च[1] ।।७।।

दृष्ट्वा तद्गोलवृष्टिं क्षितिपतिरजितः कालवत् संप्रकुप्य-
न्नूचे प्रोच्चैः स्वयोधाञ्शृणुत भटवरा: पश्यथात्र स्थिताः किम् ?
भङ्क्त्वा दुर्गं प्रविश्य त्वरितमथ नृपं राजसिंहं प्रमह्य,[2]
मत्पार्श्वेऽत्रानयध्वं हत च, यदि स नो मन्यते मामकाज्ञाम् ।।८।।

[3]तोपाध्यक्षस्तदानीमजितनरपतिं यावदानम्य कोपा-
ल्लक्षीकुर्वन्नृपारेः सदनमयततग्नेयगोलान् प्रहेतुम्[4] ।
तावद् द्राग् राजसिंहो भयविवशमना सन्धिमाधातुकामो
हस्तीन्द्रं चापि तोपं प्रथममुपहरन् स्तोतुमारब्ध भूपम् ।।९।।

नृपाणां प्रधानं गुणानां निधानं,
सुयुक्तं विधानं प्रजास्वादधानम् ।
स्वधर्मं दधानं यथार्थाभिधानं,
नमामोऽजितेशं महान्तं नरेशम् ।।१०।।

असत्कर्मभीरुं महाकर्मवीरं,
रणक्षेत्रधीरं नयोद्यान[5]कीरम् ।

---

१ हिङ्गुलेति काव्येऽत्र स्तुतपूर्वा काव्यनेतुरभीष्टदेवी 'हिंगुलाज' इति भारते प्रसिद्धा । २ हठात् । ३ तोपयति हिनस्तीति पचादित्वादचि 'तोप'-शब्दसिद्धिः । ४ नृपारे राजसिंहस्य सदनं लक्ष्यीकुर्वन् वह्निगोलान् प्रहेतुं प्रक्षेप्तुमयततेति योजना । ५ नीतिवाटिका-विहारे शुकरूपम् ।

महाराजवंशावतंसोरुहीरं[1]
भजामोऽजितेश प्रधानं नरेशम् ॥११॥

विपक्षद्रुमारण्यदाहैकदावं,
विपश्चित्-सभा-श्लाघनीय-स्वभावम् ।
महीपालवंशाब्धिवृद्धिप्रभावं,
स्तुवे राजराजेश्वरं वाजिनेशम् ॥१२॥

हिमांशुप्रभा-शुभ्रसत्कीर्तिपात्रं,
सुहृद्वृन्ददात्रं[2] मनोजन्मधामम् ।
विपक्षक्षयार्थं फलीभूतगात्रं,
स्मरामोऽजितेश नृपाणां विशेषम् ॥१३॥

स्वकर्तव्यपाल द्विषत्संघ-कालं,
महाभाग्यसत्सूचकस्थूलभालम् ।
सदाऽऽचारसारार्थबोधे मरालं,
गृणीमोऽजितेश महीवल्लभेशम् ॥१४॥

प्रजापद्मिनी-सद्विकास-ग्रहेशं,
कुनीतिप्रचारान्धकारे[3] क्षपेशम् ।
यशोभूतिभोगप्रभुत्वे सुरेशं,
स्तुमो राजराजेश्वरं वाजिनेशम् ॥१५॥

इत्थं स राजसिंह विनयविधियुतं स्वं स्तुवन्तं विलोक्य,
कुर्वन् स्नेहान् स्वकीयं त्वरितमपि च सत्कृत्य सार्धं च गृह्णन् ।
कृत्वा तस्मात् प्रयाणं सह निजसुभटैः प्राप शाकम्भरीं स,
क्षोणीपालोऽजितेन्द्रो निजभुजविजितां तत्स्थलीमभ्युवास ॥१६॥

---

१ अवतंसो भूषणमवतंसो वा हीरस्तम् । २ नविनम् ।
३ अन्धतम. ।

राठोडेन्द्रं निशम्यागतमिह जयसिंहाह्वयः कौर्मिरेत्य,
चक्रे वाम नसैन्योऽजितनरपतिना सार्धमुत्कः[1] ससौख्यम् ।
खण्डेलाधीश्वरश्चाप्युदयनरपतिस्तत्पदाब्जं प्रणम्य,
बिभ्रत्तस्य प्रसादप्रमुदितहृदयोऽस्थात्तदाज्ञानुवर्ती ॥१७॥

राव शैखिर्मनो-हरपुर[2]पतिरथ तत्रैत्य भूपं प्रणम्य,
दत्त्वा वाचा स्वकन्यामपि[3] सुविनयतस्तन्निदेशे ह्यतिष्ठत् ।
तत्रैकत्र स्थितास्ते क्षितिपतिमजित क्षत्रवीरा अभाक्षु-[4]
स्तेभ्यस्त्रस्ता मृगाधीश्वरत[5] इव मृगा प्राद्रवन् म्लेच्छयोधाः ॥१८॥

लाहोरादेत्य दिल्लीपुरमधिकनृपैराश्रिताद् मारवेन्द्राद्,
भीतो म्लेच्छाधिराज सयवनपृतन सावधानो न्यवात्सीत् ।
तावद् हाजीपुरात् 'सोऽभिगमनिह'[7] तदाऽजीमपुत्रस्य चारा-
च्छ्रुत्वा शान्ति हृदोच्छन् द्रुतमजितनृपालेन संधि व्यधत्त ॥१९॥

दत्त्वा तन्नद् नृपेष्ट पुनरपि विनयेनानुयातं स्वपत्रं,
म्लेच्छेन्द्रः प्रैषयत्त प्रति यदुत नृपा[8] यान्तु भो ! स्वस्वधाम ।
रिक्त राज्य हि नैवोचितमवनिभुजा राजलक्ष्मीप्रियाणा,
देश श्रीगुर्जर ते दद[9] इति च पठन् सोऽपि[10] तान् व्युत्ससर्ज ॥२०॥

यातेऽन्यो राजवर्गे भटपुरमचिरात् सोऽप्यगाद् भूपतीन्द्रो
म्लेच्छेन्द्रो मोजुद्दीनोऽव्रजदथ नगरीमागराख्या ससैन्यः ।
श्रुत्वाऽजीमात्मज त निकटमुपगतं सोऽल्पसैन्य[11] तदानीं,
तुष्टो रुद्ध्वाग्नियन्त्रैं सह मुगलगणैर्यामुनेऽस्थात् प्रतीरे ॥२१॥

तद्भ्रात्रीयोऽपि तावत् त्वरितमुपगतोऽभूत् पितृव्येण[12] योद्धुं,
सोऽथ दैवज्ञवाचा क्षणमनुचलितेऽर्केस्वरे त्वग्नितत्त्वे ।

---

१ उन्मना । २ शेखावतो मनोहरपुरपति 'भगवन्सिंह' नामा । ३ 'चन्द्रकुँवरी' नाम्नीम । ४ सेवितवन्त । ५ सिंहेभ्य इव । ६ दिल्लीपति । ७ समुपागमम् । ८ स्वस्वेच्छया स्थिता राजान स्वस्वस्थान गच्छन्त्विति भाव । ९ उपहारमित्यर्थं । १० सोऽजितमहाराज । ११ म्लेच्छेन्द्र १२ म्लेच्छेन्द्रेण (सह) ।

युद्धारम्भं प्रकुर्वन् फररुकशियरो मौजुदीन जघान,
दिल्लीसिंहासन चालमक्रत यवनै स्तूयमान समान[1] ॥२२॥

तस्मादारभ्य कालादखिलमुगलका युद्धदक्षाश्च शेखा
राजान क्षत्रियाश्चाऽनुदिवसमभजस्त तदाज्ञानुपाल ।
जाते तच्छासने नाऽव्ययमत विफल कोऽपि कश्चित्कदाचिद्,
दैवे जातेऽनुकूले जगति किल भवन्त्येव सर्वेऽनुकूला ॥२३॥

इन्द्रक्ष्मापस्य पुत्रो मुहकम इति योऽभूत् स राजेश-भीत्या,
त्यक्त्वा देश सुदूर कतिपयसुभटैर्[2] जनेनाऽपि[3] युक्त ।
गत्वा दिल्लीपुरी द्राक् फररुकशियर स्वाश्रय सयचाचे,
सोऽपि ज्ञात्वा प्रवीर तममरतनय सत्कृपान स्म चकार्षीत् ॥२४॥

श्रुत्वैना तत्प्रवृत्ति क्षितिपतिरजित कर्हिचिच्चारवक्त्राद्,
व्यास श्रीदीपचन्द्र मुहकमहननोपायमापृच्छते स्म ।
श्रीमद्राजोदित तत् स्वमनसि स चिर चिन्तयित्वा नितान्त,
प्रावोचद् वाक्यमेतद् नृप ! रिपुहननोपाय एकोऽस्ति बुद्ध ॥२५॥

स स्वामिन् श्रूयता भो ! क्षितिपतिमुकुटाऽत्रामरास्योऽस्ति भाटी,
स स्वैस्तत्राभिगम्य त्वरितमथ तमाहृत्य चाऽव्यङ्ग[3] एव ।
म्लेच्छेश म्लेच्छवर्यान् पुनरुत[4] परानूय दिल्लीपुरे च,
हुकार घोषयित्वा तदनु कृतनृपाभीष्ट आयास्यतीह ॥२६॥

श्रीराजाधीश्वरस्तद् द्विजपतिकथित चेतसि स्वे विमृश्य,
साध्वित्युक्त्वाह त[5] तत् तमुपदिश[6] रहो द्रव्यमप्यर्पयित्वा ।
आज्ञा स प्राप्य राज्ञो मुहकमहतये प्रेषयद् भाटिन त,
गुप्तो दिल्लीमगात् स क्वचिदपि च पुनर्मासमात्र तु तस्थौ ॥२७॥

---

१ मानेन चिननमुन्नत्या सह वनमान । २ (वगडोठरकुरेण) हुनन-मिहेन च महित । ३ अक्षतशरीर । ४ म्लेच्छेश उत अथवा । ५ दीपचन्द्रव्यासमाह । ६ न अमर्सिहम् ।

आयान्तं कर्हिचित् प्राग् यवननृपतिमानम्य[1] सद्राजमार्गे,
भूपस्येन्द्रस्य पुत्र निजभटसहितं वीक्षमाण स[2] दूरात् ।
प्राहोच्चैर्भो कुमार ! त्वमजितसुभटं विद्धि मां हन्तुकाम,
जल्पन्नित्य प्रकाश सहबलममर· प्रोन्नदंश्चावधोत्तम् ॥२८॥

इत्थ श्रीन्द्रस्य पुत्रं त्वरितमुपहतं राजमार्गे निरीक्ष्य
तत्स्नेही दुर्जनोऽपि द्रुतमुदितभयो दक्षिणाशा प्रतस्थे ।
तत्रापि त्रस्त एव क्वचिदपि हि कदाप्यस्थितो विश्रमार्थं,
भ्रान्त्वानेकास्तु देशान्निजजनसहितोऽलक्षित· क्वाप्यवात्सीत्।।२९॥

त्रस्ता म्लेच्छा अपीतो मुहुरुमहननाद् म्लेच्छराजं प्रणम्य,
चक्रुर्विज्ञप्तिमुच्चै शृणु यवनजनाधीश ! राजन् ! कृपाब्धे ! ।
दूरस्थेनाऽपि तेनाजितनरपतिना हा हतोऽय कुमारो
भीता स्मोऽस्मान् पुरे चेदजितनृपजनो मारयेत् किं प्रकुर्म·?॥३०॥

नैव प्राक् क्वापि जात श्रुतमपि न कदाचित् त्वदीयाङ्घ्रिपीठ
इन्द्रप्रस्थे प्रसह्यापणपथरथिको यद् हनस्तद्वचोभि·[3] ।
तस्मात्तेनाशु संधि कुरु यदि कुशल वाञ्छसि स्वीयमत्र,
तस्मादेवात्र सुस्था वयमपि विहरिष्यामहे भीतिमुक्ता ॥३१॥

म्लेच्छेशो राजमार्गे निहतमुरुभट सर्वत सनिशम्य,
त्रस्त संधि तु तेनाप्यलषत सुचिरं चिन्तयन्मानसेन ।
भाटी प्रत्येत्य भूर विहितनतिरथाऽजिज्ञपत् तत्प्रवृत्ति,
प्रादात् तद्वाञ्छित च प्रमुदितहृदयो भाटिवर्याय भूप ॥३२॥

प्राच्य कोऽपि द्विजाति श्रुतनृपतियशा कान्यकुब्ज प्रपद्य,
योधद्रङ्ग प्रक्लृप्तावसतिरवसरे व्यामदीपेन्दुना च ।

---

१ प्राक् यवनसम्राजमानम्य राजमार्गे आयान्तम् (इन्द्रस्य पुत्रम्) इति योजना ।
२ अमरसिंहभाटी । ३ तस्याजितसिंहस्य वचोभि· ।

विज्ञप्तेष्टाशय सन् शुभशशिनि कृताशी प्रयोग सुराज्ञे,
सत्पद्य तत्समक्ष मृदुमधुरगिरोच्चारयामास सम्यक् ।।३३।।

वक्त्राम्भोजे तवाऽस्मिन्निवसति सुभगा भारती हृत्सरोजे,
प्रज्ञा श्रीस्त्वत्करोब्जे चरणकमलयो. सर्वदा भूमिपाली ।
अस्मात्तन्निरुद्ध त्वजिननरपते ! पूर्णसौभाग्यमङ्ग ,
त्यक्त्वा कोपेन कीर्तिर्भ्रमति जलनिधे पारगा सर्वदैव ।।३४।।

ज्ञात्वा त शास्त्रविज्ञ द्विजमजितनृपोऽपृच्छदित्थं कदाचिद्,
भो विद्व श्वेत् प्रकुर्मो विहितविधि तुलादानमत्रोद्यत किम् ?।
ओमित्यूचे स विप्रो बहिरथ नगराद् भूमिशुद्धि विधाय,
कृत्वा सन्मण्डप चोत्तमकनकतुला कारयामास सम्यक् ।।३५।।

कृत्वा हेम्नस्तुला स क्षितिपतिरददात् तद्धन ब्राह्मणेभ्य ,
सद्धर्माद्राज्यमस्य प्रतिदिनमधिक वर्धतेस्माऽऽत्तनीते. ।
भूपालेन्द्र कदाचित् किन निजनगराद्[1] मेडना सप्रतस्थे,
गत्वा तत्राथ तस्थौ हिनशिशिरवमन्तार्थमामान् सुखेन ।।३६।।

तत्रायात नृपेन्द्र त्वरितमुपगता प्राप्य पत्र तदीय-
मासन्ना दूरसस्था अपि सह सुभटैस्तस्य सामन्तवर्या ।
भूपालेनोपहूतोऽप्यहह ! सुविधिना पत्रमालिख्य यत्ना-
[2]न्नेन्द्रस्तत्रागत किन्त्वचिरतरमगात् मैयदग्यान्तिक स ।।३७।।

इन्द्रक्ष्मापस्य पुत्र निहतमिह तदाकर्ण्य येऽन्येऽरयोऽपि,
त्रस्तास्ते त्यक्तवासा दिशि दिशि दशया[3] प्राद्रवन् विलश्यमाना ।
त्यक्त्वाऽथो सावरोधो[4] निजवमतिपुर प्राप्य दिल्लीपुरी द्राक्,
तद्भीत्या राजमिह फररुकशियर सेवितु प्रस्तुते स्म ।।३८।।

---

१ निजनगरपदेन योधपुरराजधानी विवक्षिता ।        २ इन्द्रमिह् ।
३ दशया स्वकीयया दुरवस्थया क्लिश्यमाना ।        ४ माऽन्त पुर ।

म्लेच्छाधीशो विमृश्य स्वहृदि खलु यदा निश्चयं नाध्यगच्छद्,
मन्त्रीशं संयदाग्र्य कृतवलमुलुक सन्नवाबाधिराजम् ।
वीराणा समतेनैतदनुजमपि त मीरुल सन्नवाब,
प्रीत्याहूय न्यपृच्छत् किमुचितमिति तत्रावदद् मीरुलस्तम् ॥३६॥

इन्द्रप्रस्थे सुराणा न च धरणिभुजामस्ति सामर्थ्यमीदृग्,
यादृक् शक्तिर्म रक्ष्माभुज इह[1] यवनेशे त्वयि भ्राजमाने ।
यस्मादिन्द्र· किलावातरदिति[2] शृणुमो सस्फुरच्छक्तिरेष,
इन्द्रप्रस्थेऽपि नून प्रकटितमिति नाद्यैव किन्त्वस्य वाल्यात् ॥४०॥

भूपालस्यास्य जन्या[3] अहनि दिवि गता वाक् श्रुता तत्र पु भी
राज्ञि ! त्व जीव वत्से ! शृणु च तव सुतो[4] जिष्णुरेवावतीर्ण ।
सोऽय सद्धर्मनिष्ठो भुवि विदितयशा दीर्घजीवी प्रचण्ड-
भास्वत्प्रौढप्रताप सुगुणगणनिधिर्वोभविष्यत्यवश्यम् ॥४१॥

य सद्धर्मेण जित्वा क्षितिवलयमिद धर्मविद् धर्मकृच्च,
मान्यो दिल्लीश्वरस्यापि च रिपुनिचय नाशयिष्यत्यवश्यम् ।
ख्यातो य क्षोणिपृष्ठेऽजितनरपतिरित्याख्यया भास्यतीह,
प्रोद्यत्प्रौढप्रताप सकलहिमकरद्योतिकीर्ति· सुभाग्य ॥४२॥

इत्थ सजल्प्य सा वाग् गहनगगनगा शृण्वता सर्वपुंसा-
मन्तर्धान जगामाखिलजननिवहा विस्मय प्रापुरुच्चै ।
तस्मात्सेनात्र जेत्राऽजितनरपतिना गजराजेश्वरेण,
साम्ना दानेन सधि कुरु यदि कुशल वाञ्छसि स्वान्वयस्य ॥४३॥

सर्वोपायै· समर्थो यदपि खलु नरस्तेजसा दीप्तिमान् स्यात्,
साह्य नाप्त स कस्याप्यधिकबलवतश्चेन्नु किं तर्हि कुर्यात् ? ।

---

१ अत्रेन्द्रप्रस्थे । २ इन्द्रप्रस्थेऽपि स्फुरच्छक्तिकतयाऽयमिन्द्र एवावतरदिति किल (निश्चयेन) शृणुम । ३ जन्मन । ४ इन्द्र ।

यद्वत् प्रोद्दीपितोऽग्नि पवनविरहिनश्चेत्तदाशु प्रशाम्येत्,
सयुक्तस्तेन[१] चेत् तद् वनमपि सकल भस्मसात् कर्तुमीष्टे ॥४४॥

काक क्षामोऽपि[२] वाचा कटुरपि मलिनोऽप्याप्तपक्षप्रभावो[3]
जातस्याग्रद्रिशृङ्गे मधुरफलि-तरो सत्फल भोक्तुमीष्टे ।
सिंहस्त्वप्राप्तपक्षो द्विरदवरघटा-ध्वसशक्तोऽपि नून,
वृक्षाग्र स्थोऽपि भोक्तु प्रभवति किल नो तद्गम स्फारिताक्ष ।४५।

श्रुत्वा तद्वाक्यमित्थ फररुकशियरो मीरुल त नवाब,
प्रोचेऽस्मद्राज्यनेता त्वमसि च मतत नीतिमार्गे प्रवीण ।
राजेन्द्रेणाभिसन्धिर्भवति खलु यथैकत्वमपादको द्राक्,
तुष्ट स्याद् देवदेव[४] स च मयि यवनाधीश्वरे तत् कुरुष्व ॥४६॥

क्षत्रा म्लेच्छाश्च सर्वे गजरथतुरगा पत्तयश्चापि पौर्वा[५] ,
नून याम्त्वग्नियन्त्राण्यमनवलबहान्ययतस्ते तथा भो[1] ।
गुप्त सन् याहि योधर्धनमलघु ददच्चानुकूल्य नयेस्त,
प्रोच्येति श्रद्धयाऽसौ फररुकशियर प्रैरयत् त नवाबम् ॥४७॥

नत्वा म्लेच्छाधिनाथ फररुकशियर सर्वमेवाधिकार[६] ,
स प्राप्य प्रौढविद्य निजगणकवर सन्मुहूर्त ययाचे ।
लब्ध्वा चात्मानुकूल ग्रहगणफलद स्वोचित सन्मुहूर्त,
सर्वं सैन्यै समेतो महमुवमनुला सप्रतस्थे नवाव ॥४८॥

इति श्रीमद्जगज्जीवनविरचिते-
ऽजितोदये महाकाव्ये
विंश सर्ग समाप्त ।

---

१ पवनेन । २ कृश । ३ "पक्ष पत्रे सहाये च" इति कोश ।
४ राजाधिराज (स) । ५ पूर्वदिग्भवा । ६ मयिकरणे प्रभुत्वमिति भाव ।

## एकविंशः सर्गः

ततो म्लेच्छै सार्धं गजरथहयै· पत्तिभिरथो,
नवाब· कुर्वाण सरणि-सुलभा मध्यविरतिम् ।
क्रमाद् वाहाना च श्रममपहरन् स प्रतिदिनं,
मरुक्षोणीं गच्छन् समगत मनोहारिणि पुरे ॥१॥

अथायातं श्रुत्वा सुबहुयवनै सार्धमिह त,
महाराजाधीश· स्वसचिववर मन्त्रनिपुणम् ।
सुनीतेर्मर्मज्ञ सपदि रघुनाथ स्वभिधया[2] ,
समाहूयापृच्छत् कथमयमुपेतोऽस्ति सयद ॥२॥

तदा राज्ञामीश सचिवरघुनाथोऽवददिति,
प्रभो! भूपालेन्द्र! क्षितिपमुकुटद्योतिचरण! ।
दिलीशो म्लेच्छेन्द्र· फररकनृपो हीन्द्रतनयं,
हत त्वाकर्ण्येव सभयहृदय· स्माह सदसि ॥३॥

अहो! प्राज्यं राज्य मम खलु न तावत् सुखकर,
परोक्ष वान्वक्ष[3] प्रभवति न संधिर्नृपतिना ।
अतस्तेनैक्य चेद् भवति भवति क्षेममपि न,
इति श्रुत्वावादीद् मिरुलकनवाब स्वरुचितम् ॥४॥

श्रुत देवेनैतन्न किमु यवनाधीश! सुमते!
यदद्य प्रत्यक्ष नृपतिजननाहाभ्रवचनम्[4] ।
अय क्षोणि सर्वा स्वभुजविजिता भोक्ष्यत इमा,
द्विपामप्युच्छेद स्वयमनुविधास्यत्यलमयम् ॥५॥

---

१ एतत्पुरमजयमेरुसीमनि । २ सुनाम्ना रघुनाथम् । ३ प्रत्यक्षम् । अत्र वाक्ये पूर्वोक्तेन तावत्-प्रयोगेण यावदित्युन्नेयम् । ४ नृपतेरजिनस्य जननाहोजन्मदिवसस्तत्सम्बन्धि अभ्रवचन आकाशवाणी ।

निशम्यैतद् वाक्यं तदुदितमतिभ्रान्तहृदयो
न्यगादीदित्युच्चैर्यवनजनराजो मिरुलकम् ।
अहो ! मन्त्रिन् ! प्राज्ञाजितनृपसमीपे व्रज तत
उपायैः सामाद्यैरभिलषितदानैरनुनय ॥६॥

भवेद् यत्तद्योग्यं नयनिपुण ! दातव्यमपि तद्
यथाऽसौ तुष्टः स्यात् तदयि[1] ! भवता कार्यमखिलम् ।
अहो ! नीतिज्ञोऽसि त्वमपि खलु विज्ञोऽसि सुदृढ,
नृपेण द्राक् संधि त्वमनुरचयेर्निर्मलमते ॥७॥

ततस्तेनादिष्टो यवननिकरैः सैयद इह,
समायाति श्रीमच्चरणयुगल सेवितुमयम् ।
त्वया सार्धं संधि प्रमुदितमना वाञ्छति तथा,
कृपाम्भोधे ! स्वामिन् ! कुरु तदखिल यद् हृदि गतम्॥८॥

निशम्यामात्योक्तं निजहृदि विमृश्याथ नृपति-
र्न यावद् दृग्मार्गे मम खलु समायाति यवन ।
इतो यौव दुर्ग रिपुभिरजित याम[2] च ततो-
विधास्याम. संधि तदुपनतमित्याह विशदम्[3] ॥६॥

तत क्षीवाभिख्य[4] जनपदमत शीलसुभग,
स दृष्ट्वा सद्बुद्धि नृपतिहितचिन्तैकनिपुणम् ।
नयन् सुप्राधान्य सुबहुजनमान्य सुयशस,
प्रबोध्याभिप्रायं यवनपुरत प्रैषयदितः ॥१०॥

स इत्थ क्षीवाख्य सह बहुभटैस्तत्सहचरैः,
प्रहित्योपम्लेच्छ[5] शुभददिवसे प्राचलदित ।

---

१ अयीति कोमलामन्त्रणे । २ विध्यर्थे लोटि रूपमिदम् ।
३ स्फुटम् । ४ 'खींवसी' इतिनामानम् । ५ यवन-समीपे ।

प्रियं योधद्रङ्गं रसिकरतिरङ्गं सह भटै-
गंतः सन् भूमीशोऽध्यवसदथ राज्या उपवनम् ॥११॥

इतः खुंध्यावासं यवननिकरं प्राप सयद-
स्ततः क्षीवस्तत्रोत्कटभटजनैरप्युपगतः ।
नृपामात्यं प्राप्तं सपदि तमभिश्रुत्य मयद
समाहूय प्रोचे विनयसहितः स्वाभिलषितम् ॥१२॥

अयेऽस्त्यस्मन्नाथः फररुक इति म्लेच्छतिलको-
ऽजितेन क्ष्मापेनाभिलषति स संधिं कलयितुम् ।
अतस्तेनाऽहं भो सुविमलमते ! प्रेषित इह,
कृपां कृत्वा त्वं मां निजमधिपतिं दर्शय सखे ! ॥१३॥

तमाहेनिः क्षीवो ध्रुवमिह न संधिः प्रभविता,
तथा राजोपान्ते विधिनियमतः सेत्स्यति यथा ।
यतिष्ये तत् कर्त्तुं कुरु गमनमग्रे तत इत-
स्तदुक्तं तद् वाक्यं हृदि किल नवाबाय रुरुचे ॥१४॥

ततः खुंध्यावासात् स गमनमुपक्रम्य[1] यवनो
व्रजन् मन्दं मन्दं पथि च निवसन् क्वापि ससुखम् ।
नृपामात्यप्रोक्तं वचनमनुसृत्याथ सभटोऽ-
ध्यवात्सीत् सुप्रीतो वसतिरुचिरं मेडतपुरम् ॥१५॥

स तत्रास्थात् पूर्वं स्वबलमनु संघोष्य पटहं,
य एतस्मिन् देशे किमपि खलु कस्यापि तृणकम् ।
हरेताऽसौ प्रेयानपि[2] सपदि वध्यो मम भवे-
दिति श्रुत्वा केनाप्यपकृतमथो[3] कस्यचन नो ॥१६॥

---

१ प्रारभ्य । २ प्रियनरोऽपि । ३ अपि च (इति घोषणां श्रुत्वेति योजना) ।

इतस्तावद् दिल्लीपुर उदयवान् मीरजुमना-
नवाबः कौटिल्यं दधदवसरं प्राप्य सुचिरात् ।
कदाचित् सम्प्राप्तो रहसि हसितप्रोज्ज्वलमुख,
विदित्वा सम्राज मधुरमृदुकर्णेऽजपदिति ।।१७।।

अये सम्राड्मौले ! मुगुलकुल-माणिक्यमुकुट !,
यथेदानीं राज्य सयदमयमेवानुघटितम् ।
तथा पूर्वं नासीदपि तु मुगुलप्रायमभव-
दतोऽसौ तन्मूल सयदसचिवो हन्तुमुचितः ।।१८।।

सुयोग लब्ध्वा त त्वमिरुलनवाब पुनरपि,
हनिष्यामः पूर्वं कथमपि जहीम प्रयतनात् ।
स इत्युक्त्वा पश्चादवसरमवाप्यैवमवदत्,
ततोऽस्मिन्[1] भावित्वाद् यवनपतिरप्यादरमदात् ।।१९।।

भवत्येव प्राय सुविमलमतीनामपि सतां,
मतिह्रासो दुष्ट-प्रकृत-सुबहूपायवशत ।
तदुक्त श्रुत्वेत्थ रहसि मुहुरेष क्षितिपति-
स्तथा हन्तु हन्तानुमतिमपि तस्मै प्रददद ।।२०।।

गतस्नेहेऽपीशे सति खलु नवाब स सयद,
सुविश्वस्तो याति प्रथममिव नाथस्य पुरत ।
कदाचिद् त प्राप्ता परिदलयितु[2] घातकजना-
स्तथाप्यायु शेषात् सयदतिलकः स त्वपसृत ।।२१।।

ततो म्लेच्छेश त सकलसयदेष्वप्यतिरुषं,
स सद्य सलक्ष्यानुजममिरुल प्रत्युदलिखत् ।
अय भ्रान्ति नीतो यवननृपतिर्मुग्ध्यमुगुलै,
सुजिह्मं जिह्मो मा कथमपि निहन्तुं प्रयतते ।।२२।।

---

१ अस्मिन् व्यतिकरे इत्यर्थ ।     २ हन्तुम् ।

कदाचिच्चाकस्मात् कतिचयभटैर्यत्ननिरतै-
वृतो हन्तु हन्ताऽहमपि विधिनैवोद्धृत इत.[1] ।
पुनर्देश कालं स्वहितमुचित साधु विमृशन्,
नये काल म्लेच्छाधिपमुपचरन् वा[2] कथमपि ॥२३॥

अथ तुच्छेत्तु मा विजनपतित वाञ्छति हृदा,
पर नाहं गच्छाम्यवहितमना कुत्रचिदपि ।
इति ज्ञात्वा विज्ञोऽस्यनुज ! सहसाऽऽगच्छ न चिर,
प्रकुर्या[3] न पक्षेऽजितनरपति. स्यात् कुरु तथा ॥२४॥

इति ज्येष्ठभ्रात्रा लिखितमवगम्य व्यतिकरं,
चिर स्वान्तेऽध्यायत् सकलमपि तत्तत्[4] स रहसि ।
समाहूयाथान्ते क्षितिपसचिव क्षोवमचिरात्,
सुसत्कृत्यारेभे रहसि निजवृत्त कथयितुम् ॥२५॥

नियुक्त सन्थर्थ यवनपतिनाऽहं तु सुसखे !,
पुन स ज्येष्ठ मे कुतअलनत्र।व सविनयम् ।
सदा स्वाम्यासक्त पुनरपि सुभक्त स्वपदयो-
र्निहन्तु प्रोद्युङ्क्ते मुगुलकुलजातैर्भ्रमितधी. ॥२६॥

प्रवृत्ते म्लेच्छेशे विदलयितुमस्मानिति सखे !
वय [5]त्वाशंसामोऽजितनृपतिसाहाय्यमयितुम्[7] ।
अतो मद्रक्षार्थं नृपतिरभय ज्येष्ठतनय,
प्रदद्याच्चेद् याया फररुक-समीपेऽद्य सहसा ॥२७॥

अहं याचे स्वीय करयुगलमाबध्य भवत,
पुरो राठोरेन्द्राजितनृपतिसाहाय्यमधिकम् ।

---

१ इतोऽस्मात् कारणात् २ समुच्चयार्थोऽथ वाशब्द । ३ चिर न प्रकुर्या मा विलम्बस्व । ४ यद् यल्लिखितम् । ५ इच्छाम । ७ प्राप्तुम् ।

यथा स्यात् तत् कार्यं निदिशत च कुर्मो यदुचितं,
सखेऽस्माक पक्षं द्रढय शुभदृष्टया मरुपते. ॥२८॥

समग्र सौराष्ट्रं ह्यणहिलपुर पट्टनमथो
पुनर्मोडासाख्य सह जनपदैरीडरगढम् ।
भडौंचेनान्वीता पुनरपि तथा गुर्जरमही,
प्रदातुं न सम्राडजितसुनृपायोत्सुकतर ॥२९॥

इतीदं सत्पत्र सविनयमथालिख्य विधिवत्,
प्रदाय क्षीवायास्फुटयदधिक स्नेहममलम् ।
उपेत्याधीश स्व स च सचिववर्यस्तददवाद्,[1]
गृहीत्वा तत्पत्र स्वयमनुपपाठाऽजितनृप ॥३०॥

पुनर्भूपोऽपृच्छद् रहसि रघुनाथ स्वसचिव,
वदास्मिन् प्रस्तावे लिखति हि यथा म्लेच्छ-सचिव ।
नरेन्द्रोक्त श्रुत्वा मनसि रघुनाथोऽथ विमृशन्,
मरुक्षोणीनाथ सकरयुगबन्ध कथितवान् ॥३१॥

अये पृथ्वीनाथाखिलनृपशिरोभूषणमणे !
भ्रमभ्रान्तस्वान्त स्वयमयमहो ! सैयदमणि ।
भय तावन्न स्यात् फररुकनृपात् कहिचिदिति,
भवत्पादाम्भोज शरणमधिगन्तु प्रयतते ॥३२॥

स्वपादाम्भोजन्माश्रितमवितुमिच्छास्ति यदि भो !
कुमार स्व ज्येष्ठ प्रहिणु सभट वीरमभयम्[2] ।
इतीत्थ मन्त्र्युक्त धरणिपतिराकर्ण्य तनुज,
तमेवोचे वत्स ! त्वमव सयदौ[3] म्लेच्छनृपत. ॥३३॥

---

१ क्षीवस्तत्पत्र दत्तवान् । २ अभयसिहम् । ३ कुतुबाऽमीन्लौ ।

दिलीशश्चेदेनौ[1] कथमपि यतेत प्रमथितुं,
रणं कृत्वा र्तीह प्रवरमयदौ रक्षतु भवान् ।
स दृष्ट्वाऽस्मत्पक्षं किमपि न समक्षं प्रयतितुं,
समर्थो यस्मात् त्वं प्रियतनय ! शक्तोऽवितुमुभौ ॥३४॥

नियुज्यैवं पुत्र सुभटसहितं क्षीवमपि च,
कृपाऽमत्रं पत्रं सयदमणयेऽदात् स विधिवत् ।
'अहो ! धैर्यं धृत्वा व्रजतु यवनेशस्य पुरतो
नहि त्रासः कार्योऽनुदिनमथ सेव्यो निजपतिः ॥३५॥

भवेतासक्ताश्चेद् निजनरपतेर्यूयमधिकं,
क्रमाज्जातं द्वेषं स्वमपगमयेत् सोऽपि मनसः[2] ।
तथा चेन्न स्यात् तर्ह्यहमुपगमिष्यामि किमपि,
शुचं मा कुर्यातं व्रजतं च सुखं तत्र वसतं ॥३६॥

इति स्नेहामत्रं विधिवदथ पत्रं स वितरन्-
शुभेऽह्नि प्राहैषीत् सुतमभयसिंहं ससचिवम् ।
अमीरुल् भूपालात्मजमभयमालोक्य मुदितः,
पुरस्कृत्याऽऽदृत्याप्यमुमथ[3] स दिल्लीं प्रति ययौ ॥३७॥

क्रमाद् गच्छन् गच्छन् कतिभिरपि यानैः[4] स सयदः
उपेत्येन्द्रप्रस्थं नरपतिकुमारेण सहितः ।
परिष्वज्यापृच्छत् स्वमथ कुशलं ज्येष्ठसहजं,
तथा[5] तेनाऽऽपृष्टः सकलमपि वृत्तं कथितवान् ॥३८॥

तथा श्रुत्वा भूपात्मजमभयमिह स विधिना,
परिष्वज्य स्नेहान्नरपतिकृपाकीर्तिमगदीत् ।

---

१ अनुग्रहपात्रम् । २चित्तात् स्वं द्वेषमपगमयेदिति योजना ।
३ अमुमभयमिह आदृत्यापि च पुरस्कृत्य अग्रे कृत्वा । ४ प्रयाणैरित्यर्थः ।
५ सपरिष्वङ्गं कुशलमित्यर्थः ।

प्रपद्यास्मत्पक्ष स्फुटमिति सुहार्द स कृतवान्,
यदेन स्व बाल प्रसृततरभाल प्रहितवान् ।।३९।।

प्रहित्यैन स्वीय जनमथ कृतार्थं स कृतवान्,
न वक्तु शक्तोऽहं किमपि महिमान नरपते ।
भुवीदृक्षा धन्या नियतमधुना सन्ति विरला,
परार्थे ये सक्ता क्षितिरियमहो ! तैर्हि विधृता ।।४०।।

पुरा मास स्वाङ्गाददित नृपवर्येण शिविना,
कपोतत्राणार्थ तदनुतुलित श्येनवयसे ।
दधीचि स्वास्थीनि त्रिजगदुपकर्त्तुं च हरये,[1]
ददौ प्रीत्यात्मान बलिरदित च ब्राह्मणकृते ।।४१।।

इति प्रोच्य प्रोच्चैर्नरपतिकुमार तमभय,
सहादाय प्राज्ञो यवनपतिनामेत्य समवक्[2] ।
प्रभो ! राज्ञा सार्ध व्यजनि भवत प्रीतिरतुला,
यतस्तज्ज्ञप्त्यर्थं[3] प्रियसुतममु स प्रहितवान् ।।४२।।

स वीक्ष्य क्षोणीशात्मजमभयसिह सरभस,
परिष्वज्य स्नेहादजिननृपमश्लाघत चिरम् ।
कुमारस्तु प्राज्ञ प्रकृतिशुचिभाग्य समधिक,
ततो[4] मान लब्ध्वाऽवसदिह नगर्या प्रमुदित ।।४३।।

विधायैवय राज्ञा यवनपतिरित्थ प्रमुदित,
परा प्रीतिं व्यञ्जन् कुतुबलनवाबे ससहजे ।
ददौ किंचित्कालोत्तरमभयवीराय करिण-
स्तुरङ्गान् पुष्टाङ्गान्कनकमयवस्त्राणि च मणीन् ।।४४।।

---

१ इन्द्राय । २ उक्तवान् । ३ तत्सूचनार्थम् ।
४ ततो यवनाधिपात् ।

कदाचित् रत्नानि द्विरदतुरगादींश्च वितरन्,
दिलीशो याम्याशा व्रजितुमशिषत्[1] तं ह्यमिरलम् ।
तदीयाज्ञां धृत्वा निजशिरसि सोऽपि द्रुततरं,
प्रयातुं याम्याशां सकलविधसंभारमकरोत् ॥४५॥

व्यधात् तत्रोद्युक्तान्[2] नयदनिकरान् युद्धनिपुणान्,
निजां दिल्लीशाज्ञां नयदमणिरेष प्रकटयन् ।
कदाचित् दृष्ट्वैकं कुतुबलकमेकं प्रभुनटः
समारेभे हन्तुं स तु कथमपि प्राद्रवदितः ॥४६॥

अदृष्ट केनापि त्वरितमुपयातः स्वभवनं,
सुमन्त्र्याथ भ्रात्रा ह्यमिरलनवाबेन सहसा ।
व्यधात् सज्ज वासे ज्वलदनलयन्त्रादि नयद-
कुलं चैतत्साह्य चरितुमभयोऽपि स्वयतत[3] ॥४७॥

दिलीशस्तत्पक्ष स्वनयनममक्षं किल विदन्,
सुनम्यर्थ दक्षो व्यसृजदचिराद् मातरमितः ।
तमेत्य द्राक् सापि न्यगददिति दिल्लीशजननी,
शृणु श्रीमन्! मन्त्रिन्! नयनिपुण! वच्मि प्रियगिरम्॥४८॥

निजार्यत्वं त्यक्त्वा भजसि किमनार्यत्वमिह भो !
भवद्भिर्यैरेवं समरभुवि हत्वारिनिचयम् ।
दिली-साम्राज्येऽसौ मम तनय आरोपित इह,
त[4] उद्युक्ता हन्तुं तमिति भवता किं समुचितम्? ॥४९॥

तदेत्युक्त्वा माता स्वयमचिरमादाय सहजौ[5]
सहैव प्रायासीत् फररकनवाबस्य पुरतः ।

---

१ प्राज्ञप्तवान् । २ दक्षिणादिक्प्रयाणे । ३ (अभयमित्तोऽपि) सुतरां यत्नं कृतवान् । ४ ते भवन्त । ५ तौ महोदरौ सहैवादायेति योजना ।

उभौ तावभ्येत्य स्वकरयुगमाबध्य विनयात्,
स्थितावीशस्याग्रे वचनमिति वक्तुं व्यवसितौ[1] ॥५०॥

अये श्रीमन् ! स्वामिन् ! रहसि हननं त्वं किमकृथा,
प्रभोराज्ञा चेत् स्यादिह निजभुजाभ्यां स्वशिरसी ।
विकर्त्यैवेदानीं पद उपनयावोऽत्र भवत',
कदाप्यन्यो हन्तुं किमिह भवदीयौ प्रभवति ? ॥५१॥

तयोर्वाक्यं श्रुत्वा फर्रुकनृपो भूरिशपथान्,
प्रकुर्वन् विश्वासं समनयदथोभौ सदकरोत्[2] ।
पुनर्याम्याशाया व्रजितुमशिपत् तं ह्यमिरुल,
स तु प्राप्यैवाज्ञां यमककुभमेतुं प्रववृते ॥५२॥

समीक्ष्यैकं जातं कुतुबल उवाच स्वमधिपं,
गृहान् गन्तुं स्वामिन्नभयमनुमन्यस्व सुभगम् ।
तदा म्लेच्छेशोऽपि द्विरदहयरत्नादिभिरलं,
सुसत्कुर्वन् गेहं व्रजितुमनुमेनेऽजितसुतम् ॥५३॥

अथाश्लिष्ट[3] सिद्धयाऽजितनरपतेः सूनुरभयं,
प्रयातो दिल्लीतो भटपुरमगात् स्वीयसुभटैः ।
तमायान्तं दृष्ट्वा नरपतिरथाऽऽनम्रशिरसं,
परिष्वज्यापृच्छद् व्यतिकरमसावप्यकथयत् ॥५४॥

इति श्रीभट्टजगज्जीवनविरचिते-
ऽजितोदये महाकाव्ये
एकविंश सर्ग समाप्त ।

---

१ प्रवृत्तावित्यर्थः । २ सत्कारं कृतवान् । ३ सिद्धया श्लिष्ट कृतार्थ इत्यर्थः ।

# द्वाविंशः सर्गः

भूपालाधीश्वरश्चाजितधरणिपतिः कर्हिचिद् मन्त्रिवर्यं,
हूत्वा सम्मन्त्रविज्ञ रहसि च सुदृढं निश्चय तेन कृत्वा ।
सम्यक् सर्वावरोधान्वित उपचरितो मारवैर्वीरवर्यं,
पृष्ट्वा शुद्धं मुहूर्तं गणकगणवराद् गजगक्ष्मा प्रतस्थे ।।१।।

योधव्रज्जात् प्रयाण तदनु स नृपति सार्धगव्यूतिमात्रं[1],
कृत्वा विश्रम्य किंचिद् द्विजमरसि महाद्रूप्यसज्जा[3] विधाय ।
बाह्ये स्थाने च पौर्वान्[4] परित उपनिवेश्याथ सैन्यान् सुवीरा-
स्तस्मिन् सान्त पुरोऽस्थाद् धृतरति कतिचिद्वासराणि क्षितीश.।२।।

तस्मिन् राज्ञो निवासे समदकरिवरव्यूहसैन्यान्निशीथे,
क्रूर प्रोद्यन्मदान्धो निजनिगडमथोत्त्रोट्य वै दुर्निवार ।
लोके सुप्ते समायान्नरपतिशिविर कोऽपि हस्ती तत. स,
भित्वा तद्दूष्यभित्ति न्यविशत शयितक्ष्माधिपेऽन्त पुरेऽपि ।।३।।

यावत् कोलाहलोऽभूत् सपदि बृहदिभेऽन्त पुर सप्रविष्टे,
तावच्छय्या जहत् तद्भयमुपशमयन्नुत्थित क्षोणिपाल ।
वीर खड्गेन तस्योत्कटशिरसि बलात् प्राकरोत् त्रिप्रहारा-
स्तावद् बृहा[5] च विटा जहदहह [6] सम भूमिपृष्ठेऽपतत् स ।।४।।

दृष्ट्वा वीरोर्जित तत् कवय उदनयन् किं न्वसौ राट्प्रभाव,
किं वा खड्गप्रभाव प्रभवति यदसौ[7] वृत्रजिद्[8] वज्रवद्धि ।

---

१ जुष्ट सेवितोऽनुगत इत्यर्थं । २ क्रोशद्वयप्रमाणम । गव्यूतिः स्त्री क्रोशयुगम्' इत्यमर । ३ महतो वस्त्रगेहस्य रचनाम् । 'दूष्याद्य वस्त्रवेश्मनि, इत्यमर । ४ पूर्वदिग्भवान् 'पूर्वत्रिया' इति ख्यातान् ।
५ बृंहित करिगर्जितम् । ६ तस्तितवन्त । ७ खड्ग ।
८ वृत्रजित इन्द्रस्य वज्रवद्धि असौ (खड्ग) प्रभवति सामर्थ्यं दर्शयति । वृत्रजिदिति साकूतम्, येन वृत्रो जितस्तेन वज्रेण तुल्यमित्यर्थं ।

इत्थं तर्कोपतर्केष्वथ विविधतया व्यज्यमानेषु तत्र,
प्रौढ कश्चिद् विपश्चिद् विमलतरमतिर्भूपमेत्येवमूचे ॥५॥

लोह' प्राप्तोऽज[1]शूलात् किमु भुजगपतिश्वासमध्मानदीप्ते,
सतप्तो वाडवाग्नौ घटित उ[2] पविना क्षालित' कल्पवार्यां ।
आरोप्यादित्यशाणभ्रमिमथ नितरा तीक्ष्णधारा च नीत,
कालेनैवोपहृत्यं तव मरुनृपते ! कल्पित. खड्ग एष ॥६॥

श्रीमान् राजेन्द्र एव द्विनमरमि कियन्त्यप्यहानि प्रहर्षात्,
सार्धं सैन्यैरुषित्वा तदनु खलु ततो गाहमानोऽग्र्यमार्गम् ।
जालोर प्राप्य तस्मात् पुनरपि च चलन् भिन्नमाल प्रपद्य,
दृष्ट्वा यक्षशकुण्ड' द्यविहृतहृदयस्तत्र वस्तु ववाञ्छ ॥७॥

राज्ञो यक्षेशकुण्डे वसत इह यथु साधु कत्यप्यहानि,
कस्मिश्चिन्नह्नि तत्र क्षितिपतिरजितश्चेतमीत्थ[4] शुशोच ।
"प्राप्तो मर्माणि कस्माच्चिदपि खलु जनाद् दुर्जनो दुर्जनाख्यो[5]
गत्वा प्राग् मेडतायामहिपुरपतिजैनैकतामाससाद ॥८॥

पश्चादिन्द्रात्मजस्य क्वचिदपि विषयेऽभ्यन्तरङ्ग स भूत्वा,
तन्मन्त्रेणाप्युपायैर्मम निकटमुपासद्य भृत्यत्वमाप ।
कुर्वन् सेवा च धूर्तोऽनुदिनमनुनयश्चारु चोपावत मे,
मन्त्रिश्रेष्ठ स्वमन्त्रैर्हृदय[6]ममभिध प्रापयामास भेदम् ॥९॥

कृत्वैवं तेन सार्धं प्रणयमतिदृढ मन्त्रयित्वाऽस्य पत्र,
दत्त्वाऽह्वच्चेन्द्रपुत्र फणिपुरग्त इहानिष्टमिच्छुर्मदीयम् ।
कूट तस्येति बुद्ध्वाऽहमपि निजभटै सज्जितो यावदास,
तावत् सभ्रान्तचित्त सपदि समागच्छदाम्या कुमार ॥१०॥

---

१ शिवशूलात् । २ 'उ' पाद पूरणे । ३ जाक्रोप' इति स्यातम् ।
४ प्राक्तनी घटनाम् । ५ दुर्जनसिंह । ६ नागोराधिपपुत्रेण मोहरमसिंहेनेत्यथ । ७ उदरसिंहम् ।

यावच्चाँपिर्ममार ध्रुवमुदयहरिस्तत्र संग्राममूमौ,
जैतिर्वै दुर्जनाख्यो मरुभुवमपहायेन्द्रसिंहस्य राज्ञः ।
पुत्रेणैवाऽथ सार्धं त्वरितमपसरन्[1] स्वैर्भटैः प्राप दिल्लीं,
श्रीमन्म्लेच्छेन्द्रसेवाफलविगतभयावूषतुस्तत्र चोभौ ॥११॥

तत्रैवेन्द्रस्य पुत्रे निहतवति तथा[2] मद्भयात् प्रोज्झ्य दिल्लीं,
दुष्टात्मा दुर्जनाख्यः क्व सह निजभटैरस्ति लीनो न जाने ।
जीवन् कुत्राप्यदूरे यदि स तु निवसेत् स्वैर्भटैः सार्धमेव,
तर्ह्यस्मास्वत्र केनापि तु खलु विदितः सभवेदेव नूनम् ॥१२॥

यातो भूमेः सुदूरं विषयमिति यतस्तस्य गन्धोऽपि नैव,
शीघ्रं तद्घातनं स्यात् कथमपि हि यथा तद् विधास्येऽहमद्य ।"
इत्थं संचिन्तयन् सोऽजितमनुजपतिर्निश्चयं कर्तुमिच्छु-
र्व्यासं श्रीदीपचन्द्रं रहसि हृदि गतं स्वाशयं व्याजहार ॥१३॥

केनोपायेन विद्वन् ! ध्रुवमचिरतरं स्याद् वधो दुर्जनस्य,
गत्वा दूरं हि दुष्टः क्वचिदपि स निलीनोऽस्ति मत्तोऽतिभीतः ।
श्रुत्वेत्थं सोऽप्यवादीदतिविनययुतो भो मरुक्ष्माधिराज !
किं नाम स्यादसाध्यं जगति मतिमता यत्नभाजा जनानाम्? ॥१४॥

द्वौ स्तोऽत्रार्थे प्रथम इह हरिर्योऽस्ति चाँपावतेति-
श्रीमज्जस्वन्तपुत्रोऽन्य इह[3] हरिसुतः खेतसीरस्ति भाटी ।
*अत्रोभावानयामीत्यभिहितहितवाग् व्यास आनीय तौ द्वौ,*
भूपालायार्पयत् स क्षितिपतिरपि तौ स्वाशयं ज्ञप्तवान् वै ॥१५॥

श्रुत्वा भूपाशयं तौ वसुनिचयमथो बिभ्रतौ तन्निदेशं,
नत्वा तत्पादपद्मं त्वरितमथ ततोऽभ्येत्य गेहं स्वकीयम् ।

---

१ पलायमानः । २ पूर्वोक्तेन प्रकारेणेत्यर्थः । ३ इहानयोः (मन्ये) ।

तत्रोषित्वा तु मासद्वयमिह विषये सारमन्वेषयन्तौ,
सन्नोध्य स्वाशय प्राक् स्वचरममुचता[1] मालवान् प्रत्यमन्दम्।।१६।।

इत्याज्ञामाप्य ताभ्यामवनिपतिरथो भिन्नमालात् प्रयाण,
कृत्वा सार्धं स्वसैन्यै पुनरपि च बृहद्ग्राममुल्लङ्घ्य नूनम् ।
बाठग्राम प्रपद्य स्थितिमपि च कियन्त्यप्यहानि प्रकृत्य,
दूर यातोऽर्बुदाद्रेर्निकटमुपगत चाशृणोद् देवडार्यम् ।।१७।।

अस्त्येको देवडार्योऽर्बुदगिरिनिकटे शक्तिमिहाभिधानो
गाढ वप्र विधायाऽधिवसति किल य स्वैर्भटै सेव्यमान ।
यावत्सपन्नसार्थ पथि खलु विचरेत् तावत प्रेष्य योधान्,
यो लुण्ठन्नेव जीवत्यहरहरधिका भोग्यलक्ष्मीं प्रपन्न ।।१८।।

श्रुत्वा कश्चिन्नवाबं कमपि नरपतिं वोग्रसैन्यैरुपेत,
दूराद् दृष्ट्वाऽर्बुदाऽन्तर्निजजनसहित क्वापि लीनो भवे द्य· ।
ये वै देशान्तरेभ्यो वणिज उपगता अर्जितप्राज्यवित्ता,
ते दत्त्वैवार्थभाग शरणमधिगता सीम्नि सौख्याद् व्रजन्ति ।।१६।।

एव धूर्तस्य धौर्त्य नृपतिरपि विदित्वा स्वाज्ञापयत्स्वान्,
वीरान् घोराग्नियन्त्रोत्थिततरसुबृहद्गोलवृष्टिप्रपातम् ।
तेनातित्रस्तचित्तं निजविकटभटैर्ज्ञापित शक्तिमिह ,
कुर्वन् सधि प्रयत्नान्नृपचरणगतोऽश्वाद्यदाद् भूरि वित्तम् ।।२०।।

नत्वा तत्पादपद्म सविनयमवदद्देवडाशक्तिमिह·,
श्रीमन् ! राठोडरत्नाऽर्जितधरणिपते ! पाहि मा मारवेन्द्र! ।
नून शब्दायमाने तव जयपटहे शत्रुहृद् दीर्यते द्राग्,
वाप्पाम्भस्तद्ध्वना नयनसरसिजात् प्रस्रवत्यद्भुत[2] तत् ।।२१।।

---

१ प्रत्ययनाम् । २ शत्रूणा हृदि दीर्यमाणे तद्धूनामश्रुमोचनवर्णनाद-सगत्यनकारोपनब्धमाश्चर्यम् । "कार्यकारणयो-भिन्नदेशतायामसगति ।"

संतुष्टस्तद्वचोभिर्नरपतितिलक सत्कृपावीक्षरणेन,
तस्मै नून प्रदायाभयमतिमुदितस्वान्तरङ्ग शशास ।
योऽस्मन्नामाभिगृह्णन् पथि पथिक इहोपव्रजेन्नो स धृष्य-
स्तस्मै दत्त्वाऽभयं प्रागतिथिसमुचितं चाऽर्घ्यं पश्चाद् विसर्ज्य ॥२२॥

एव कृत्वात्मसात्[1] तं पुनरपि च तमास्थाप्य तत्रैव नून,
भूपाल पालनाख्य पुरमचिरमसौ प्राप सद्धर्मपाल ।
म्लेच्छस्तत्रत्य आप्तश्चपलतुरगमारुह्य कश्मालखान
क्षोणीन्द्रस्याङ्घ्रिपद्मान्तिकमुपगतवान् वन्दन चारु चक्रे ॥२३॥

श्रीमान् पञ्चायनाख्यो भुवि विदितयशा दुर्जयोऽन्यैर्नृपालै-
र्वाप्या राज्य प्रशासद् गणयति कमपि क्ष्मापतिं य स्म नान्यम् ।
सोऽपि श्रुत्वा ससैन्य नृपमजितमिहायातमर्कप्रताप,
त्रस्त. सधि प्रकुर्वन् वसु च बहुहयानर्पयामास नम्र. ॥२४॥

भूप सत्कृत्य तस्मै वरतुरगमपि स्नेहवस्त्राणि दत्त्वा,
त्व भुङ्क्ष्वास्मन्निदेशाच्छ्रियमपगतभीर्याहि सौख्येन तिष्ठ ।
एव कृत्वात्मसात् त प्रणतिविधिपर प्राहिणोद् राणवर्य,
सोऽपि प्राप्तप्रमोदोऽजितनृपतिजय भाषमाण प्रतस्थे ॥२५॥

कोलीवाट[2] प्रपद्य क्षितिपतितिलको ग्रामतो ग्राममन्य,
गच्छस्तेभ्यश्च गृह्णन् स्वकरमयवसूपद्रवोच्छेदपूर्वम्[3] ।
पश्चात्तत्सत्कृतोऽगादणहिलपटन तत्र वास च कृत्वा,
स्वाज्ञामाघोष्य तत्राप्युचितसचिवमास्थाप्य चाग्रे प्रतस्थे ॥२६॥

श्रुत्वा कोलाश्च मार्गे कृतविविधमहोपद्रवान् सज्जसैन्यं,
सेनानीत्व स दत्त्वा निजसचिवसुतं प्राहिणोद् द्रागनूपम्[4] ।

---

१ आत्माधीन (कृत्वा) । २ 'कोलीवाडा' । ३ तदुपद्रवविनाशन-पुरस्सर राज्यकर-धन गृह्णाति भाव । ४ अनूपसिंह (सचिव पुत्रम्) ।

'सोऽत्युग्रान् दुर्गमस्थान् परित उपससादाऽथ[1] हत्वा रणस्थान्,
दत्वाऽन्येभ्यो नमद्भ्यस्तदुचितमभय तत्र सस्थाप्य चागात् ॥२७॥

तस्यान्ते सोऽपरानप्यधिकृकृतमहोपद्रवास्तत्र दस्यू-
नुद्दण्डान् दण्डयित्वा समरभुवि गतान् दुर्जयाश्चापि जित्वा ।
वध्यान् हत्वा तथाऽन्यानजितनृपवराज्ञावशान् स्थापयित्वा,
प्रत्यायातो नृणेणावगतलदखिलार्थेम सोऽमान्यतूप[3] ॥२८॥

पश्चाद्राजाधिराजोऽध्यगमदहमदावादमत्रत्यपौरा,
सर्वे द्रष्टु तमायानथ यवनवरा श्रेष्ठिनोऽन्ये च मुख्या ।
प्रीत्याऽऽत्तोपायनास्तच्चरणयुगमुपागम्य नेमु स तास्तान्,
समान्य प्रेमवाग्भिर्बहुपणवरवै[4] प्राविशद् गीतकीर्ति ॥२९॥

त श्रुत्वाऽन्तर्विशन्त नगरयुवतयो द्रष्टुमेयु समन्तात्,
काश्चित् त्यक्त्वार्भक स्व स्तनभवपयस पानतो वञ्चयन्त्य ।
काश्चिच्चाक्तैकनेत्रा रभसवशविमुक्ताञ्जना अन्यनेत्रे,
भुञ्जाना भोज्यमन्या[5] अकृतचुलुकितास्तद् विहायोपसस्रु ॥३०॥

प्रोत्थायाशु स्वपत्योऽलवुपणवरव त समाकर्ण्य काश्चित्,
त्यक्तालक्त च काश्चित् स्वचरणमपर धारयन्त्य ममीयु ।
गोर्जर्यो वैपरीत्यात् परिधृतवसनाभूषणा काश्चिदीयु-
रन्या वातायनस्था प्रददृशुरजित त कुलस्त्रीवरेण्या ॥३१॥

वाद्यै सवाद्यमानैर्मुखरितदिशि तद्राजमार्गे विशन् स,
उत्पश्यत्पद्मनेत्रा नयनसरसिजैरर्च्यमान प्रकामम् ।
सत्कुर्वन् सस्मितेन प्रियसुभगदृशा दर्शनेनाधिक ता[6]
द्रव्याण्युन्मर्जयन् वै पथि नृपसदन प्राविशद् वेदघोषै ॥३२॥

---

१ स सेनानी । २ आसान्नवान् । ३ अमानि सन्मानित ।
४ पणवा वाद्यविशेषास्तेषा रवैरुपलक्षित इत्यर्थ । उपलक्षणे तृतीया ।
५ अकृतमुखप्रक्षालना । ६ ता स्त्री (सत्कुर्वन्) ।

एवं भूपोऽजितेश सुपुरमहमदावादमभ्येत्य तत्र,
स्वाज्ञामाघोष्य सम्यग् निखिलपुरजनान्निर्भयास्तानकार्षीत् ।
दत्वाऽनूपाय नूनं प्रखरमतिमते गुर्जरस्याधिकारं,
कस्मैचिद् मन्त्रिणेऽदान्निखिलमपि तथा सोरठस्याधिकारम् ।।३३।।

कस्मैचिद् मन्त्रिणेऽदाद् भडवचनगरं त्वीडरं चापरस्मै,
मोडामाख्यं च कस्मैचिदणहिलपुरं पट्टनाख्यं परस्मै ।
आ-तोडाद् द्वारकान्तान्निखिलजनपदान् मारवान् वै पृथक् च,
मन्त्रिभ्योऽन्येभ्य आर्याऽजितनृपतिलकः सर्वकामान् सिषेवे ।।३४।।

भूपालाधीश्वरः स स्वसचिवमपरं श्रीविजैराजसञ्ज्ञं,
कृत्वा सेनाधिनाथं निजविजयवहां वाहिनीं चानुसार्य ।
विष्वक् तद्दिग्जयार्थं स्वहनि किल समाज्ञप्तवान् सम्प्रयातुं,
मूर्ध्ना सोऽपि प्रणामं प्रविदधदचिरं तत्पुरस्तात् प्रतस्थे ।।३५।।

इति श्रीभट्टजगज्जीवनकृते-
ऽजितोदये महाकाव्ये
द्वाविंशः सर्गः समाप्तः ।

# त्रयोविंशः सर्गः ।

गत्वा मन्त्री सुदूरं नमत उचितमास्थाप्य तत्रैव लोका-
स्तेभ्यो द्रव्य गृहीत्वा पुनरपि च ततोऽप्याश्रितो मार्गनग्रयम् ।
दृष्ट्वोग्रास्तान्निहृत्य क्वचन कतिचन द्वेषिणस्तद्धनानि,
ग्राह[1] ग्राह जगाम त्वरितमथ पुर पिप्पल[2] राजपूर्वम् ॥१॥

अस्त्येको राडमात्याऽनुज इह नगरीं मेडता य प्रशास्ति
नाम्ना वै पोममीति प्रकटतरयशा विक्रमो नीतिदक्ष ।
लब्धवाज्ञा स्वप्रभो स प्रचुरभटयुता वाहिनीं सज्जयित्वा,
नागौर सप्रतस्थे गुणिगणकजनैर्दर्शिते सन्मुहूर्ते ॥२॥

श्रुत्वा तच्चेन्द्रसिंहो निजसुभटचमूं प्राक् तदग्रे मुमोच,
मार्गं रुद्ध्वेन्द्रसैन्यास्तदनु युयुधिरे वह्निगोलोरुयन्त्रै ।
व्यञ्जन्ति स्म स्ववीर्याण्यजितनृपभटास्त्रोटयन्तोऽरिमौलीं-
स्तस्माद् द्रुत्वेन्द्रसैन्या भयविधुरहृदः स्वामिन पार्श्वमीयु ॥३॥

इन्द्र श्रुत्वा तदीय वचनमहिपुरीबाह्यवप्रे विशाले,
कृत्वा सज्जान् स्ववीरानभित उपनिवेश्याथ चाभ्यन्तरीयम् ।
वप्र घोराग्नियन्त्रैरपि सुभटगणै सज्जित द्राक् प्रकार्य,
पुत्रैः पौत्रस्तथान्त पुरचरमनुजैर्यत्नवास्तस्थिवान् स ॥४॥

तावत् त्वागत्य सेनाऽप्यजितनरपते साहस दर्शयन्ती,
*कुर्वाणैर्गोलवृष्टि युधमकृत परैर्धीरतामत्यजन्ती ।*
सेनान्या समतोऽसावजितनरपतेर्मन्त्रिवर्योऽरिवीरान्,
बाह्यानामेलयत् तत्तदुचितविभवग्रामपट्टान् प्रदाय ॥५॥

अन्त स्था इन्द्रयोधास्त्वजितनृपहित चेतसा चिन्तयन्त
आत्मीय चेन्द्रसाह्यं बहिरखिलजनान् दर्शयन्तोऽप्यतन्त ।

---

१ गृहीत्वा गृहीत्वा । २ राजपिप्पल नाम पुरम् ।

बाह्यैः सयुध्यमानैररिति[1] सपदि तदा बाह्यवप्रं विभिद्य,
    निर्जित्याऽयो पुरं तत् तदधिपसदने वह्निगोला प्रवृष्टाः ॥६॥

तेष्वेव युध्यमानेष्वनुदिनमुचितं चेतमीन्द्रो व्यचिन्तत्,
    किं स्याद् युद्धे कृतेऽत्राऽजितनृपतिबले न प्रभुः स्या कदाचित् ।
स्यातुं दुर्गेऽप्यशक्तः कथमपि च ततो यामि दूरं दिगन्तं,
    निश्चित्यैवं न मात्राऽजितनृपसचिवं चारु चारेण[2] चोचे ॥७॥

चेद्दीयेताऽवकाशः कथमपि कृपया यामि निस्सृत्य दूरं,
    बाह्यं प्रोक्तं तथास्त्वित्यथ न मजलहग् नि समारेन्द्रसिंह ।
स्वीयैः सर्वैरुपेतः पथि सपदि चलन् काशलीमेत्य तस्या,
    किंचिद् धैर्यं प्रपन्नः कथमपि तु बहिस्तत्र चैकाहमस्थात् ॥८॥

इन्द्रक्ष्माभुक्-कुमारा बहव उदभवन् ये हि तेष्वेक आसी-
    दुग्रो मौहोकमस्यानुज इह रणजिद् मोहनादिस्तु सिंह ।
दुर्धर्षोऽहर्निशं यो निजमनसि परं चिन्तयन्नेव रात्रौ,
    निद्रामप्यभ्युपेता[3] युवतिमिव पतिः प्रायतिष्ट प्रनोक्तुम् ॥९॥

नृपादिष्टः कदाचिन्निशि शिविरगतं मन्त्रयन्तं च कंश्चिद्,
    दूरादभ्येत्य यौधिस्तमकथयदिदं दुर्जनो दुर्जनारिः ।
चेत् त्वं हन्तुं क्षमो मामजितनृपभटं तज्जहीत्येष[4] बुद्ध्वा,
    खड्गं चिक्षेप रुद्ध्वा स[5] तं[6] मुरु[7] फलकेनासिना तं[8] जघान ॥१०॥

उग्रः कोलाहलोऽभूदिति निशि निहते मोहनेऽथेन्द्रसिंह-
    स्त्रस्तः स्वाद् वासगेहात् सपदि किल विनिर्गत्य दूरं प्रयातुम् ।
निश्चित्य स्वान्त ऊचे निजसहगभटानत्र वै तिष्ठतोऽपि,
    हन्युर्नि-शङ्कमस्मानजितनृपभटा इत्यतो गम्यमेव ॥११॥

---

१ इति वाग्गात् ।    २ चारद्वारा ।
३ उपन्यिनामित्यर्थः ।    ४ एष मोहनसिंह इति बुद्ध्वा श्रु वेत्यर्थ ।
५ स दुर्जनसिंह ।    ६ तं खड्गम् ।
७ उरुणा महता फलकेन चर्मणा (ढाल) ।    ८ मोहनसिंहम् ।

तं सत्कृत्याग्निनाऽतस्त्वरिततरमगान्नि श्वसन्निन्द्रसिंह',
खण्डेलामेत्य तत्र श्रममुपशमयन् प्रापदम्बावती स ।
स्त्रैण संस्थाप्य तत्रोपकरणसहित धाम्नि तत्स्वामिदत्ते
तस्थौ स्वेच्छान एव स्वयमपि कतिचिद् वासरान् सप्रयत्नम् ।।१२।।

गाजुद्दीखानसूनुर्य्यवसदिह हि यश्रीकिलच्खानसञ्ज्ञ-
स्त गत्वा तन्मुखेनापि च स यवनप प्रार्थयामास साह्यम् ।
विज्ञप्तः किन्तु तेनाऽवसरसरणिवि[1]न्नोत्तर दत्तवान् स,
यत्नभ्र शान्निराश स समयमनयद् दु स्थितान्मेन्द्रमिह. ।।१३।।

जाडेचाधीशितुर्वै नवनगरपतेर्जामलाखाह्वयस्य,
पौत्रो जामस्तमाचीर्निजसचिववरैस्तत्र शास्ति स्म राज्यम् ।
त पृष्ट्वा वाक्-प्रदत्ता समुपयमयितु स्वा सुता चा[2]ऽजितेन,
लाखास्त्री तत्पितामह्यगमदचिरतोऽहमदावादधाम ।।१४।।

राज्ञी झाली तु तत्र प्रचुरपरिकरा प्राप्य त मारवेन्द्र,
विज्ञाप्य स्वाशय सा तदनुमतिमुपादाय सतुष्टचित्ता ।
द्रङ्गाद् बाह्यप्रदेशेऽनतिनिकटगते साभ्रमत्यास्तटान्ते,
श्रीनम्लेच्छाधिराजो यवनमतिशुभ गौरवादध्यवात्सीत् ।।१५।।

दैवज्ञैर्विज्ञवर्य्यैरवहितमतिभिर्निश्चिते शुद्धलग्ने,
सपूज्य प्राग् गणेश द्विजकुलतिलकै स्वस्ति पुण्याहवाग्भि ।
रक्षाबन्ध प्रक्लृप्याजितनृपतिवरो मातृकार्चा विधाय,
वैवाहानप्यशेषानुपकरणचयान् योजयामास सम्यक् ।।१६।।

तद्द्रङ्ग सेचयित्वा शिशिरतरलसच्चन्दनोशीरवार्भि-
र्माल्यै सत्केतनैश्चापणपथमनुलैरुत्सवैर्भूषयित्वा ।

---

१ अवमग्पयज्ञो देशकालावस्थाभिज्ञ इत्यर्थ । स यवनपति ।

२ च पादपूरणार्थोऽत्र ।

दीव्यन्मुक्ताफलाढ्यं मुकुटमपि वहन् हेमदीप्ताम्बराणि,
मत्तेभं चाधिरुह्य प्रचुरभटयुतोऽगात् स उद्घोषिवाद्यं ॥१७॥

वेदोद्घोषैश्च भेरीपटहपणवकोद्घोषणैः सूच्यमानो
नारीसप्रेमहासोद्विकचमुखसरोजातगीतोच्चगीतैः ।
वर्षन् पीयूषपूरं मरुधरणिपतिर्मार्गधैर्वर्ध्यमानः,
प्रापत् कन्याधिवासं नियमितसमये चाग्रहीत्तत्कराब्जम् ॥१८॥

वेदोद्घोषैः प्रदीप्ते कृतविधिरनले तत्पुरोधा जुहाव,
रीत्येत्यूढात्मजाय[१] क्षितिपतिमणये पारिबर्हं ददौ सा ।
दानान्धान् वारणेन्द्राञ्जवजितमरुतोऽश्वान् रथान् दीप्तकेतून्,
मुक्तादामादिरत्नाभरणपटलमप्यम्बराण्युत्तमानि ॥१९॥

दत्त्वा दासीश्च दासान् मणिवरखचितं सन्नृयानं तथाऽऽर्य्य,
क्ष्मापं समानयन्तौ प्रियशुभवचनैः प्रेषयामास सा तम् ।
सोऽपि प्रौढप्रतापो वसुनिचयमथोत्सारयन् मानवेभ्यः,
स्वीयैः सैन्यैः समेतः स्तुत इतरजनैः प्राविशत् पत्तनं तत् ॥२०॥

प्रागासीच्चावडाग्र्योऽणहिलपुरपतिर्गुर्जरेशः सुकीर्तिः,
ख्यातः क्षोणीशवृन्दार्चित इह वणरावाह्वयः पुण्यशीलः ।
पृथ्वीराजस्तदीयोज्ज्वलकुलतिलको दूरदर्श्येत्य भूपं,
पुत्रीमुद्वाह्य च स्वामदित विधियुतं पारिबर्हं तदानीम् ॥२१॥

भूपेन्द्रो मन्त्रिमौलावखिलमपि महाराज्यभारं निधाय,
चिक्रीडान्तःपुरान्तर्निजयुवतिजनैर्गुर्जरेशत्वमाप्य ।
एवं क्रीडासुखेनाऽन्वितरुचि[२] नयतो भूरिमासान् कदाचिद्,
राज्ञस्तस्योदतिष्ठद् मनसि सुमनसो द्वारकादर्शनेच्छा ॥२२॥

---

१ इति इत्थं रीत्या ऊढा परिणीता आत्मजा पुत्री येन तथोक्तस्तस्मै ।
२ इच्छानुसारमित्यर्थः ।

रक्षार्थं गुर्जगेर्व्या निजसचिवरघो सूनुमास्थाप्य तत्रा-
  ऽनूप कृत्वा च शिक्षावशनिपुणमतीन् सद्भटास्तत्सहायान् ।
श्रद्धा पूर्णां दधानोऽजितनृपतिरसौ सोत्मव मावरोध-
  स्तीर्थान्लोकानुरक्तै रखिलमरुजनैर्द्वारका सप्रतस्थे ॥२३॥

त्रस्तस्तावत् समुद्र स्वमनसि जलमात्रावशेषो विमृश्य,
  नि शङ्कं प्रस्थितेऽस्मिन् क्षितिभुजि[1] किल मे का गतिर्भाविनीति ।
विज्ञाप्याऽम्भोऽधिराज[2] तदुचितवचसा धैर्यमालम्ब्य तस्मै,[3]
  प्रादाच्छुक्लद्वितीयाशशिमिषत[4] इमा स्वीयविज्ञप्तिपत्रीम् ॥२४॥

श्रीमत्तोऽहारि दृष्ट्या तव मरुनृपते कोशगेहेश्च मण्यो
  हस्ताम्भोजेन च स्वस्तरुरतिमधुरैर्वाग्विलासै सुधा च ।
वार्यैवात्रावशिष्ट मम घनमधुना तत्[5] त्वदीयोरुसैन्यो-
  द्भूताभिर्धूलिभिर्मा व्रजतु लयमिति प्रार्थना मेऽस्ति नूनम् ॥२५॥

पद्भ्या मार्गेऽन्वह स प्रचुरतरभटै सार्धगव्यूतिमात्र,
  गच्छन् गृह्णश्च वाचा हरिपदमनिश द्वारकेश स्मरश्च ।
तन्मार्गान्तर्विराजद्-हलवदनगरेशेन पूर्व यशास्ये-
  नोपेतेनाड्घ्रिमूल धरणितललुठन्मौलिना सप्रणेमे ॥२६॥

भूपोऽप्याहृत्य त तद्धलवदनगर प्राप्य तस्थौ कदाचि-
  द्रात्रौ कस्यापि तत्रापणिकवरविशो[6] लुण्ठिता कैश्चिदुष्ट्रा ।
चारद्वारोदितस्तत्प्रभुरवददिद[7] सौरठीयोऽस्ति देशो
  नाह जाने हृत किं प्रयतनसहितैर्यात्रिभि स्थेयमासीन् ॥२७॥

---

१ क्षितिभुजि अजिते । २ अम्भोऽधिराज वन्गाम । ३ क्षितिभुजेऽजिताय ।
४ अनया कविदर्शितयाऽपह्नुत्या नवीनचन्द्रदर्शनोपलक्षिते शुक्लद्वितीयादिने राज्ञ प्रस्थान जानमिति व्यज्यते । ५ नदवारि (जल)-रूप धनम् ।
६ तत्र राजावासे आपणिकवरस्य पण्यजीवश्रेष्ठस्य विशो वैश्यस्य(उष्ट्रा) ।
७ चारद्वारा उदितो वस्तुस्थिति सूचित तत्प्रभुस्तन्नगराधीश ।

गृह्णन्तुद्दानयास्मानिति कुपितनिजस्वामिकाकूक्तिजाग्रत्-
कोपा वप्रं सुसज्ज्य त्वरितमुपगतास्तद्भटा उग्ररूपा ।
सेनाया· पार्श्वतश्च ज्वलदनलमहायन्त्रवक्त्रोत्थगोलान्,
दूरात् प्रक्षिप्तवन्तस्तदतिकुटिलता वीक्ष्य भूपोऽतिरुष्ट· ॥२८॥

नृप क्रोधाभिभूतोऽकथयदिति भटान् वप्रमद्यैव भङ्क्त्वा,
बद्ध्वैनं झालराज निजकुलसहित मत्पुरोऽत्रानयन्तु ।
श्रुत्वोग्रां ता नृपाज्ञा तदनु नृपभटा वप्रमासेदुरन्ये,
तत्रोद्दीप्ताग्नियन्त्रोत्थिततरसुमहागोलवृष्टिं प्रचक्रु ॥२९॥

त्रस्तो गोलप्रपातै· परित इह यशोनामधेयो निशीथे,
कैश्चित् सधि विधाय स्वभटजनयुतोऽलक्षितो नि ससार ।
प्रात सूर्योदये सत्यवनिपतिभटा सिंहनाद प्रकृत्य,
स्वानश्वान् सज्जयित्वा परित उपगता वप्रमध्ये निपेतु ॥३०॥

लुण्ठित्वा तत्पुरं ते तदनु नृपभटा वप्रमुच्छिद्य सर्वे,
नृप व्यज्ञापयन्नित्यहह[1] स कुनृप क्वापि दूर द्रुतोऽगात् ।
चारैरेत्यैतदुक्त नवनगरमसौ[2] प्राप्य ससज्ज्य वप्र,
नि शङ्कं तिष्ठतीति क्षितिपतिरजितस्तद्विदित्वाऽऽप तत्र[2] ॥३१॥

राठोडक्ष्माधिनाथो नवनगरमथ प्राप्य मुख्यानुवाच,
झालाना वै कुठारोऽस्त्ययमिह भवतो वप्रमध्ये निषण्ण[3] ।
देयोऽस्मत्तस्करोऽयं यदि नहि युधि तर्ह्यद्य योद्धव्यमेव,
तच्छ्रुत्वा ते तु वीरा ज्वलदनलमहागोलकानभ्यवर्षन् ॥३२॥

रुद्ध्वा वप्रं बहि·स्था अपि पृथुहुतभुग्यन्त्रगोलानवर्षन्,
यान्त्यायान्तो च दृष्टोभयत इति तदा गोलकाना प्रवृष्टि ।
तेष्वेव युध्यमानेष्वविरतमगमन् पञ्चषाणि ह्यहानि,
खिन्ना प्रापत् पितामह्यथ नवनगरेशस्य भूपालपार्श्वम् ॥३३॥

---

१ यशोनामा नृप । २ नवनगरे । ३ स्थित ।

द्वे लक्षे रूप्यकाणां सुकनकघटितानूपरणानि द्विपेन्द्रा-
नश्वाश्चाग्रे निवेद्य प्रणतिनतशिरा साऽर्थयामास भूपम् ।
राजेन्द्राधीश! देवाजितमनुजपते! माग्वेन्द्रार्त्तरक्षि-
स्त्वत्पादाब्जाश्रितानां क्वचिदपि न भयं कर्हिचिद् दीनबन्धो! ॥३४॥

श्रुत्वा विज्ञप्तिमेनां नयविनयविदाऽग्र्यं राजा प्रसन्न ,
प्रोचे तामत्र मान्ये! त्वदनुसृतममुं बध्यमप्युत्सृजामि ।
त्वत्पक्ष सश्रितानामपि किल न भयं त्वादृशां स्यात् कुतस्त-
दित्याश्वास्याजिनस्तां स्वयमपि च ततो द्वारकां सम्प्रतस्थे ॥३५॥

गच्छन्मार्गेऽतिभक्त्या हरिरिति सुपदं कीर्तयन् प्रीतचेता ,
प्रात पद्भ्यां सदैव स्वभटसमुदयै सार्धगव्यूतिमात्रम् ।
पन्थानं लङ्घमान कतिभिरपि तदा वासरै सावरोध.,
प्राग्जन्मप्रार्जिताघप्रकरपरिहरां द्वारकामासदत् स ॥३६॥

या तत्रानेकजन्मार्जितदुरितहरा गोमती पुण्यनीरा,
यत्सङ्गं चानुराकारजनिजनि[1] तमुत् तोयराशि सुभुङ्क्ते ।
तस्या तत्सगताया यदि खलु मनुज स्नाति सम्यक् सुभक्त्या,
नो मातु स्तन्यपानं क्वचिदपि कुरुते विष्णुमालोकयमेति ॥३७॥

स्नात्वा तस्यां तु सम्यग् विहितविधि तदा तर्पयित्वा सुरादीन्,
पित्र्यं श्राद्धं विधायोज्ज्वलकनकमयाभूषणान्यंशुकानि ।
सौवर्णाभूषणाढ्यानपि तुरगवरान् ब्राह्मणेभ्य प्रदाय,
स्वर्णं स्वर्णस्य पात्राण्यपि नृपतिलकोऽदाद्धरिप्रीतये स ॥३८॥

कुर्वस्तीर्थव्रतानि व्रनभृदवनिपो मार्गलब्धेषु तीर्थे-
ष्वेव स्नात्वा प्रतर्प्य त्रिदशमुनिपितॄन् ब्राह्मणान् भोजयित्वा ।
सौवर्णोपस्कराढ्या निखिलगुणयुता श्रोत्रियेभ्यश्च धेनू-
र्दत्त्वा तत्र त्रिरात्रं ददद्घनकृतेऽर्थेप्सितं द्रव्यमस्यात् ॥३९॥

---

१ प्रतिपूर्णिमारात्रि ।

भूपो यो भोजराजोऽवसदमलयशा रामडाख्ये पुराग्र्ये,
श्रीराठोडान्ववायो निपुणतरमतिस्तत्र बाढेलशाख , ।
श्रुत्वा स क्ष्मापमत्रागतमभिमुखमागत्य तत्पादपद्म,
नत्वा स्थित्वा विनम्रोऽकथयदिति तदा राजराजेश्वर तम् ॥४०॥

भूमीपालाधिनाथाजित! समरजयिन्[1] वीर! सम्राट्प्रकम्पिन् ।
प्रोद्यत्प्रौढप्रतापज्वलदनलभरोद्भृष्टदुष्टारिकीट! ।
म्लेच्छप्रोग्रान्धकारक्षपणसुनिपुण[1] प्रोद्यदुष्णांशुतेज [1],
क्षत्रैकच्छत्र! मित्र[1] प्रवरसुकृतिना त्वा प्रपन्नो भजेऽहम् ॥४१॥

इत्थ त सस्तुवन्त न्यगददिति नृप पूर्वमादृत्य सूक्त्या,
शङ्खोद्धारार्थमस्तु द्रुतगमनमितो भोज ऊचे तथास्तु ।
इत्युक्त्वा सिन्धुतारोद्यमरचनकृतेऽशात्[1] स[2] कैवर्तवर्ग,
जाते यत्नेऽथ भूप स्वयमतरदतूत्तार्य नृन् प्राक् तत स्त्री ॥४२॥

शङ्खोद्धार प्रपद्य न्यगददिति नृपोऽन्ये जना दर्शन प्राक्,
कुर्वन्त्वेते च वीरास्तदनु च तदह सावरोध करिष्ये ।
सर्वैर्नृन तथैव प्रकृतमिह हरेर्दर्शन वन्दन च,
पश्चाद् युक्तोपहारैर्नृपतिरपि महत्पूजनादि प्रचक्रे ॥४३॥

तत्र स्नात्वा महाब्धौ पुनरपि नरप शङ्खतीर्थेऽवगाह्य,
पश्चात्तत्रैव कृत्वाह्निकमखिलमथो तर्पयित्वा सुरादीन् ।
कृत्वा दानानि हेम्नामथ सपदि गवा वेदविद्भ्यो द्विजेभ्य,
पश्चाद्देवालय स त्रिजगदधिपते प्राविशत् सावरोध ॥४४॥

पश्चाद् द्वारावतीशाङ्घ्रिकमलयुगल द्रागुपेत्य प्रसन्नो,
भूपो दण्डायमान सविधि समनमद् वेदशास्त्रानुसारम् ।
कृत्वा पूजा च सम्यक् कनकसुवसनैर्भूषणै रत्नदीप्तै-
र्भूत्वा तत्राथ नम्रस्तदनु दनुजजित्-स्तोत्रमित्थ चकार ॥४५॥

इति श्रीभट्टजगज्जीवनविरचितेऽजितोदये महाकाव्ये
त्रयोविंश सर्ग समाप्त ।

---

१ आज्ञापयत् । २ भोजराज ।

# चतुर्विंशः सर्गः

लसत्कुण्डलं बर्हिपिच्छावतंसं,
रणन्नूपुरं पीतकौशेयवस्त्रम् ।
चलद्वक्रकेशं सुरेशं रमेशं,
भजेऽहं मुदा द्वारकेशं प्रपन्नः ॥१॥

यदूनां वरिष्ठं विरिञ्चीशशिष्टं,[1]
मघोनः कनिष्ठं रिपूणामरिष्टम् ।
सदा पाण्डवानां सुमान्यं महेष्टं,
भजेऽहं मुदा द्वारकेशं प्रपन्नः ॥२॥

त्रिनेत्रस्य मित्रं चरित्रैर्विचित्रं,
पवित्रं सुनेत्रं रिपूणां लवित्रम्[2] ।
चिदानन्दपात्रं घनश्यामगात्रं,
भजेऽहं मुदा द्वारकेशं प्रपन्नः ॥३॥

भुजङ्गारियानं भुजङ्गे शयानं,
लसद्वंशवेत्रं कराभ्यां दधानम् ।
सुराणां प्रधानं गुणानां निधानं,
भजेऽहं मुदा द्वारकेशं प्रपन्नः ॥४॥

हरिं वेदसारं सदा निर्विकारं,
भवाम्भोधिपारं महाघौघहारम् ।
महीभारनिर्नाशनार्थावतारं,
भजेऽहं सदा द्वारकेशं प्रपन्नः ॥५॥

प्रभुं नेत्रपेयं सदैवाप्रमेयं,
परं वेदवेदान्तशास्त्रैकगेयम् ।

---

१ विरञ्चीशाभ्यां ब्रह्मशङ्कराभ्यां शिष्टः शेषः कीर्तितः वा विष्णुमित्यर्थः ।
२ दात्रं नाशकमित्यर्थः ।

महादानवानीकपालैरजेयं,[1]
भजेऽहं मुदा द्वारकेशं प्रपन्न. ॥६॥

स्फुरद्दिव्यभाल द्विषत्सघकालं,
[2]रमामानसान्त स्थकेलीमरालम् ।
स्वपादाम्बुजासक्तभक्ताऽलिपालं,
भजेऽहं सदा द्वारकेश प्रपन्न ॥७॥

धृत येन कण्ठे समाल्योपवीत,
तथा पूतनास्तन्यमात्ताऽसु[3] पीतम् ।
मनोवागतीत तमाम्नायगीत,[4]
भजेऽहं मुदा द्वारकेश प्रपन्न. ॥८॥

शृणोत्यद्भुत श्रावयेद् वा जनो य,
पर द्वारकेशाष्टक शर्मकारि ।
सदा तस्य सजीवन स्याद् यशस्य,
पठेद् य स्वय स त्वभीष्ट लभेत ॥९॥

एव स्तुत्वा नरेन्द्र प्रतिदिनमथ त दण्डवद् वन्दमान-
स्तत्रोषित्वा त्रिरात्र त्रिजगदधिपतेर्भव्यमूर्ति हृदन्त ।
अन्ते सस्थापयन् स स्वजनगणयुत साधु तन्नाम चारया-
नारुह्यानल्पतर्षा सरितमकलुषा गोमतीमाससाद ॥१०॥

वीर श्रीमेडतीय सुविदितयशसो राजसिंहस्य सूनु,
श्रीमान् कन्यागणिमिहाऽजितनृपतिभट श्रीप्रभोर्मुख्यभक्त ।
द्वारावत्या तदाऽऽप्त सपदि विधिवशात् केनचिद् व्याधिनार्त,
प्रायश्चित्त प्रकृत्य द्विजनिकरकृते प्राददाद् द्रव्यपुञ्जम् ॥११॥

---

१ 'क्षपयजय्यौ शक्यार्थे' इत्युक्तेरिद चिन्त्यम् । अन्तर्भावितण्यर्थस्य क्षयार्थस्य जे-धातोर्वा शक्यार्थे यति रूपमिद कल्पनीयम् । २ मानस चित्त मानसमरश्च ।
३ आत्ता गृहीता असव प्राणा यत्र कर्मणि तत्तथा । स प्राणमित्यर्थ ।
४ आम्नायैर्वेदैर्गीतम् ।

गोमत्यास्तीरसंस्थः स्वमनसि स मुदा स्वेष्टदेवं निधाय,
साक्षात्कार च कृत्वा तदनु विसमर[1] मोहमुत्सृज्य धीर ।
ध्यात्वा तन्मूर्तिमेका कलिकलुषहरा योगिभिर्ध्यानगम्या,
तद्ध्यानानन्दमग्न सपदि निजतनूमत्यजत् तज्जलस्थ ।।१२।।

दृष्ट्वा तं मृत्युमाप्त हृदयधृतपतिस्तद्वधू[2] कौर्म-वश्या,
गोमत्या पुण्यवार्पु श्रुतिगतविधिनाऽऽस्नाय धृत्वाम्बराणि ।
दत्त्वा विद्वद्द्विजेभ्य सुकनकघटिताभूषणानि प्रियाणि,
तत्तीरे प्लक्षकाष्ठैरुचितविधिचिता कारयामास भृत्यै ।।१३।।

नत्वा सा द्वारकेश सलिलनिधिमथानम्य तां गोमती च
सूर्यायार्घ्यं च दत्त्वा 'ग्रहममियमथाविश्य भर्तु शरीरम् ।
धृत्वोत्सङ्गे स्वकीये हरिरिति च मुदोच्चारयन्ती स्वभक्त्या,
वह्नावुद्दीप्यमाने क्षयि सपदि वपु स्व हविर्वज्जुहाव ।।१४।।

चत्वारस्तस्य पुत्रास्तदनु निजपितु पिण्डदानादि सर्वं
कृत्वा वेदोक्तरीत्या द्विजमुखसुजनानाशयन्[3] द्वादशाहे ।
भूपस्तज्ज्येष्ठपुत्र कुलतिलकमथ प्रेक्ष्य वै पद्मसिंह,
पित्र्ये सस्थाप्य पट्टे तदनु मरुधराधीश्वर मप्रतस्थे ।।१५।।

कृत्वैव द्वारकाया गमनमथ चलन् प्रत्यह सावरोध,
सर्वैरुच्चावचै स्वैर्नवनगरमगात् सत्कृतश्चास्य[4] राज्ञा ।
तस्मात् सप्रस्थितोऽग्रे त्वरितमहमदावादमासाद्य नद्या-
स्तीरप्रान्ते सुरम्येऽवसदवनिपति कानिचिद् वासराणि ।।१६।।

तत्रत्येषु स्थलेषु स्वनुभवितसचिवान् स्थापयन् यत्र-तत्र,
काश्चित् सशासयश्च स्वभटमनुदयै शासनार्हान् यथावत् ।

---

१ प्रमरणशीलम् । २ अमिप निर्व्याज ग्रह दृढमाविश्य ।
३ अभोजयत् । ४ अस्य नवनगरस्य ।

कुर्वंस्तत्रत्यभूपान्निजचरणरतांस्तत्प्रजा निर्भयाश्च,
स क्षोणीशार्चिताङ्घ्रिः प्रथितपृथुयशा ख्यातकर्मा शशास ॥१७॥

भूपाज्ज्ञातोऽथ पूर्वं निजनिजसदने वासमाप्य द्विमासौ,
प्रत्यावृत्ते स्वसैन्यै सह समुत[1]हरिर्भाटिना तेन[2] सार्धम् ।
आप्त्वा शुद्धं मुहूर्तं शकुनमपि शुभं वैरिविध्वंसकारि,
न्यस्यन् प्राक् सव्यपादं मुदिततरमना साधु चक्रे प्रयाणम् ॥१८॥

मासद्वंद्वं तु बूँदी सपदि समधिगम्याध्यवासीत् स तत्र,
सर्वान् पप्रच्छ लोकान् क्वचन खलु दलस्तम्भनं किं नु दृष्टः ?।
तैस्तु व्यक्ते निषेधे निजजननिकरैस्तैः समं प्रस्थितः सन्,
गत्वा पृच्छंस्तदेव व्यचिनुत[3] तमनुग्रामकं मालवेषु ॥१९॥

मुक्त्वाऽवन्ती[4] स वामे क्रमत उपचलन्नग्रतः पूर्वभागे,
लोकेष्वापृच्छ्यमानेष्वकथयदिति वै कोऽपि तद्वीर्यबोधी ।
रोहिल्ला[5] सन्ति दूरे बहव इत उदग्रा हि यत्पक्षमत्ता,
सोऽयं जस्वन्तसिंहात्मभव इह दलस्तम्भनो विश्रुतोऽस्ति ॥२०॥

यो नव्वाबेन सार्धं प्रकटितरुचिना साधितप्रौढसख्यः,
शूरो धीरः कदाचिद् बहुयवनजनैरुज्जयिन्यामवात्सीत् ।
नव्वाबादिष्टदुर्गस्थलविषमजयं साधयित्वा तदिष्टं,
दुष्टारिध्वंसकार्यं [6]तदुपहृतमहामानमापत् कदाचित् ॥२१॥

नव्वाबः कर्हिचिद्वै यवनपतिहृतावन्ति-रक्षाधिकारी
देशं भर्त्रा निदिष्टं कमपि स गतवान् जातुचिद्दैवयोगात् ।
उज्झित्वा तं यदा द्राग् निजनिजसदनं तत्सहस्था अपीयुः
रोहिल्लाद्यास्तदा सोऽप्यगमदवसरं प्राप्य कुत्राऽपि धूर्तः[7] ॥२२॥

---

१ सपुत्रो हरिसिंहः (चापावत)। २ खेतसीनाम्ना ।
३ अन्वैषयत् (तं दलस्तम्भनम्)। ४ उज्जयिनीम् ।
५ पठाना । ६ तेन नवाबेनोपहृतमपि च महासम्मानमापत् प्राप्त ।
७ दलस्तम्भनः ।

तत्रासीत् ख्यातकर्मा सह सुभटजनैर्भावसिंहस्तु कार्मो[1]
ज्ञात्वैतद्वै स धूर्त स्वमनसि च विमृश्याथ तत्पार्श्वमेत्य ।
आख्यायात्मीयवंशं पुनरपि च विधायास्य विज्ञप्तिमिष्टा-
मादाय स्वेन सार्धं तमपि च मुदितः क्वापि दूरं जगाम ।।२३।।

श्रुत्वेत्थं तत्प्रवृत्तिं त्वजिननृपभटास्तेऽग्र्यमार्गं व्रजन्तो
भौरासाग्राममीयुर्न्यवसदविरतं यत्र कौमिस्तु[2] शैखि[3] ।
तेनातिथ्यं च तेषां कृतमलघु ततस्तैः स पृष्टो विनीतै-
स्तद्वृत्तान्तं तदोचे स तु शृणुत भटा एव वो वच्मि वृत्तम् ।।२४।।

धूर्त प्राग् मामुपेत्यावसदिह कतिचिद् वासराणि प्रतीतो
हत्वा वै मत्पदातीन्[4] प्रतिपथिकजनादाददेऽलं करं सः ।
औद्धत्यं तस्य बुद्ध्वा पुनरपि च मया धृष्टता दुष्टता च,
यत्नान्निःसारितः सन् सपदि निजपुरान्निर्ययौ चाप पूर्वाम् ।।२५।।

अत्रार्थे मेऽनुमानं यदरिविजयिना जैतिना दुर्जनेन,
क्लृप्तावासेऽन्तिकस्थे निवसति नितरां देववप्रे स धूर्तः ।
तत्रस्थः सोऽथ[5] जैतिं न्यगददिति कदाप्यार्द्र[1] कुर्वं प्रवासं,
तच्छ्रुत्वा जैतिरूचे ननु चलितुमहं प्रोद्यतः स्यां त्वयैव ।।२६।।

किन्तु स्वां धूर्त्तता त्वं रचयसि स दलस्तम्भनो बाल्य एव,
नूनं दिल्लीनगर्यां मृत इति कलयन् प्राक् तदाख्या च कोऽपि ।
रुद्ध्वा वै मोजतं योऽवसदितरभटैस्तं निशम्याऽजितेशो
गत्वा युद्ध्वा तयाऽहन् समरभुवि तदैवाग्रहीत् मोजतं च ।।२७।।

रे धूर्त त्वं कुतोऽत्र प्रतिभवसि दलस्तम्भनाम्योऽविशङ्कं,
सत्स्वप्यन्येषु नामस्वनुरचितमिदं नाम यत् तत्फलं तु ।

---

१ 'कर्ममोत' शाखीयोऽत्र कार्मशब्देन व्यवह्रियते । २ कछावा ।
३ कछावान्तर्गत शेखावत । ४ मार्गरक्षानियुक्ताञ्जनानितरार्थ ।
५ धूर्त ।

त्व नून भोक्ष्यसे द्राक् यदि तु कथमपि प्राणितु वाञ्छसि त्व,
मिथ्यारम्भादमुष्मात् प्रविरम परथा कोऽप्यवश्य निहन्ता ।।२८।।

तच्छ्रुत्वा धूर्त ऊचे स्वमनसि विमृशन् भोस्त्वया तस्य राज्ञः,
किं वै नामापराद्ध यदसि हि चलितुं प्रोद्यत सोऽप्यथोचे । 
भो[1] मामैन्द्रि[2] कदाचित् प्रथमकृतमहामान इत्थ न्यगादी-
ज्जालोर याहि वीर त्वरितमनुनयश्चाँपिना[3] कार्यमैक्यम् ।।२९।।

जिह्मोऽह तत्र गत्वाऽनुदिनमनुनयश्चारु चाँपावत त,
कृत्वैक्य तेन सार्ध ह्यहिपुरनृपते पुत्रमाह्व च तत्र ।
भूत्वा तत्पक्षमुख्यावजितनृपतिना योद्धुमैच्छाव किन्तु,
सर्वेऽयुद्ध्यैव तेन क्षतिमधिगमिता प्लाय्य दिल्ली प्रयाता ।।३०।।

दिल्लीमाप्तेषु चास्मास्वहिपुरपसुते ध्वसितेऽह प्रनष्ट-
स्त्यक्त्वा दिल्ली भ्रमामि क्वचिदपि न पुन स्थैर्यमासादयामि ।
एतस्मात् तस्य राज्ञोऽखिलजगति परो नापकृन्मे समोऽस्ति,
तद्भ्रात्रीभूय भूयस्त्वमपि खलु सखे[1] वध्य एवासि तस्य ।।३१।।

तस्माद् दूर प्रयावस्त्वरितमिति विनिश्चित्य तौ द्वौ प्रयातौ,
चेद् धूर्त हन्तुमिच्छा भवति हि भवता तर्ह्यह सार्थग स्याम् ।
तैरुक्त भव्यमस्त्वित्यतिमुदितहृद कौमिशेखावतेन,
सगत्य द्रागितस्तेऽजितनृपतिभटा प्रस्थिता भाटिमुख्या ।।३२।।

धूर्त[4] स क्वापि दृष्टो न्विति पथिकजने कौमिणा पृच्छ्यमाने,
कश्चित् प्रोचे स धूर्तोऽक्षिपथमुपगतो मेऽस्ति कर्मास्यगढ्याम् ।
दूर गन्तुं स तस्मादपि समभिलपत्याशु यत् तत्सहस्यो
जैतिस्त प्रत्यह भो[1] द्रढयति सुहृद क्वापि न स्थेयमत्र ।।३३।।

---

१ जैनि ।   २ इन्द्रसिंहपुत्रो मोहकमसिंह ।
३ चाँपावत-उदयसिंहेन ।   ४ जैतावत दुर्जनसिंहो धूर्तश्च ।

तत् पान्थोक्तं निशम्य स्वमनसि परमोत्साहतो हर्षमाप्ता,
कर्मखिटीगढी ते सपदि किल कृतद्विप्रयाणा अवापु ।
यत्नात् तस्या प्रकूर्द्याऽपि च निशि विविशु स्पष्टमूचुश्च धूर्तं,
धूर्त[1] त्व हन्तुकामानजितनृपभटान् विद्धि न सज्ज सम्यक् ॥३४॥

धूर्त- श्रुत्वेत्यसौ तानजितनृपभटान् दर्शयत् स्व कृपाण,
क्षेप्तु चाँपावन[2] प्रत्ययतत स तु त [2]चर्मणाऽऽस्याऽसिनाऽहन् ।
जैनिर्दृष्ट्वा यदा चाविशदपरगृहे भाटिचाँपी तदा तु,
प्रोचाते किंतु शौर्य-प्रकटनसमये मन्द सलीयसे त्वम् ॥३५॥

जैतिर्दृष्ट्वा क्रुधा तावाजितनृपभटौ खड्गमाशूद्ययाम,
त तूर्ण वञ्चयित्वा किल [3]हरिरसिनाऽच्छित्त तच्छीर्षमाशु ।
दृष्ट्वा कामि प्रनष्ट तदुपकरणक[4] राड्भटावग्रहीष्टा,
निन्याते ता च रात्री विजयसुलभया निद्रया निर्विशङ्कम् ॥३६॥

अश्वानुष्ट्रास्ततस्तौ सपदि च निखिलास्त्राणि भेरीं ध्वज च,
तत्तत् सर्व गृहीत्वोपसि किल चलितावह्वादावादमाप्तौ ।
नत्वा श्रीराजराजेश्वरचरणयुग प्रोचतु स्वानुभूत,
वृत्त तुष्ट स बुद्ध्वाऽऽदरमकृत तयो साधु साध्वित्यमन्दम् ॥३७॥

एव राजाधिराजोऽजित इति विदिनोऽर्सि पुराण हि जैतिं,
भ्रात्रीभूत च धूर्त निजविकटभटैर्घातयित्वाऽतिदूरात् ।
दत्त्वा ताभ्या प्रहृष्ट परमभिलषितान् ग्रामकान् भूषणानि,
हेमाश्वाश्वाम्बराणि प्रकटमतिमहामानमुच्चैश्चकार ॥३८॥

---

१ हरिमिहम् ।
२ स सेवावन (कौमि) तु त कृपाण क्षेप्तु यतमान धूर्त चर्मणा फलकेन आस्य अस्नीकृत्य अर्थान्निष्फलीकृत्य असिना (स्वखड्गेन) अहन् ।
३ भाटी हरीसिंह ।
४ तयोर्जैतिधूर्त्तयो खड्गादिसामग्रीम् ।

कृत्वा तस्मात् प्रयाणं सुखकरमजितः प्रस्थितः सन् मरुक्ष्मां,
मध्येमार्गं हि ये केऽप्यजहत किल नो दस्यवो दस्युतां स्वाम् ।
दण्डं तेभ्यः प्रदाय प्रविदधदुचितं शासनस्य प्रबन्धं,
श्रेयोमूले मुहूर्ते भटपुरमविशद् मारवैर्मारवेशः ॥३९॥

इत्थं कृत्वात्मसात् तं निखिलमपि तदा गुर्जरक्ष्माप्रदेशं,
यात्रां च द्वारकायां स्वजनपरिजनैः सावरोधो विधाय ।
एनां पाथोधिवस्त्रां स्त्रियमिव वसुधां रञ्जयन् स्वोपभोगै-
र्योधद्रङ्गं गतोऽपि स्मृतिपथमनयन् स्वोत्सुकानन्यदेशान् ॥४०॥

इति श्रीभट्टजगज्जीवनकृते-
ऽजितोदये महाकाव्ये
चतुर्विंशः सर्गः समाप्तः ।

सद्वेश्याः कुम्भहस्ता. कनकसमरुचीर्भूषणैर्भूषिताङ्गी,
प्रीत्या संकीर्तयन्तीर्निजविमलयशश्चारु कुन्दावदातम् ।
सत्कुर्वन् भूमिपालो नगरनृपपथं वीक्षमाणः समन्ताद्,
वादित्रैरुच्चघोषैर्मुखरितदशदिक् प्राविशद् वप्रमध्यम् ।।६।।

इन्द्र-क्ष्मापस्य सौधं क्षितिपतिरजितो द्रष्टुमुत्कोऽपरेद्यु,
स्वीयैः पुम्भिस्तु कैश्चित् सममगमदित सर्वत. साधु पश्यन् ।
तावत् सौधं विदीर्णं क्वचिदपि बहुधा शीर्णमप्याशु वीक्ष्य,
प्रोचेऽन्यैरेव घस्रैः कथमिदमदलत् तत्र[1] कोऽपि द्विजोऽप्यात् ।।७।।

सुस्नाता प्रावृषेण्यैर्जलदजलभरैः सुप्रणालाग्रहस्त-
न्यस्तोच्चैरुद्दर्भ क्षितिप[1] भवदरेर्हन्त सद्धर्म्य-बन्धु[2] ।
प्राग् मुक्त्वा वाष्पमुष्णं प्रददनुपतत्-कुड्य-मृत्पिण्ड-पिण्ड,
स्वस्मै भर्त्रे निवापाञ्जलिमिह [3]ददतेऽतोऽयमन्तर्विदीर्णं ।।८।।

खड्गं प्रोद्यम्य कालं क्वचन खलु शिरः कस्यचिन्नोच्छिनत्ति,
तद्द्वारा किन्त्वनिष्टे भवति[4] स[5] समुपालम्यतेऽनेकधाऽज्ञैः ।
नेन्द्रोऽभ्रं शिष्यदस्माद्[6] यदि न भटपुरं भोक्तुकामोऽभविष्य-
ज्जालोर नाऽगमिष्यद् यदि तु मुहकमो नो तथा नाशमाप्स्यत् । ९।।

श्रुत्वैतत् पद्ययुग्मं द्विजवरकथितं राजराजेश्वरोऽसौ,
हेमाद्यैस्त सुवस्त्रैरपि सुबहुधनैः सच्चकाराभिनन्द्य ।
तत्रावात्सीत् स हृष्टोऽपि च युवतिजनैः कानिचिद् वासराणि,
पश्चात् कृत्वा प्रयाणं सह जननिकरैर्मेडतामाजगाम ।।१०।।

---

१ तद्विषये ।
२ सत् शोभनं हर्म्यं सौधमेव बन्धु । ननु धर्मानपेतो(धार्मिको)बन्धुश्चेति व्यज्यते
३ 'दद दाने' इत्यस्य रूपमिदम् । ४ भवति जायमाने सतीत्यर्थः ।
५ स कालः ।
६ इन्द्रमिहोऽस्मानागपुरात अभ्रं शिष्यन् न्युनोऽभविष्यत् ।

श्रुत्वाऽऽप्त तत्र भूप तदभिमुखमुपेत्याथ पौरा अहृष्य-
न्नाशीर्वाद द्विजा प्रागदिशत तदनु प्राणमन् वैश्यमुख्या ।
गत्वा तत्रत्यसौधे कतिपयदिवसान् सोऽवसत्तत्र चान्ते,
प्राप्त श्रीपुष्कर वै विधिवदनुदिनं स्नातवान् ब्रह्मकुण्डे ।।११।।

माघस्नानार्थमेव स्थितिमिह कृतवान् कानिचिद् वासराणि,
यच्छन् दानान्यनेकान्यपि सविधि धरापालवन्द्याङ्घ्रिपद्म ।
तस्मिञ् श्रीब्रह्मकुण्डाम्भसि किल स निजान्त पुरस्नानहेतो-
र्लोकै प्रासारयत् प्राक् सुदृढजवनिका विज्ञवीरोऽजितेन्द्र ।।१२।।

तावद्दिल्लीपुरे वै फररुकपुरत कश्चिदेत्यासुसूचत्,
स्वामिन्[1] ध्यायेति कीदृक् समभवदधुना मौगल राज्यमेतत् ।
यत्र प्रेक्ष्येत तत्रेक्षणपथमयते सैयदाना समृद्धि-
स्तस्मादेन निहन्या. कुतबलमुलक प्राक् ततो मीरुल च ।।१३।।

तद्वाक्यैर्भ्रान्तबुद्धि फररुकशियरो हन्तुमेन प्रयेते,
स्वस्मिन्नेवाधिवासे परमह[1] मुगल कोऽपि नेशो बभूव ।
एव सपाद्यमाने सति वधयतने चेष्टितैरिङ्गितैश्च,
ज्ञात्वा स्वस्वामिदम्भ व्रजति कुतबलस्तत्समीपे स्म नैव ।।१४।।

आहूतोऽपि प्रयत्नाद् यवननृपतिना नागमत् सैयदेन्द्रो
दूतद्वारा स किन्तु प्रभुवरनिकटे प्रैषयद् राज्यमुद्राम् ।
म्लेच्छेन्द्रस्ता स दृष्ट्वाऽवददिति तमृतेऽमू ददे नाम कस्मै?,
तद्द्वारैवेत्युदित्वाऽन्वनयदलघु[1] त सामदानाद्युपायै ।।१५।।

यत् किंचित् स्यादभीष्ट प्रकटयतु हि तद् येन तत्साधयेऽह-
मित्यालोच्याऽऽग्रह क्ष्माभुज इति समय प्रैषयत्तेन[2] स स्वम् ।

---

१ त सैयदेन्द्र अलघु बहु अनुनीतवान् ।
२ तेन दूतेन तद्वारेत्यर्थ । स कुतबल (समय नियमम्)।

आरभ्य त्वन्निवासं यदि नगर-बहिर्द्वारपर्यन्तमीश,
तिष्ठेयुर्मत्पुमांस प्रतिदिनमधिपेनाऽभय सन् मिलेयम् ।।१६।।

दिल्लीश स्माह तिष्ठन्त्विह मम पुरतस्त्वत्पुमांसस्तथैव,
श्रुत्वैव नैयदेन्द्रो निजमयदजनान् स्थापयामास पूर्वम् ।
पश्चादन्येत्य तूर्न यवनपतिपुरो मूर्धबद्धाञ्जलि स-
न्नूचे त वाक्यमेतच्छृणु यवनजनाधीश राजन् कृपाब्धे ।।१७।।

त्याज्योऽहं चेत् त्यजेर्मां यदि तु निरणयश्चेतमा हन्तुमेव,
खड्गेनोत्कर्त्य तर्हि स्वयमयमधुना स्व शिरस्तेऽर्पयामि ।
अन्यं क्षय्यस्तु[1] नाऽहं वदत इति वचो जाग्रता मन्युनाऽस्य,
श्रुत्वा स म्लेच्छनाथो नहि नहि[2] तदिति स्यान्मुहु. प्रीतवास्तम् ।।१८।।

अन्येद्युस्तैः स सम्राड् निजमुगलजनै सूचितोऽन्तश्चिचिन्त,
ढूंढाडेशः समेयादिह यदि कथमप्युज्जयिन्या वर स्यात् ।
ध्यात्वेत्युल्लेखनेन त्वरितमपि तमाहूय मर्मार्थमूचे,
राजस्त्व नैयदेन्द्र जहि नियतममु यत्र कुत्रापि युक्त्या ।।१९।।

तच्छ्रुत्वा प्रत्यवादीन् तमिति स[3] जयसिंहाह्वयो भूमिपाल,
स्वामिन् सम्यक् स्वबुद्धया व्यवसितमहमेवैनमुद्यु ज्य[4] हन्याम् ।
किन्तु क्ष्मापोऽजितेन्द्रो यदि कथमपि न. पक्षग. स्यादिहेत्य,
तर्ह्येन कोऽपि हन्तु सुघटितविधिना शक्नुयात् तद्बलाप्त. ।।२०।।

कौम्र्युक्त तन्निशम्य प्रमुदितमनसा बाढमित्येवमुक्त्वा,
स्नेहामत्र स्वपत्र त्वजितनृपतये प्रश्रयेणेति सोऽदात् ।
चेच्छ्रीमन् राजराजेशितरजित[5] भवानेत्य साह्य प्रकुर्या-
त्तर्ह्युग्र कण्टकोऽसौ कुशलमुलको द्राग् मयोन्मूलितः स्यात् ।।२१।।

---

१ क्षेतु शक्य । 'क्षय्यजय्यौशक्यार्थे' । २ नत् त्वदुक्तं नहि नहि, तथा मे नाशनोऽपि निर्णय इति भाव । इति स्यान् वदन् । ३ ढूंढाढेश ।
४ उद्योग कृत्वा । ५ राजराजाना ईशिता ईश्वरस्तत्सम्बुद्धौ ।

इत्येतत्पत्रलेखाद् यवननरपति किञ्च कौर्माधिराजो
यावत् तत्कार्यसिद्ध्यै मुगलभटवरैर्मन्त्रणायोजनेन ।
येते[1] तावद् रहस्य सपदि विदितवान् मैयदेन्द्रोऽजिताय,
नम्रं विज्ञप्तिपत्रं विधिवदिति विलिख्याददाद् भूमिपाय ।।२२।।

श्रीमन्[1] भूपालनाथाऽजितमरनृपते[1] मा निहन्तु दिलीश ,
प्रोद्युङ्क्ते भ्रान्तिमापादित इह मुगलै कौर्मराजस्य साह्यात् ।
त्वत्पादाब्जाश्रिताना क्वचिदपि नहि भीरित्यवेत्य त्वदङ्घ्रि ,
प्राप्तोऽह जीवितेप्सु शरणमुपगतं पाहि मामेत्य तत् त्वम् ।।२३।।

वेदज्ञैर्वेदगुप्त कथितमिति पुनर्धर्मतत्त्वं स्मृतिज्ञै ,
सर्वेष्वष्टादशस्वाकथितमिति पुराणेषु पौराणिकैश्च ।
सर्वैर्दानैस्तपोभिर्व्रतनियमयमै कोटियज्ञैर्न तत् स्याद्,
यत् स्यान्नृणामयत्नादपि निजशरणोपेतरक्षाव्रतेन ।।२४।।

यद्वत् कुम्भीशितु[2] प्राक् सरसि गतवतो नक्रवक्त्रे प्रयातो[3]
दूरादासन्नमृत्योर्हरयिति करणाक्रन्दन मन्दमन्दम् ।
श्रुत्वा त्यक्त्वा च दूर पतगपतिमपि प्राद्रवद् माधवो द्राक्,
चक्रद्वारा च [4]तस्याननमनघु विदार्याऽन्वरक्षत् स्वभक्तम् । २५।।

तद्वद् [5]माऽऽसन्नमृत्यु हरिरिव सहसाभ्येत्य पाहि प्रभो त्व,
नो चेद् मामत्र सद्योऽशरणमुपहनिष्यन्ति नून मुगल्ला ।
एतद् विज्ञप्तिपत्र कुनबललिखित मारवेन्द्रो निशम्य,
सस्थाप्य स्त्रीजन स्व झगिति भटपुरे सप्रतस्थे स दिल्लीम् ।।२६।।

अत्रेऽप्यन्यच्च पत्र कुनवलमुलकोऽदत्त सर्व लिखित्वा,
ज्ञात्वा पत्रार्थ त द्रुतमतिकुपितो मीरुल्लो दक्षिणस्याम् ।

---

१ यत्न कृतवान् । २ गजेन्द्रस्य ।
३ पतन । ४ नक्रस्य ।
५ माम् ।

संस्थाप्य स्वीयवर्ग्यान् पुरनगरगढेष्वाशु चास्थापयत् स
औरङ्गावादमध्ये निजजनसहितं भ्रातृजं स्वा स्त्रियं च ।।२७।।

इत्थ स्वीय प्रबन्धं प्रथममनुरचय्याऽचिरं मीरुल स,
दिल्लीमेव प्रतस्थे मितजनसहित. स्वल्पविश्रान्तिचिन्त ।
भूपालेन्द्रस्तु तावत्त्वलहवरदिनो ग्राममागत्य तत्राऽ-
न्वीक्ष्याखेटस्थलानि न्यवसदपभय. कानिचिद् वासराणि ।।२८।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये
पञ्चविंश सर्ग समाप्त ।

# षड्विंश सर्गः

श्रुत्वायातं नृपेन्द्रं फरुक्कशियरो हृष्टचेता बभूव,
नव्वाबास्तत्रसंस्थान् व्यसृजदभिमुखं प्राक् स तत्स्वागतार्थम् ।
ते सम्मानं प्रकर्तुं मरुधरणिपते शादखाँ-खाँनदौरा-
मुख्याः सत्सज्जसार्थं प्रतिचलितुमितः प्रारभन्त प्रयत्नात् ॥१॥

तावद् राजाधिराजो जितरिपुरजितस्तत्स्थलात् स प्रयाणं,
कृत्वा शीघ्रं स्वसैन्यैः सह विकटतरं किंचिदर्वाक् पुरीतः ।
वीक्ष्य प्रोद्यत्प्रतापो विलसितललितारामपुष्पप्रकर्ष-
सौगन्ध्यस्निग्धरेणुप्रचयसुरभितां सुस्थलीमध्युवास ॥२॥

सम्प्राप्ता खाँनदौराप्रभृतय इह च म्लेच्छभर्त्रा नियुक्ता
इत्काद्याद्या महान्तोऽप्यधिकृतपुरुषास्तस्य सत्कारहेतोः ।
नत्वा ते स्वस्वयोग्यस्थलमजितनृपस्याज्ञया तत्र तस्थु-
स्तान् सोऽप्यश्वैभवस्त्रादिभिरधिककृपां दर्शयन् सच्चकार ॥३॥

विज्ञप्तस्तैर्नृपालो निखिलनिजजनानालघोरा-महिष्ठ,[1]
प्राक् सम्भूष्याऽऽशतादादशशतक[2]मुपात्ताम्बराभूषणैः सः ।
कांश्चिद् मुक्ताकलापैः सुकनकवलयैश्चापरान्मण्डयित्वा,
सोत्कर्षं प्राप दिल्लीं फरुकशियरं द्रष्टुकामस्तदानीम् । ॥४॥

पूर्वं पौर्वा[3] निजाश्मस्थलनिहितमहावह्नियन्त्राः सगर्वा-
स्तत्पृष्ठे सद्भटाग्र्यास्तदनु च सुभटा निर्ययुः पृष्ठतोऽन्ये ।
तत्पृष्ठे पद्गमुख्याः पुनरपि सुभटास्तेषु मत्तेभसंस्थ,
कश्चिद् वीरोऽतिधीरो रिपुनिचयजयी मत्सरी सञ्चचार ॥५॥

---

१ आलघोरामहिष्ठ माधारणनोऽसाधारणजनमपर्यन्तमित्यर्थः । २ आश-तान् रुप्यकशतमारभ्येत्यर्थो लक्ष्यते, ततश्च आदशशतक महस्ररूप्य-कपर्यन्त (यथा म्यानया) अर्थात् शतरूप्यकात् महस्ररूप्यकपर्यन्तमूल्यैरम्ब-रैराभूषणैश्च सभूष्य । ३ पूर्वदेशीया ।

एतादृश्यश्च सेना· सुविविधरचना मण्डिता सप्त सप्त,
सप्तेभा केतुयुक्ता अथ सुभटवरा सिन्धुरस्थास्तथाष्टौ ।
अश्वारोहास्तथान्ये तदनु सुबहुश· सद्भटा· काम्यरूपा
गत्युत्साहोरुतेजोभरविजित-महामत्सराराातिगर्वा ॥६॥

पौर्वास्तेषा च पृष्ठेऽरुणवसनभृत स्कन्धसस्थाग्नियन्त्रा,
क्षत्रा अश्वाधिरूढास्तदनु भुजशिर स्थाग्नियन्त्रा प्रचेलु ।
माद्यद्गर्जन्महेभोपरि-परिविलसद्भव्यशोभा ध्वजाश्च,
मत्स्याकारध्वजाङ्कास्तदनु सुबहुना वाजिन सानकाश्च[1] ॥७॥

तत्पृष्ठे चारुचेटा रजतलकुटिन पङ्क्तिबद्धा अगच्छ-
स्तन्मध्ये वारणेन्द्रोपरि कनकमयीं धारयन् वेषभूषाम् ।
भूप प्रोद्यत्प्रतापोऽभित उचितदृशा प्रेक्षमाणोऽजितोऽभात्,
तत्कल्पा लब्धमाना· प्रययुरुभयतस्तद्रुचि तर्कयन्त ॥८॥

यावद् भूमीश्वरोऽगाद् नृपतिपथमथाजग्मुरुत्कण्ठिपोरा
द्रष्टु सोपायनास्त विनयविधियुत वन्दनं च प्रचक्रु ।
प्रोचुर्बद्धाञ्जलीति क्षितिधव[2] जजियाख्यात् करात् पाहि हिन्दून्,
सूर्यो यत् प्रोद्गतस्त्व यवनकुलघनध्वान्तविध्वसकारी ॥९॥

विज्ञप्ति ता तु तेषा नरपतिरजित सम्यगाकर्ण्य तत्र,
प्रादात् तेभ्यस्तदानीमभयममलदृक्सन्सुधावर्षणेन ।
लोका उच्चैरवोचस्तदविकलजय सर्वथा सुप्रसन्ना,,
सद्भावा एव लोकेऽभिदधति महता भाविनीं कार्यसिद्धिम् ॥१०॥

नानादेशप्रभूता अपि सुयुवतयो द्रष्टुकामा नृपालं,
कृत्य सत्यज्य दूर निजनिजसदनावश्यकारब्धपूर्वम् ।
या आगच्छस्तदानीं पथि बहुलजवाऽऽलोलताटङ्ककर्णा-[3]
स्तासा तत्तत्स्वदेशप्रकृतिजनिततल्लक्षणानि ब्रवीमि ॥११॥

---

१ सपटहा । २ राजन् । ३ बहुलेन जवेन वेगेन आलोलताटङ्कौ उच्चञ्चलत्कुण्डलौ कर्णौ यासा ता ।

नानावेषा पवित्रा नियतमतितरा कर्मदक्षा सुशीला
दन्ताघाताद् विरक्ता न खलु कृतनखाघातमात्रेण तुष्टा ।
नूनं शश्वद् मनोभूसमरविधिषु या पेशला मध्यदेश-
प्रोद्भूतास्ता. पुरन्ध्र्योऽजितमवनिपतिं द्रष्टुमेयु समन्तात् ॥१२॥

शश्वद् भोगानुरक्ताश्चिरतरसुरतासक्तचित्ता नितान्त,
सप्रेमालिङ्गनेच्छा अपि रदननखाघाततोष दधत्य ।
श्रुत्वा राजेन्द्रमाप्तं पथि किल महिला मालवक्षाणिजाता
मन्दामन्द[1] व्रजन्त्यः प्रमुदितवदना स्वालयेभ्य समेयु ॥१३॥

दन्ताघातान्नखाग्रक्षतित उरुनितम्बाभिघाताद्विरक्ता
आबद्धश्रोणिसूत्रा अपि दृढपरिरम्भोत्सुका सर्वदैव ।
प्रेम्णा वक्त्राभिचुम्बोल्लसिततरहृदो नूनमाभीरदेश-
प्रोद्भूता द्रष्टुमेयुर्नरपतिमरणौ राजराजेश्वर तम् ॥१४॥

अत्यन्तालिङ्गनाद् या अपि च नखरदाघाततो द्राग् द्रवन्ति,
स्वर्णाङ्ग्य कोमलाङ्ग्यः सरसिजनयना दृग्विलास दधत्य ।
नर्तक्योऽनङ्गयुद्धे प्रमुदितमनसो याश्च नृत्यन्ति तुष्टा-
स्ता श्रुत्वा राजमार्गे नृपतिमुपगत द्रष्टुमागु सहर्षा ॥१५॥

दुष्टाचारा रतार्ता सुमृदुलतनवो भोगनर्मप्रवीणा
अत्यन्त सुन्दराङ्ग्य प्रतिदिनमपि या निस्त्रपा लोलचित्ता ।
ता निशङ्का युवत्यस्त्वरितमथ तदैवान्ध्रकर्णाटजाता,
श्रुत्वायात नृपाल पथि परममुदो द्रष्टुमायु समन्तात् ॥१६॥

नित्य कन्दर्पकण्डूव्यथितनिजहृदोऽप्यात्मनिर्लज्जता या,
कान्तोपान्ते वसन्तेऽप्यधिकरतिविधौ जातु नो दर्शयन्ति ।

---

१ नितम्बादिभारेण मन्द, दर्शनोत्कण्ठया चाऽमन्दमित्यर्थ ।

कौलीन्यव्यग्रवेशा शशधरवदना कौशलक्षोणिजाता',
श्रुत्वा भूप समेत गजवरगतयो द्रष्टुमभ्याययुस्ता[1] ॥१७॥

ईषद्धास्योदितश्रीयुतमुखकमला. प्रेमबद्धानुरागा,
व्यङ्ग्यार्था वाग्विलासेष्वपि तदनु महाराष्ट्रजाता. सुकेश्य ।
यूनां चित्त सुवेषप्रतिजनितविनोदोत्थभावैर्हरन्त्य.,
श्रुत्वा श्रीमारवेन्द्र नृपतिपथगतं द्रष्टुमीयु सवेगम् ॥१८॥

चञ्चच्चातुर्यचेष्टा मनसिजसमरे दक्षता दर्शयन्त्यो,
नित्य लोलायताक्ष्य कुसुममृदुतराश्रुम्बनाबद्धभावा. ।
सद्भाविन्यो युवत्योऽजितमनुजपति राजमार्गोपयात,
श्रुत्वा त वङ्गगौडक्षितिवलयगता कौतुकाद् द्रष्टुमापु ॥१९॥

नित्यं कामार्दिता या नखरदनसमाघातसतुष्टचित्ता,
प्रारब्धे वैपरीत्यात् कुसुमशररणे वर्धमानप्रहर्षा ।
उत्कास्ता उत्कलस्त्रीविततय उदितप्रौढतारुण्यगर्वा,
प्राप्त श्रुत्वा नरेन्द्र द्रुततरगतयो द्रष्टुकामा समीयु ॥२०॥

प्रेमालापैर्हरन्त्यो रसिकयुवजनस्वान्तमत्यन्तकान्ता[2]
उल्लासान् हावभावानथ ललितगतिं सस्मित दर्शयन्त्य ।
कामिन्य कोमलाङ्ग्यो विकसितनयनाः कामरूपप्रभूता,
सोत्कण्ठ कम्बुकण्ठ्य क्षितिपतिमजित द्रष्टुकामा समीयु ॥२१॥

सम्यग् नैज तु दोष प्रतिदिनमखिल गोपयन्त्य पर या
अन्येषा स्तोकमप्याकलयितुमनिश दूषणं सावधाना ।
पुष्करूराऽसिताङ्ग्यस्तदनु च वनवासोद्भवा वामनेत्रा,
श्रुत्वा त राजमार्गेऽजितनृपतिवरं द्रष्टुकामा समागु ॥२२॥

---

१ मामुत्यवाचिनोऽभे प्रयोगेणैतादृशीना स्त्रीणा मामुन्य शुभशकुनसूचकम् ।
२ अतिसुन्दर्य ।

नानाभोगेषु दक्षा. सरसिजनयना· स्वच्छतारम्यवेषा
गार्हस्थ्ये पूर्णदक्षा प्रमुदितमनसो दुष्टुकार्याद्विरक्ताः ।
गुर्जर्योऽजर्यमङ्गा· सुकनकरुचयो वर्णिता सत्कवीन्द्रै,
श्रद्धावत्यो युवत्यो नरपतिमजित द्रष्टुकामा उपेयु ॥२३॥

अत्यन्त चण्डवेगा सततमतितरां कष्टसाध्या[1] पर या
नून दुष्टस्वभावा विरचितनिशितापाङ्गदृग्भ्रू विलासा ।
बाल्हीकावन्तिसिन्धु-क्षितिवलयभवा नार्य उद्दामवेशा,
श्रुत्वा त पत्तनान्तर्गतमवनिपति प्राप्नुवन् द्रष्टुकामा. ॥२४॥

वेषोद्भूषाप्रवीणा निखिलरतकलापेशला कोमलाङ्ग्य,
कन्दर्पोद्दर्पसदोपनविधिनिपुणाः क्षत्रियाण्य· सरागा ।
उत्फुल्लाम्भोरुहाक्ष्यो मदगजगमना गौरगात्र्य सगर्व,
पञ्चापक्षोणिजाता अजितमुपगत भूपति द्रष्टुमापु· ॥२५॥

सभोगानेकशिक्षाऽधिककुशलतरा स्वाशयासक्तचित्ता
लज्जाढ्याश्चण्डवेगा मदनशरनिविद्धान्तरङ्गा· सदैव ।
यूना चेतोहराश्चाम्बुजमृदुतनव स्वर्णगौराङ्गरङ्गा-
स्तैलङ्गक्षोणिजाता अजितनरपति द्रष्टुमार्या समीयु· ॥२६॥

मृद्वङ्ग्य साहसाढ्या लघुरतरसिका क्षीणमध्या नितान्त,
साद्यन्त तुल्यरूपा किल विगतभया लोलचित्ता कृशाङ्ग्य ।
नार्योऽनार्यत्वहीना स्मरसममजित द्राविडक्षोणिजाता
आयाता द्रष्टुकामा नृपतिपथगत राजराजेश्वर तम् ॥२७॥

अत्यन्त गौरवर्णा विकसितनयना सुन्दरास्या सुदक्षा,
स्वच्छा सद्वेषभूषा शशधरवदना पद्मिनीकोमलाङ्गच ।

---

१ कष्टेन साधयितु वशीकर्तु शक्या ।

नून काश्मीरजाता यवनयुवतयो भूमिपाल तमाप्त
    श्रुत्वा द्रष्टु समीयु प्रमुदितमनसो राजमार्गे समन्तात् ॥२८॥

गौर्यो रक्ताङ्गरागा सुविकचविततालोलनेत्रान्तपाता
    नित्य सचुम्बनाऽलिङ्गननखरदनाघातभावप्रहीणा ।
रक्ताङ्गुल्यो[1] मुगल्यो निजनिजभवनप्रोच्चजालान्तरस्था,
    श्रुत्वा त द्रष्टुमागुर्द्रुततरगतयो जातहर्षा यवन्य ॥२९॥

तास्ता सर्वा युवत्योऽजितमवनिपतिं वीक्षमाणा नितान्तं,
    प्रीता स्वस्वाक्षिमार्गैर्हृदि विधृतमिवालिङ्ग्य हृष्टा अभूवन् ।
अन्योन्य प्रोचुरित्थ यदि सुकृतमहो[1] प्राकृत प्राभविष्य-
    दस्माक तर्हि दिल्लीपुरपतिरयमेवाभविष्यन्नु सख्य. ॥३०॥

प्रोचु काश्चित्तु येन त्रिदिवसुमनसा दु खदानैकहेतु-
    रुद्दण्डोऽतिप्रचण्डप्रबलवपुरवाध्वसि[2] वृत्रासुर स ।
युद्धेष्वन्येऽपि दैत्या जगति किल हता येन दृप्तान्तरङ्गा,
    सोऽय जिष्णुर्हि साक्षादजितनरपतिर्दृश्यते पूर्वपुण्यै ॥३१॥

भूपालेन्द्रोऽनुगृह्णात्ययमधिकदयो य कृपावीक्षणेन,
    तं द्राग् दारिद्र्यदोषस्त्यजति हि सहसैतद्भयेनेव भीत ।
त सर्वत्र प्रतिष्ठा गतमनुभजते श्री स्थिरीभूय गेहे,
    नित्य दाक्षिण्य-धैर्याद्यखिलगुणयुत वन्द्यमान महद्भि ॥३२॥

पान्थ पप्रच्छ कोको ननु कथय सखे[1] क्वापि देशोऽस्ति यत्र,
    नो रात्रिर्मद्वियोगाऽऽधिनिचयपिशुना[3] पान्थ ऊचेऽथ कोकम् ।
क्षैण्य नीते सुमेरावजितनृपतिना स्वर्णदानैर्भवित्री,
    सूर्येऽनन्तर्हितेऽस्मिन् कतिपयदिवसैर्वासराऽद्वैतसृष्टि ॥३३॥

---

१ 'मेहदी'-रागेण रक्ताङ्गुल्य । समासान्तानामनित्यत्वात् कबभाव । २ हत ।
३ मम यो वियोगात्मक आधिनिचयो मनोदु खपरम्परा त पिशुनयति सूचयति तथोक्ता ।

प्राहुस्त वीक्ष्य काश्चित् प्रतिवचनपरा श्रूयता नोऽपि वाक्यं,
सख्य ! किं वर्णयाम स्फुटमजितमहाराजराजेश्वरेऽस्मिन् ।
दृष्टे त्रीण्येव सद्यो नियतमनुगलन्त्यत्र तत्कालमेव,
नीव्यो मत्तेक्षणानामथ कविगुणिना कष्टमस्त्रं रिपूणाम् ॥३४॥

कस्याश्चिद् गौरभालस्थतिलक-गजता-चित्र-बिम्बेन[१] युक्तं,
सुस्थेयोवामहस्त-स्थितवलय[२]-मणिस्यन्दिनि स्वेद-बिन्दौ ।
दर्शनाऽऽपीयमाने सति रसिककवे पश्यत कस्यचिन्नै,
वक्त्रान्निर्यातमित्थं लघुमशकमुखे हस्तियूथ प्रविष्टम् ॥३५॥

तास्वित्थ भाषमाणास्वपि च मरुधराधीश्वरे राजमार्गे,
तद्वाणाकर्णनोत्के[३] व्रजति किल पुरो म्लेच्छराजोपदिष्टौ ।
अभ्येत्य स्वीयसैन्यै कुतुबलमुलको मीरुलश्रोमराव.
[४]प्रागेवारान्नृयानादवनितलमितौ त नमश्चक्रतुस्तौ ॥३६॥

भूपस्तावानमन्तौ स्वयमपि सुदृढ सस्वजे स्वीयदोर्भ्या-
मारूढानामयश्च प्रमुदितहृदयोऽनामय पृष्टवास्तौ ।
सार्धं ताभ्या च गच्छस्तदनु पृथुयशा सत्कृपावीक्षणेन,
सत्कुर्वन्नागरार्यान्नृपपथमचरत् सस्तुतो मागधाद्यै ॥३७॥

एव गच्छन् नृपालो यवनकुनपतेर्गोपुरात् प्राक् स्वसैन्यान्,
सर्वान् सस्थाप्य तत्र स्वयमथ कतिभिश्चिद् भटैर्मन्त्रिभिश्च ।
विप्रार्यै पार्श्ववर्गैर्वा[५] पुनरपि निपुणै प्रीतिपात्रैस्तथाऽन्यै-
स्तैस्तैर्नैर्ज्वावकर्त्रा कुतवलमुनकाद्यैश्च वप्र विवेश ॥३८॥

गत्वा प्राग्गोपुरान्त पुनरपि च ततो द्वारषट्क तदन्त्यं,
मोदादुल्लङ्घमान स्थितमुगलभटैर्हेमगुर्जाग्रहस्तै ।

---

१ तिलकरूपा या गजता गजमूर्तस्तच्चित्रस्य बिम्ब प्रतिबिम्ब तेनानुयातं युक्तं । २ सुस्थेयान् सुस्थिरतरो यो वामहस्तस्तत्र स्थिता या वलयमणिस्तत्र स्यन्दिनि अर्थात् स्रुते । ३ तासा वाचं आकर्णन तत्रोत्के उत्कण्ठिते । ४ आराद् दूरात् । ५ समुच्चयार्थोऽयं 'वा' न तु विकल्पार्थ ।

प्राग् नत्वाऽग्रे चरद्भिः स्वनियमनिरतैः सेव्यमानो महौजा
अग्र्य मार्गं जगाहे नरपतिरभितः स्वर्गसौधानि पश्यन् ॥३९॥

यत्राभ्राजन्त गुल्मा[1] मुविविधकुसुमानेकवल्लीमनोज्ञा-
स्तत्तत्पुष्पोत्थगन्धासवमधुररसस्वादमाद्यद्द्विरेफा. ।
जम्बूराजादन[2]-श्रीफल-वरकदलीनारिकेली[3]-महैला-[4]
मृद्वीका[5]-दाडिमादिद्रुममधुरफलाकृष्टसत्पक्षिघुष्टा ॥४०॥

प्रोत्फुल्लेन्दीवराब्जोत्पलकुमुदघनामोदसल्लुब्धगुञ्जद्-
भ्राम्यद्भृङ्गावलीनामपि च फलितरुस्तोमभाजा खगानाम् ।
शब्दैरानाद्यमाना सपदि दश दिशो हन्त यत्राध्वगाना,
चित्त नेत्र च सार्धं श्रमविकलमपि प्रापयन्ति स्म शान्तिम् ॥४१॥

कूजन्तश्चाम्रसस्था पिकमिथुनगणा माधुरीं वर्षयन्तो
नृत्यन्तो बर्हिणश्च श्रवणमधुरया केकया तर्पयन्त ।
नानावर्णाश्च कीरा कनकमयमहापञ्जरस्थाश्च बाह्या,
सत्कुर्वन्ति स्म भूप मधुररवमयस्वागतैः सारिकाश्च ॥४२॥

शृण्वस्तेषा निनादान्नरपतिरगजितोऽपश्यदग्रे स सौध,
द्वीव्यत्तिग्मांशुरोचि स्पृगखिलविलसच्चारुचामीकराक्तम् ।
उच्चै स्तम्भैरनेकैः कनकमणिमयैश्चारुदत्तावलम्बं,
लम्बैर्लम्बैर्वितानैरपचितसुषम[6] मौक्तिकावल्युपेतं ॥४३॥

श्रुत्वाऽऽयान्त तमारात् तदभिमुखमथाभ्येत्य सभ्या. सकौर्मा
नत्वावास्तत्पदाब्ज परमविनयतो नेमुरस्तोकहर्षा ।
तांस्तान् सत्कृत्य भूप सदसि पुर उपैत् तं समालोक्य दूरात्,
सद्य प्रोत्थाय दोर्भ्या यवननरपति सस्वजे प्रीतिपूर्वम् ॥४४॥

१ प्रधानपुष्पाभिहितानि ग्रन्थस्य नानि । २ राजादन 'खिरनी' ति प्रसिद्ध ।
३ श्रीफलो बिल्व । ४ महती एला ।
५ द्राक्षा । ६ प्रवर्धितपरमशोभम् ।

पृष्ट्वा नीरोगतां प्राक् स्वनिकटमुपवेश्याथ समानयन् स,
सत्पुष्पामोदवारिभि ' फररुकशियरोऽन्युक्ष तं पाणिना च ।
सौगन्ध्यद्रव्यमात्माभिरचितममलं तस्य वेशे लिलेप,
किं किं वा कुर्वते नो प्रियमुजनगुरुश्चारबद्धानुरागा ॥४५॥

अन्योन्यालापतोऽन्ते गजतुरगवरान् रत्नहेमाम्बराणि,
सम्राज प्राप्य चाज्ञा निजशिविरमथागन्तुकामोऽनुभाव्य ।
स्वीयं सैन्यं स पूर्वाध्युषितमुपगत स्थानमाशु क्षितीश-
स्तत्रोषित्वा च रात्रावुषसि तु यमुनापार्श्वमैच्छन्निवासम् ॥४६॥

सम्राजोऽनुज्ञया स द्रुतमुपगतवान् यामुन तीरवास,
लोका आगत्य तत्र क्षितिपनिशिविर कल्पयामासुरिष्टम् ।
वीरा अन्येऽपि च स्व स्वमकृषत तदैवाधिवास परेद्यु,
प्रागवन् सेना सुसज्ज्याजिननृपतिरगाद् राजमार्गेण सम्यक् ॥४७॥

मार्गे गच्छन् स नृप कुतबलमुल्कस्यालयद्वारमापद्,
यावत्, तावत् स शीघ्र स्वयमभिगतवास्त प्रणम्यानुगच्छन् ।
भक्त्या नीत्वा स्वसौध समुचितविधिनाऽध्यासयामास पीठ,
धीमन्तो न स्खलन्ति ह्यवसर उदिते साधितु स्वार्थमुक्ता ॥४८॥

नत्वाथ क्षोणिपाल विधिवदभिनिवेश्याभिपूज्याथ हर्षा-
दश्वालकारवस्त्रे स्वकरयुगलक शीर्ष्णि धृत्वा तयाऽन्गौत् ।
भो राजन् ! त्वाङ्घ्रिपद्माश्रितमतिविकल दु खभारं स्वकीय
रक्ष त्व मा मुगलै फररुकशियरेणाधुना घात्यमानम् ॥४९॥

श्रुत्वेत्थ प्राह नृप कुतबलमुल्क धैर्यमाधेहि हन्तु
नाऽल त्वा मत्परोक्षेऽप्ययं मयि तु समत्यत्र किं स प्रकुर्यात् ?

---

१ सेवन्त्या (गुलावा) दिसुगन्धिजलै. ।

सम्राजा कारयिष्ये भवत इह पर संधिमेवाशु नो चेद्,
नून त्वत्पक्षग. स्या भवति तव यथा शं[1] तथाऽहं करिष्ये ।।५०।।

कृत्वेत्यैवयं हि तेन प्रविशदहृदय' क्षोणिपालोऽजितेन्द्र.,
सम्यक् चाश्वास्य भीत कुतबलमुलक मन्त्रयित्वा च पश्चात् ।
उत्थाय स्वीयपक्षं द्विरदवरमथारुह्य सगीतकीर्ति-
र्वर्षत् द्रव्य समन्तान्निजशिबिरमथागम्य सौख्यादुवास ।।५१।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये
षड्विंशतितम सर्ग समाप्त ।

---

१ कल्याणम् ।

# सप्तविंशः सर्गः

श्रुत्वाऽथ स्वीयचारात् कुतुबलमुल्कागारमाप्तं नृपालं,
म्लेच्छेन्द्रं कश्चिदेत्य न्यगददिति प्रभो ! सैन्यदो मारवेन्द्रम् ।
गच्छन्तं राजमार्गेऽपि च निजभवनामन्नमाप्त तमेत्य,
गेहं नीत्वा तयार्चस्तदनु स[1] किल [2]तेनैवयनाशु व्यधत्त ।।१।।

श्रुत्वैवयं तद्द्वयोरित्यय यवनपतिश्चिन्तयामास चित्ते,
दुर्धर्षोऽयं किलैकः प्रथमत उभयोरेकता त्वत्यसह्या ।
इत्थं शोचन्तमीशं न्यगददिति स[3] एवेश ! किं मारवाणा-
मैक्यं सनह्य यान्तूर्यसि[4] सह यवनैरेव दूरं प्रयाता ।।२।।

याते भूपेऽजितेन्द्रे यवनप ! सयद घातयिष्याम एव,
त्वं मा शोचेति सर्वं तदुदितमिदमाकर्ण्य सोऽन्तः प्रहृष्यन् ।
प्रातः सनह्य वीरैः सह यवनपतिर्म्लेच्छसघैः सदर्शं ,[5]
स्वस्कन्धोढाग्नियन्त्रैर्मरुनृपशिविरासन्नमेत्याध्यतिष्ठत् ।।३।।

चारादायातमेनं फररुकशियर सनिशम्यावनीशो
धीरः सनह्य वीरैं रणविधिनिपुणैः सज्जितैस्तत्र तस्थौ ।
श्रुत्वा चारात् तथा तं रणरचनरसासक्तमुद्यत्प्रताप,
दुर्धर्षं भूपतीन्द्रं प्रति निजसदनं म्लेच्छनाथः प्रतस्थे ।।४।।

सोत्साहैः माहसैः प्राक् क्षणमलमुदितैः प्रेर्यमाणः सबोध,
सनह्यन् किन्तु चेतः स्फुरितमरुनृपोरुप्रतापानुभूत्या ।
म्लेच्छेन्द्रो वार्यमाणः शिथिलितहृदयः स्वीयवप्रान्तराले,
प्रायः संदेहदोलास्थितमतिरनयत् कानिचिद् वासराणि ।।५।।

---

१ म कुतुबलमुल्क । २ तेन नृपालेन (अजितेन) । ३ पूर्वमुक्तः एव । ४ उपमि प्रातः भवन्त प्रयान्तु इत्यर्थ । ५ वर्मभृद्भि ।

जातु म्लेच्छाधिराजो रहसि च सहसाहूय पप्रच्छ कंचित्,
स स्वान्ते निश्चितं स्व न्यगददिति वचो दम्भ-संधि विधत्स्व ।
युक्त्यैवं साधयित्वा कुनुवलमुलकं घातयिष्याम एव,
श्रुत्वैनत् सूचकोक्तं तदनुवरनवाबानपीदं न्यपृच्छत् ।।६।।

नव्वावैश्रीकिलत्खाँ प्रभृतिभिरथ संगम्य कैश्चिद् विमृश्यै-
कान्ते वै दम्भसंधिं स्वयमपि च विनिश्चित्य स म्लेच्छराजः ।
¹तैर्गत्वा ²सैयदस्यालयमभिरुचितं तेन संधिं विधाय,
प्रोचे तं सैयदं च त्वमजितमुपयाह्येष आयामि तत्र ।।७।।

तद्वाक्यात् सैयदाग्र्य स्वयमथ रभसादेत्य राजेन्द्रपार्श्वं,
प्रोचे भो ! मधिहेतोस्तव शिविरमुपैत्येष सम्राडिदानीम् ।
तत्स्वीकारं विदित्वा पुनरपि यवनेशं स विज्ञापयंस्त,
तस्यैव क्षोणिभर्तुः पुनरपि शिविरं सैयदेन्द्रो निनाय ।।८।।

दृष्ट्वा म्लेच्छेन्द्रमारादजितनरपतिः सद्य उत्थाय सभ्यै-
र्गत्वाग्रे तं ह्यनैषीन्निजशिविरवरं स्वासयच्चासने च ।
रीत्या संपूज्य रत्नैः कनकसुवसनैः सच्चकार प्रयत्नात्,
कृत्वैक्यं बाह्यवृत्त्याऽजितनरपतिना प्रत्यगात् सोऽपि सौधम् ।।९।।

पश्चात् तस्माद् द्वितीयेऽहनि नृपमयदौ जग्मतुर्म्लेच्छभर्तुः,
पार्श्वं प्रीत्या यथावत् स च विधिवदथापूज्य रत्नादिभिश्च ।
³तत्तत्सकत्थगर्भैरनुनयविनयैस्तोषयामास तौ च,
स्थित्वा कालं तु कंचिद् यवननृपतिनाभाष्य दुर्गान्निवृत्तौ ।।१०।।

एवं श्रीमारवक्ष्मापति-मयदमणी प्रत्यहं तौ मिलित्वा,
स्वीयस्वीयैस्तु सैन्यैः फररकसविधेऽगच्छतां सप्रयत्नम् ।

---

१ नव्वावैं (मह) २ कुनुवलमुलकस्य । ३ नृप-सैयद-कर्मप्रशमन-पूर्वकं ।

तत्र स्थित्वा यथेष्टं समुचितनिपुणाभापणौ· सत्कृतौ च,
प्रीतेन म्लेच्छभर्त्रा विधिवदनुमतौ प्रत्युपागच्छत स्म ॥११॥

एकस्मिन्नह्नि सम्राट् कतिचन मुगलान् सज्जितान् प्राग् विधाय,
तौ द्वौ विध्वंसयिष्यन् कपटरचनयाऽस्थापयत्तत्र गुप्तम् ।
विश्वस्तौ पूर्ववत्तौ नियमितसमये तस्य सौध प्रयातौ,
कालस्याश च कश्चिद् विधिवदनयतां सत्कृतौ तेन दम्भात् ॥१२॥

नानारूप तु सभापणमवदधतौ[1] तौ तदा म्लेच्छभर्त्तु-
राकारैरिङ्गितैश्चानवहितहृदयत्वेन[2] कूट विदित्वा ।
केनाप्यन्तर्हितेन स्वहित-परमता-न्वेषिणा ज्ञापितौ च,
द्रागुत्थाय प्रयत्नादजित-कुनुवलौ सन्नतुर्ध्यातदेवौ[3] ॥१३॥

क्रुद्धौ सिंहाविवोग्रौ त्वरितमपसृतौ तौ विदित्वा तदानीं,
नष्टाखेटो निराशो विकटभट इवाऽद्भूयत म्लेच्छराजो
दुर्धर्षौ म्लेच्छवर्यैर्निपुणतरमती चिन्तयस्तौ च चित्ते,
तान् म्लेच्छास्तन्नियुक्तान्[4] धिगकुरुत भृश शप्तवाश्च प्रकामम् ॥१४॥

नि सृत्याऽन्तर्गृहात् तौ तदनु बहिरुपागम्य कैश्चित् सुवीरै,
सार्धं निर्गत्य वप्राद् बहिरधिकभटै स्वस्वसैन्यै समेतौ ।
आरुह्य स्वस्वनागं नरपतिमयदौ राजमार्गे चलन्तौ,
दुर्धर्षौ दर्शनार्हौ निजनिजवसतिं प्रापतु पुण्यशीलौ ॥१५॥

अन्ते कैश्चिद्दिनैं श्रीहमनअलियुतो मीरुलः सूमराव[5]
सार्धं वै सैयदाग्र्यै· पुनरपि च सम क्षत्रियैर्दाक्षिणात्यै ।
दिल्लीमभ्येत्य नून नगरमभिनिविश्योद्धतो भूरि गर्जन्,
भ्रात्रा सगम्य तेनावसदुपयमुनाप्रान्तदेश[6] ससैन्य· ॥१६॥

---

१ तदालापे सावधानीभवन्तौ तावजित-सैयदौ । २ तासन्निरव्यवचित्त-त्वेन च (कूट कपट विदित्वोपलक्ष्येन्यथ )। ३ ध्यात (रक्षार्थं) स्मृतो देव ईश्वरो याभ्या तौ "देव परात्मनि सुरे नृपेऽब्दे देवमिन्द्रिये ।" इति मङ्ख । ४ तत्र (कर्मणि) नियुक्तान् प्रवर्तितान् । ५ सुप्रशस्त उमराव । ६ उपेति समीपेऽव्ययीभाव ।

प्रातर्भ्रात्राऽथ सार्धं कुतुबलमुलको मीरुलेनाऽनुजेन,
संगम्य स्वस्थचित्तं नरपतिमजितं मन्त्रयन्नित्थमूचे ।
श्रीमन्! राजेश्वरास्मान् फररुकशियरा हन्तुमिच्छुर्यथैव
च्छिद्रं पश्यत्यहो! यत् प्रियसख! किमु तत् क्षम्यमस्माभिरत्र॥१७॥

प्राच्यं हाजीपुरं प्राक् तदनु च पटनापत्तनं चाधितिष्ठन्
म्लेच्छाधोशत्वमाप्ते निजजनकरिपौ मौजुदीनेऽयमार्त्तः ।
सिन्धोः पारं प्रयातुं महद्दुड्डुपमधिष्ठाय यत्नं प्रकुर्वन्,
नैराश्यं प्राप्त आशापदमुपगमितश्चानुनीतो मयैवम् ॥१८॥

श्रीमन्! किं क्लीबतां त्वं भजसि नहि भयात् कोऽपि नष्टः पुरापि,
धैर्यं त्वं धेहि धीमन्! सुभटकुलभव! त्रासमुन्मुञ्च दूरम् ।
नूनं हीनो विषेणाप्यहिरिह सुफणाटोपकृद् भीतिदः स्याद्,
भूपोऽप्याडम्बरी चेद् भवति स रिपुभिर्नो पराभूयतेऽत्र ॥१९॥

श्रुत्वाऽसौ वाक्यमित्थं भयवशहृदयः कम्पितो मामुवाच,
सत्यं वीर! त्वयोक्तं यदिह परमहं तत् कुतो वेद्मि सिद्धम् ।
सोत्साहैरेव[1] वाक्यैर्नहि मम सहसा शान्तिमायाति चेतो,
यस्मादत्यल्पमेतद् बलमपि च धनं किं रजोऽनेन[2] ? ॥२०॥

तस्मै प्रोक्तं मयेति क्वचिदपि गणना या न याता कदाचित्,
पद्भिः संमर्द्यमाना प्रतिदिनमपि या क्षोणिदेशे निलीना ।
किन्तूत्क्षिप्ता प्रचण्डोद्धततरपवनेनाम्बरे[3] पश्य वीर!
प्रोच्चानां भूभृतां[4] वा शिरसि दधति तां स्वां स्थितिं धूलयोऽपि॥२१॥

पांसुत्वं शैलवर्यो भजति च भजते शैलभावं तु पांसु-
र्लोके सूक्ष्मं तृणं यत् तदपि च पविताम्[5] सोऽपि धत्ते तृणत्वम् ।

---

१ अर्थादुत्साहपूर्णैर्वाक्यैरेव । २ अर्थात् प्रयाणमात्रेण किं स्यात् ?
३ पवनस्थानापन्न स्वकीय आत्मा व्यक्तीकृत कुतुबलेन, अर्थाद् मादृशां साहाय्येनाऽभिमतं सेत्स्यति । ४ पर्वतानां राज्ञामित्यपि ध्वन्यते ।
५ वज्रत्वम्, भजतीति पूर्वत आकृष्यते ।

पाथोराशि॰ स्थलत्वं स्थलमपि च पुनर्वारिराशित्वमेति,
यस्येच्छात क्षणेनाऽहह[1] ! भवतु नमो देवदेवाय तस्मै ।।२२।।

धृत्वा शीर्ष्णीश्वर यो दृढतरहृदय स्वल्पसैन्योऽपि धीरो
जेतु लक्ष रिपूणामभिसरति रण सुप्रसन्नास्यपद्म ।
सोऽवश्यं वै जयश्रीसुखमनुभवति प्रौढसत्त्वोऽक्षताङ्ग-
स्तस्मात् स्मृत्वेष्टदेव जहि रिपुमचला भुङ्क्ष्व चैकातपत्राम् ।।२३।।

स्वामिञ्शत्रु निहत्य प्रधनभुवि[2] पर खण्डशोऽप्यत्र भूत्वा,
म्लेच्छानामाधिपत्ये द्रुतमधिकतमे स्थापयिष्याम्यह त्वाम् ।
प्राधान्य किन्तु मे स्यादभिमतविजये सगते तत्प्रतीत्यै,[3]
स्यादेव तर्हि धत्स्व स्वशिरसि परम मत्पुरस्तात् कुरानम् ।।२४।।

श्रुत्वा मद्वाक्यमित्थ फररुकशियरो मस्तके स्वे कुरान,
धृत्वा व्यञ्जन् विशुद्ध हृदलवुशपथानित्यकार्षीद् मदग्रे ।
चेत् स्या दिल्लीश्वरोऽह प्रतिदिनमखिल यद्यदाज्ञापन स्यात्,
तत् तन्नून करिष्ये यदि तु विचलित स्या त्वया तर्हि वध्य ।।२५।।

रेखामात्र न युष्मद्वचनमपि[4] समुल्लङ्घयिष्ये कदापी-
त्यारोप्योच्चै कुरान द्रढयति शपथैर्भूय उक्ति तु तस्मिन्[5] ।
निश्चित्याऽह ह्यभूव सपदि रणमुखे मर्तु मुद्युक्तचित्त,
प्रस्तावेऽस्मिश्च काश्या कमपि सुगणक प्रष्टुमिच्छाऽस्फुरद् मे।।२६।।

श्रेष्ठ दैवज्ञविप्र त्वरितमथ समाहूय वाराणसीतो
[6]मानेनानन्दरामाह्वयमपि च रहोऽपृच्छमेन स्वमिष्टम् ।
विद्वान् सोऽपि स्वरज्ञ किल विजयवह चक्रमालोक्य सम्यग्
मामित्थ स्माह धीमान् फररुकशियरो जेष्यति स्व पितृव्यम्।।२७।।

---

१ अहहेत्याश्चर्ये । २ रणक्षेत्रे । ३ तद्विश्वासार्थम् ।
४ 'अपी' ति पद 'रेखामात्रम्' इति पदेन योज्यम्, किञ्चिदपीत्यर्थ ।
५ तस्मिन् फररुकशियरे (उक्ति भुव पुनर्दृढयति) । ६ आदरेण ।

तच्छ्रुत्वा स्वामिपार्श्वं सुगणकमनयं, सोऽपि[1] निश्चित्य विप्रै-
दोंषोन्मुक्ते विशुद्धे चलति जयवहे सुस्वरे सन्मुहूर्त्तम् ।
दत्त्वा, तस्मिंस्तमेतं सपदि गजवरारोहणं कारयित्वा,
तत्स्थानाद्वै प्रयाणं कतिपययवनै कारयामास धीमान् ॥२८॥

धृत्वाऽग्रे पूर्णपादं द्विरदवरमथारुह्य सैन्यैस्तथाऽल्पैं,
कृत्वा तस्मात् प्रयाण द्विजवरवचनादेत्य गव्यूतिमात्रम् ।
प्रापन्निश्यप्यतिष्ठन् सपदि तु कुरराघाटक पत्तन हि,
तत्राऽथ म्लेच्छभर्तुर्धननिधिमपहृत्याऽकरोत् सैन्यपूर्तिम् ॥२६॥

वह्वी सेना सुसज्ज्याऽविरति स कुरराघाटतोऽग्रे चलित्वा,
काश्चिन्नीत्वा दिनास्तत्पथगमनवशादागरा द्रागवापत् ।
तावद् वै मौजुदीनो बहुमुगलगणैर्वह्नियन्त्रैरनेकै,
साकं तत्र प्रविश्याऽहिमकरतनया प्राग् निरुध्यावतस्थे ॥३०॥

शत्रुध्वसाय सद्यो निजबलविजयायाभिपृष्ट स्वरज्ञो
वीक्ष्याऽल वणिकाख्य फररुकनृपतेर्वै युवाख्य स्वर च ।
आप्त्वा तस्मिन्नितान्त रविशशिजबल योगिनी-भूबल च
[2]भास्वद्वाहेऽग्नितत्त्वे रिपुजयमवदत् तद्बलेनाऽजयाम ॥३१॥

[3]राजन्नस्माभिरेतत्कृत इति विहित नाऽपराद्धं, भवद्भि,
प्रष्टव्योऽयं कुतोऽस्मानुपरमयितुमा[4]श्व ष्टतेऽसौ मुगल्लै ।
योऽसावस्मान् हनिष्यत्यथ किल स पुन किं भवज्जीवनार्थं,
श्रीमच्छ्रेयस्कर स्यादहह[1] खलु खलाग्र्यो मनाक् चिन्तयन्तु॥३२॥

नून श्वाऽप्यन्नमात्रप्रद-मनुजकृते सर्वदा स्यात् कृतज्ञ,
किन्त्वस्माभिर्यथावत् सविनयविधिनोपास्यमानोप्ययं यत् ।

---

१ गणकोऽपि । २ सूर्यवाहिनि । ३ कुतुबलो राजानमजिन
नबोधयति । ४ मारयितुम् (आ इति कोषे) ।

कीदृक्षं ह्यस्मदर्थं व्यवहरति खलो विस्मृतस्वोपकारं
एतादृक्षोऽयमेवाऽखिलधरणितलेऽत्रानुभूतो मयैकः ।।३३।।

व्यालादप्यस्ति दुष्टः खल इति न मृषा बुद्धिमन्तो ब्रुवन्ति,
यन्मण्डूकोन्दुरादीन् स खलु कतिपयानेव विद्वेष्टि सर्पः ।
प्रज्ञाहीनः कृतघ्नः पिशुन इह कुलद्वेषकारी खलस्तु,
प्रोक्तः सद्भिः पृथिव्यामयमधिकतरो ज्ञायते तत्र वर्गे ।।३४।।

श्रीमान् राजाधिराजस्तदुदितमखिलं नूनमाकर्ण्य तत्र,
सम्यक् स्वान्ते विमृश्यावददिति मतिमन्[1] निर्व्यलीकं ब्रवीमि ।
नो कश्चित् सूचकोऽस्त्वा[1]नृपवसति-भवतस्सद्मनश्चेत् कथंचि-
च्चेत्तिष्ठेत्तावदस्मत्सुपुरुषनिकरः स्याद् मिथस्तर्हि सन्धि ।।३५।।

श्रुत्वैतद् भूपवाक्यं वरमिति तु तदा सैयदज्येष्ठः ऊचे,
निश्चित्यैव ततस्तौ सयदकुलमणी जग्मतुः स्वस्वधाम ।
म्लेच्छेशः कर्हिचित् स स्वमनसि तु शुचा तप्यमानोऽतिमात्रं,
मात्रा धात्र्याऽनुनीतः पुनरपि च मुहुः सन्धिमाधातुमैच्छत् ।।३६।।

आदौ नव्वाववर्यैः समधिकमखिलैः खानदौरादिभिस्तु,
विज्ञप्तौ सन्धिकर्माऽऽद्यमकरणवशान्नोररीचक्रतुस्तौ[2] ।
तस्मात् तद्गेहमेत्य स्वयमपि यवनाधीश्वरेणाऽतिनम्रं,
भूयो विज्ञापितौ तत्समवहिति-हितं[3] प्रोचतुर्वाक्यमेतत् ।।३७।।

श्रीमन्[1] म्लेच्छाधिभर्त्तर्यदि तव सदने सूचकः कोऽपि नैयात्,
[4]कौर्मीशो यातु देशं, पुनरपि च तथाऽऽभ्यन्तरं वाह्यवप्रात् ।
नूनं सर्वाधिकारेष्वपि मम पुरुषाः स्युस्तदैवैकता स्या-
दोमित्युक्त्वा स ताभ्यां सह सपदि तदा सन्धिमाधत्त सम्राट् ।।३८।।

---

१ भवन सद्मनो (गृहात) सम्राड्निवासपर्यन्तम् । २ अकरणवशात् प्राक्तनद्रोहयोगात् सन्धिकर्मादि न स्वीचक्रतुरित्यर्थः । ३ तत् (यवनपति) समाधानपरमित्यर्थः । ४ आम्बेरनरेश

तत्प्राग्द्वाराद् बहि स्थं रिपुभिरिह समं दाक्षिणात्यैर्वियुध्य,
अभ्यैता यावदार्यान्, सबल उपगतो मीरुलस्तत्र तावत् ।।५०।।

श्रुत्वाऽऽयात तमारादपि मुगलगणास्तेन संयुध्य किंचिद्,
दृष्ट्वाऽन्ते त महोग्र निजनिजनिलय सत्त्रुत्सृज्य युद्धम् ।
निर्यातान् वीक्ष्य शत्रून् स तु सयदमणिर्गोपुरप्राच्यभूम्या[1],
स्वं सैन्यं सार्धमेव प्रणिहितहृदयोऽस्थात् कृतारिप्रतीक्ष ।।५१।।

यावत् तत्पत्तनान्त परित उपगतास्तस्करा यत्र-तत्र,
ज्ञात्वा ज्ञात्वा धनाढ्यानथ विभवभृतान् हट्टकोषाँल्लुलुण्ठु ।
तावद् वप्रान्तराले निजमनसि विमृश्याशु भूपालवर्य-
स्तस्यैवोद्घुष्टवान्निर्भयमिह दरजातस्य पट्टाभिषेकम् ।।५२।।

तस्मिन् पट्टासनस्थे विधिवदथ तमानेमुरन्येऽपि सर्वे,
सद्योऽध्याज्ञा प्रकाम निजनगरपतेस्त्राणकर्तुर्यथावत् ।
प्रापुस्तेऽनीव हर्ष नरपतिप्रमुखा क्षत्रिया सैयदाश्च
प्रापुर्ग्लानि भयार्त्ता परमधिकतरा ते य आसन्मुगल्ला ।।५३।।

प्राक्कारागारकष्टैरधिकविकलित सोऽपि सम्राड् ममार,
वर्षार्धेनैव तस्मिन्नुपरत[2] इतर तत्कुलोत्थ प्रमोच्य ।
कारागारान्नृपाद्या इह रफियलदौलाह्वय ते प्रचक्रु-
र्दिल्लीश सोऽपि नून कतिभिरपि दिनैर्मृत्युमापद्यत द्राक् ।।५४।।

[3]धीवान्योऽन्यो [4]रघुश्चाजित-मरुनृपतेर्मन्त्रियुग्म सुमन्त्र्य,
कारागाराद् विमोच्याऽपरमधिकतर वीरवर्यम् महम्मदम् ।
म्लेच्छेशस्य प्रपौत्र विशदतरमति स्नानतश्चोपचार्य,
वस्त्रैराभूष्य नीत्वा क्षितिपतितिलकायार्पयत्तन्निदेशात् ।।५५।।

---

१ पुरद्वारस्य पूर्वदिग्गते स्थाने । २ मृते । ३ 'भडारी खीवसी'।
४ रघुनाथ ।

भूपोऽसौ मैयदौ द्वावपि किल तमुपावेश्य राज्यासने च,
प्रादुर्दिल्लीश्वरत्व जय जय जय चेत्येवमुच्चारयन्त ।
नेमु सर्वे सहर्षा विनयमुपगता प्रोज्जगुर्गायकाश्च,
नर्तक्यो लोलनेत्रा ननृतुरनिशयान्मोदमानान्तरङ्गा ॥५६॥

प्राप्त दिल्लीश्वरत्व तदनु च महमद्शाहनामानमेन,
श्रुत्वा ढूँढारनाथ किमपि च चकितोऽप्यन्तरे मैयदाभ्याम्[1] ।
ज्ञात्वौरङ्गस्य पौत्र ह्यकबरतनय ह्यागराबप्रसस्थ
दूरस्थोऽपि स्वय सन् यवनपतिपदे स्थापयामास नेकूम् ॥५७॥

एन व्यक्ताधिपत्य त्वजितकुतुबलौ मीरलोऽथो निशम्य,
सम्राज ज्ञप्तवन्त[2] सपदि महमद सोऽपि हन्तु रिपु स्वम् ।
प्रादात् मन्त्रित्वमग्र्य कुतुबलमुलकायाथ सभ्रातृकाय,
प्रीत्याऽदत्ताजमेर मरनरपतये गुर्जराख्य च देशम् ॥५८॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये
सप्तविंशतितम सर्ग समाप्त ।

---

१ अभ्यन्तरेऽन्तरात्मनि मैयदाभ्या चकितो भीतोऽपि । २ ज्ञापितवन्त सूचितवन्त इत्यर्थ । "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ता " इति निपात ।

# अष्टाविंश सर्गः

नेकूमित्यागराया यवनपतिपदे स्थापित कौमिराजा[1],
    स्मृत्वा स्मृत्वा तदानीमजितकुतुबलौ मीरुलश्च त्रयोऽपि ।
स्वे चित्तेऽसोढवन्तो व्यधिषत महमद्शाहिमुत्साहपूर्णं,
    सोऽपि ज्ञात्वा स्वकार्य सह यवनबलैर्निश्चिकाय प्रयातुम् ॥१॥

कृत्वोत्साह स्वय स क्षितिपनि-मयदै सार्धमाशु प्रतस्थे,
    म्लेच्छेशोऽभ्येत्य चासौ हुडलपलवल तत्र तस्थौ ससैन्य ।
अन्येद्युस्तत्र राज्ञा सह च कुतुबलेनाभिमन्त्र्याचिरेणा-
    हूयाऽथो मीरुल च न्यदिशदिति पुरो गच्छ त घातयस्व ॥२॥

आप्त्वाऽथाज्ञा तदीया सह सपदि निजै र्मयदौघै पुरस्ताद्,
    गत्वा तस्मात् पुराद्वै रणाकरणपटु क्लृप्तसेनानिवेश ।
युद्ध कृत्वा गृहीत्वा त्वरितमथ बहिर्वप्रमत्र प्रविश्य,
    सोत्साह युध्यमान मयदकुलमणि पत्तनाऽन्तर्जगाम ॥३॥

गत्वाऽग्रे तत्र वप्रादपि परित उपस्थाय दूरात् सयत्न-
    मुच्चण्ड सोऽग्नियन्त्राननविवरविनिर्यातगोलान् ववर्ष ।
मध्यस्थास्तूच्चवप्रोपरिगतहुतभुग्-यन्त्रगोलान् समन्ताद्,
    वर्षन्ति स्म ह्यरीणामुपरि मुगलका सार्धमुग्राश्च बाणान् ॥४॥

स्वासन्नप्रोच्चगेहोपरिबहुयतनैर्मीरुलो वह्नियन्त्रा-
    ण्यारोप्य स्वीयभृत्यैर्भृशमधिकतया द्विट्सु गोलान्ववर्ष ।
विष्वक् चैष्वापतत्सु त्वरिततरमथो वप्रमध्यस्थलोका
    भीतास्त्यक्त्वा स्वधैर्यं स्वमनसि च विमृश्याथ सधि प्रचक्रु ॥५॥

---

१ आम्बेरेश्वरेण ।

गोलाऽभावेऽन्तरस्थाः कतिचन शिखियन्त्रास्यशब्दानुकारं,
    चक्रुर्हुंकारमेवोत्कटभटनिकरास्तं विदन्तं प्रसृत्य ।
अग्रे पाषाणरुद्धं मृदुपलघटितं द्वारमुद्भिद्य बाह्या,
    केचिद् वीरास्तदन्तं किल विगतभियोऽभ्येत्य नेकूमगृह्णन् ।।६।।

नेकूमुद्गृह्य तत्र त्वरितमथ गजारोहणं कारयित्वा,
    तं सेनानीरनैषीद्यवननरपतिं वन्द्यकार्यात् स एनम्[1] ।
म्लेच्छेन्द्रस्तत्र[2] यावत् स्म वसति कतिचिद् वासरास्तावदुत्कोऽ-
    श्रौषीद् राठौरराजो धृतरति मथुरातीर्थमाहात्म्यमित्थम् ।।७।।

पुर्यं काश्यादयोऽन्या यदपि सुबहवः किन्तु तासां वरिष्ठा
    धन्यैकैषाघहन्त्री विलसति मथुरैवापदां चापहर्त्री ।
नॄणां या जन्ममौञ्जीव्रत-मरण-सुदाहैर्विधत्ते हि मोक्षं,
    त्रैलोक्ये मोक्षतोऽन्यत् किमिह समधिकं कामनीयं जनानाम् ।।८।।

श्रीमत्कृष्णानुकम्पातिशयत इह वै स्यात् सुपुंसां निवास-
    स्तिष्ठेयुस्तत्र चार्या क्षणमपि परमानुग्रहादेव तस्य ।
पुण्यैर्दानैस्तपोभिर्व्रतयमनियमैः सर्वतीर्थावगाहै-
    र्योगैर्यज्ञैर्न तत्र क्षणमपि वसनं राजसूयाश्वमेधैः ।।९।।

पाद्मे[3] पातालखण्डे कथितमिति समग्रेऽपि भूमण्डलेऽस्मिन्,
    वैकुण्ठाद्वै गरीयस्यहह! मधुपुरी भाति धन्या सुरम्या ।
यस्यां स्थित्वा किलैकं दिनमपि मनुजो नाप्नुयाद् गर्भवासं,
    नैकत्रा केवलं पुर्यपि तु शुभकरं माथुरं मण्डलं हि ।।१०।।

स्नात्वा विश्रान्तिघट्टे सविधि यदि नरस्तर्पणं तत्र कुर्या-
    दुद्धृत्य स्वान् पितॄन् स्तर्ह्य सुखदनरकाद् विष्णुलोकं प्रयाति ।
यः कुर्याच्चेत् प्रमादादपि सुमहदघं मानवोऽमौढ्यतो वा,
    [4]तस्यैतत्स्नानमात्रादपि भवति परं पातकं भस्मसाद्वै ।।११।।

---

१ नेकूम् (वन्द्यकार्यात् कारायां क्षिप्तवान्) ।    २ आगरापुरे ।
३ पद्मपुराणे ।    ४ विश्रामघट्टस्नानादेव ।

ह्यागरायीमेत्य तस्थौ यवनपतिरपि[1] प्रस्थित सोऽजमेरा-
ड्डूमाडाद्वै तदानीमकबरतनयो[2] नष्ट उज्झन् कुटुम्बम् ॥२३॥

निर्यातिऽकव्बरे तूपकरणसहित तत्सुतं स्त्रीसमेत,
नेकूसज्ञं गृहीत्वा यवनपतिरिह ह्यागराया रुरोध ।
तत्पारोक्ष्येण[3] नेकू तमथ च सहसोत्थाप्य कौमि ससैन्य-
स्तस्थौ वै हिंडवाण्या निकटमुपगत पक्षमाश्रित्य तस्य ॥२४॥

म्लेच्छाधीशेन सार्धं कुतुबलमुलको मीरुलश्चाभिमन्त्र्य,
निश्चित्याथो स्वभर्त्रा सह कुपिततरौ चक्रतुर्वै प्रयाणम् ।
राजेन्द्रस्तावदेत्याखिलयवनपति यास्यथ क्वेत्यपृच्छत्,
क्रुद्धस्तत्पार्श्वसस्थ सयदमग्रिरमीरुल्लवावोऽख्यदेवम्[4] ॥२५॥

भूपालाधीश! धीमन्! निखिलमरुपते! कौमिराज निहत्य,
कौर्मीन् ढूंढाडसस्थानपि च सह कलत्रैस्तथा ध्वसयित्वा ।
तद्देशे वै समन्तान्निजसयदगणान्न्यस्य सर्वत्र नून-
मम्वावत्या सदैव प्रतिमुदितमना· स्व निवास करिष्ये ॥२६॥

श्रुत्वैव स्माह तस्मै मरुधरणिपति , किं कृत कौमिराजा[5] ?
क्रुद्धो मीरुल्लवावोऽकथयदिति, कथ ज्ञायते नो भवद्भि ।
जिह्मोऽय सूचकोऽथो शठ इति न मृषा, नात्र पक्षोऽस्य साधु ,
क्षन्तव्यो मेऽपराध , कथमपि नृपते नोत्सहे त्यक्तुमेनम्[6] ॥२७॥

आकर्ण्यैत्थ तदुक्त मरुनृपतिरमीरुल्लवाव तमाह,
मा मैव ब्रूहि धीमन्! ननु न समुचित यासि यड्ढूंढवाटम् ।
य कौमि सोऽहमेवास्म्यभिलषथ युध चेद् मया योधनीय,
नो चेदस्माद् निवृत्य, स इति किल निशम्यास्त शान्तप्रयत्न ।२८।

---

१ औरङ्गजेब । २ नेकूनामा ३ यवनपतिपारोक्ष्येण, तदज्ञान-
दशायामित्यर्थं । ४ एवमग्यत् अवोचत् । ५ 'राज्' शब्दस्य
तृतीयान्तमिदम् । ६ मया मद्दत्यर्थं ।

प्राह श्रीमन्तमित्थं स तु मयदमणि मारवक्षोणिनाथं,
धीमन्[1] धर्मध्वज सन् मलिनतरहृदं त्रायसेऽद्यात्र कस्मात् ?
'श्रीमद्भिर्निश्चितं यत् तदनुचितमपि ग्राह्यमेवास्ति मे तु,
लात्वैनं किन्तु यूय व्रजत मरुधरा याम दिल्ली वयं तु ।।२६।।

तस्थौ तत्राऽजितेश स च यवनपतिस्तेन संभाष्य हृष्ट,
कृत्वा सद्यः प्रयाण कुनुवलमुलकाऽमीरुलाभ्या हि सार्धम् ।
म्लेच्छैरेत्याथ दिल्ली बहुपटहरवै रक्तवप्र[2] प्रविश्य,
दिव्ये सौधान्तराले निजयुवतिजनै प्रत्यह मोदमाप ।।३०।।

म्लेच्छाधीशे प्रयाते निजकुलजजनै सैयदेन्द्रे च याते,
ढूंढाडेश प्रघोष्य क्षितिपतिरजित कौर्मिराज तमेव ।
पत्रं सत्प्रीत्यमत्र[3] विधिवदपि विसृज्याथ सार्धं गृहीत्वा,
सद्यश्चक्रे प्रयाण निजवसतिमरुक्षोणिमायातुकाम ।।३१।।

राव शैखिर्मनोहृत्पुर नगरपति शक्तिसिंहाभिधान,
प्राग्-वाग्-दत्तात्मजायास्त्वरितमनुविवाहार्थमुद्युक्तचित्त ।
स्वान् दैवज्ञास्तदानीं निजनिकटमुपाहूय पृष्ट्वा सुलग्नं,
पत्रं प्रागेव दत्त्वा मरुनृपमधिकेनादरेणाजुहाव ।।३२।।

राजाकर्ण्य स्वलग्न द्विजवरवचनै स्वोदयं कारयित्वा,
प्रागात् सार्धं स्ववीरै सपदि धृतलसत्कुङ्कुमाऽऽरक्तवस्त्र. ।
शैखिर्वै शक्तसिंहो बहुयुवतिजनोद्गीतसंगीतघोषै,
सम्यग्भव्योत्सवैश्चोत्कटपटहरवैः समुखं चाजगाम ।।३३।।

नत्वा सत्कृत्य चैनं श्रुतिवचनपरैर्विप्रवर्यैर्नरेन्द्र,
पाद्यार्घ्याद्यै प्रपूज्य प्रकृतविधि च सोऽन्त पुरं स्व निनाय ।
मातॄणा पूजनं च द्विपमुखयजनं[5] कारयित्वा यथावत्,
कन्याया पाणिपद्म नृपकरकमलेऽस्थापयद् वै पुरोधा ।।३४।।

---

१ प्रक्तमेकत्व विहायाऽत्र राठोडवंशय नभिप्रेत्य बहुत्व प्रयुक्तम् ।
२ 'लालकोट' । ३ सन्प्रेमपात्र (पत्र समर्प्य) ।
४ मनोहरपुराधीश ५ गणेशपूजनम् ।

तस्मात् पश्चात् सुमन्त्रान् विहितविधि पठन् पाठकर्मप्रवृत्तो
जुह्वद् वह्नौ हविष्यं द्विजजनसहितो मध्यमध्ये तथाऽऽज्यम् ।
प्रादक्षिण्यं तथाऽग्नेरपि परिघटयन् दम्पतिभ्यां शुचिभ्या,
राज्ञो वामे च पार्श्वे तदनु खलु वधूं स्थापयामास विप्रः ।।३५।।

कन्यामुद्वाह्य चैव मरुनरपतये यौतके शक्तसिंहो
दासीदासाश्च भव्यान् गजरथतुरगान् सन्नृयानानुयातान् ।
हेमाक्ताम्यम्बराणि प्रवरमणिमयस्वर्णसंभूषणानि,
दत्त्वाऽन्ते नम्रभावात्कृतबहुविनयः स्तोतुमारब्ध चैवम् ।।३६।।

विप्रैर्वेदप्रवीणैः प्रचुरतरमहोदीप्यमानोरुदेहै
राजन्यै कौर्मिवश्यादिभिरपि च समं सद्भटैर्मारवैश्च ।
आगात् प्रोद्यत्प्रतापो निखिलमरुधराधीश्वरोऽस्मद्गृहं यत्,
सोऽयं पुण्यप्रभावः क्षितिपतिलक मत्पूर्वजाना न मेऽस्ति ।।३७।।

इत्थं रावस्तु शैखिर्निखिलगुणगणालंकृता स्वात्मजा तां,
राज्ञे प्रोद्वाह्य भक्त्या बहुविनययुतो वन्दनं वै चकार ।
राजाप्याभाष्य तेन प्रणयनययुतं कौर्मिणा स्वैर्जनैश्च,
प्रस्थाय स्वीयवध्वा सह मुदितमना स्वां पुरीमाजगाम ।।३८।।

श्रुत्वाऽऽयातं नृपालं निखिलपुरजना सद्विजाः श्रेष्ठिनोऽपि,
दूरादुद्वीक्ष्य हृष्टा विनयविधिपरा आशिषं प्रोचुरार्याः ।
नेमुस्तत्पादपद्मं धृतविविधवरोपायना राजवंश्या
ढूंढाडेशाय वासं मरुपतिरददात् सागरे[1] सूरपूर्वे ।।३९।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये
अष्टाविंशतितमः सर्गः समाप्तः ।

१ 'सूरसागर'-नाम्नि प्रदेशे इत्यर्थः ।

# एकोनत्रिंशः सर्गः

दर्शितेऽजितनृपेण सुसौधे
सूरसागरवनाश्रयशोभे ।
रम्ययोधपुर-भूषणभूते,
कौर्मिराडकुरुत स्वनिवासम् ॥१॥

भूपतिस्तमभिपूज्य सुयत्नाद्,
भोगिशैलशिर[1] आ-स्थितवप्रे ।
राजगेहमधिविश्य च रम्यं,
देववत् प्रतिननन्द सदारः ॥२॥

टूढवाडपतिरा- सहसश्च,[2]
यावदग्रसमुपागतमूर्जम्[3] ।
दुर्मना हि निजघातभयेन,
यत्नतोऽवसदलं हृदि भीतः ॥३॥

कौर्मये नृपतये वचनेन,
प्राग् नृपः स्वतनया किल दत्ताम् ।
वीक्ष्य काल उपयाति[4] वरार्हां
तेन[5] वाहयितुमुद्यत आसीत् ॥४॥

दैवविद् द्विजवरानथ पृष्ट्वा,
शोभनेऽम्बरमणौ च[6] सुरेज्ये ।
भव्यभ-ग्रहयुतेऽह्नि सुलग्ने,
भूपतिर्निरणयच्छुभलग्नम् ॥५॥

---

१ योधपुर परितः परिवेष्टमान पर्वतो'भोगिशैल' इति प्रख्यायते । २ सहसो मार्गशीर्षादा आरभ्य । ३ अग्रे समागतमूर्जं कार्तिक यावदेकवर्षपर्यन्तमित्यर्थः ४ उपागच्छति काले वरार्हां वरयोग्या वीक्ष्येति योजना । ५ तेन कौर्मिणा विवाहयितुम् । ६ गुरौ ।

ढूढवाडपतिरप्यकरोत् स,
स्वोदय विधिवदेव सुघस्रे[1] ।
पत्तनाधिपतिरात्मसुताया,
पूर्वमभ्युदयमाधित[2] तस्मात् ॥६॥

पत्तन च सकल स सवप्र,
राजमार्ग-वरचत्वर-वीथी ।
बाह्यगोपुरत एव समन्तात्
सस्कृत च परिशोभितमाधात् ॥७॥

ढूढवाडपतिराहितनव्य-
कुङ्कुमात्तवसन सह सैन्यै ।
प्रोत्कटैर्निजनिजास्त्रचयाढ्यै-
र्वेष्टित परित आहतयत्नै ॥८॥

रत्नमाल्यधर उल्लसितात्माऽऽ-
रुह्य वारणवर व्यचरत् स. ।
दिव्यरत्नखचित शुचि बिभ्रद्,
मूर्ध्नि हैममुकुट प्रकटाशु ॥९॥

स्कन्धदेशनिहितानलयन्त्रान्,
सनिधाय पुरत किल पौर्वान्[3] ।
सज्जितान् स्वसरणीमभितश्च
[4]दीपवृक्षनिचयात् निशि पश्यन्॥१०॥विशेपकम्[5]

सादिनो यदपि रक्षणहेतो',
सर्वतो दधदसौ विचचार ।
दर्शयंस्तदपि दैहिकदार्ढ्यं,
चेतसैष परिकम्पित आसीत् ॥११॥

---

१ सुदिने । २ तदपेक्षया पूर्वम् । आधित धृतवान् ।
३ पूर्वदिग्भवान् (सैन्यान्) । ४ दीपमया वृक्षा (झाड) ।
५ पद्यत्रयेण योजना ।

किं भविष्यति करग्रहणं मे?
बन्धनार्थमुत निग्रहणं मे?।
भावि वाऽन्तिममनुग्रहणं मे?,
चिन्तयेत्यजनि दोलितहृत् सः ॥१२॥

दुर्गगोपुरमुपेयुष एव-
मैधतेयमधिक[1] हृदि चिन्ता।
प्राकृतानिह[2] स काश्चन मृत्या-
नत्यजत् स्थितिगतैरभिनुन्न[3] ॥१३॥

द्वारमग्रिममुपेत्य ससैन्य,
सप्रयत्नमभितः परिपश्यन्।
दुर्गगोपुरमवाप[4] चतुर्थं,
तत्र तोरणमवन्दत यत्नात् ॥१४॥

न्यस्य तत्र निजवीरवरेण्या-
नग्रतः सरणिमन्वसरत् सः।
राजवेश्म सहगैः सह चैत्याऽ-
पश्यदद्भुतसभां जननीत ॥१५॥

तावदेत्य नृपराजपुरोधा,
सत्कृतः तु तमुवाच विनीत।
कौर्मिवश्यनृपरत्न[1] सुसौध-
द्वारमाविश च माऽस्तु विलम्ब ॥१६॥

तन्निशम्य स शुशोच विवर्णो
गम्यमस्ति किमितः परमग्रे?।

---

१ अवर्धत। २ दुर्गगोपुरे। ३ परिस्थितिप्रकारैः प्रेरितः।
४ अत्र गोपुरशब्दो द्वारमात्रोपलक्षणं।

इङ्गितैस्तमुपलक्ष्य पुरोधा
वाक्यमाह कुत उद्विजसे भोः! ॥१७॥

इत्युदीर्य परिगृह्य पुरोधा-
स्तत्करं ह्यभिचचाल स सौधम् ।
तद्भटास्तु सहगा इति जाते,
शङ्किता मनसि किंचिदभूवन् ॥१८॥

तद्विलोक्य मरुराट् स समग्र-
मात्मना बहिरुपेत्य विशस्त्र: ।
तान् स्वसंशय-सुविह्वलचित्तान्,
प्रीणयन्निव च तेष्ववतस्थे ॥१९॥

स्वान्तिकस्थितमवेक्ष्य नरेन्द्रं,[1]
ते बभूवुरिह सुस्थितचित्ताः ।
ते तु निन्युरथ कौर्मिनरेश,
वेदघोषनिकरेण सुविप्रा:[2] ॥२०॥

[3]मातुरर्चनमथैकदतश्च,[4]
संविधाय विधिवच्च कुमार्या ।
पाणिपङ्कजमदु: किल कौर्मे,
पाणिपङ्कजवरे द्विजवर्याः ॥२१॥

विप्रपत्न्युचित-गीतसुगीतै-
र्विप्रवर्गविहितश्रुतिघोषैः ।
मङ्गलध्वनिभिरप्यतिमात्रं,
दंपती प्रमुदितौ भवतः स्म ॥२२॥

---

१ मरुक्षितीशम् । २ पुरोहितादय इत्यर्थं ।
३ जात्यैकत्वम् । मातृणामित्यर्थं । ४ गणेशस्य ।

तत्र मण्डपवरे द्विजवर्यै-
मण्डलानि रचितानि शुभानि ।
स्थापित प्रथमतश्च सुकुम्भो
वह्निरप्यसुखयज्ज्वलितश्च ॥२३॥

प्राप्तवत्यवसरेऽथ तदानीं,
प्राप्य सद्द्विजवरस्य शुभाऽऽज्ञाम् ।
दीप्तवन्तमिह सद्घृतहुत्या,
दंपती तु परिसस्रतुरग्निम्[1] ॥२४॥

ढूढवाडनृपते. किल तस्य,
सव्यभाग उपवेश्य वधूं ताम् ।
ब्राह्मणा सपदि सप्तपदी च,
प्रोच्य चक्रुरथ तत्परिपूर्णम् ॥२५॥

मण्डपात् तदनु निर्गतवन्ता-
वास्थितौ सपदि तौ नरयानम् ।
वाद्यघोषनिकरैश्च ससैन्यौ,
दंपती निजनिवासमगाताम् ॥२५॥

प्रातरेव नरयानवर ता-
वास्थितौ तु सह सैन्यजनौघैः ।
वप्रमभ्युपगतौ पुनरेव
सत्कृतौ मरुनृपेण सुभोज्यैः ॥२७॥

एवमेव दिनसप्तकमेतौ
भक्ष्यभोज्यनिचयैर्बहुरूपै. ।
सच्चकार स मरुक्षितिपालोऽ-
तर्पयत्तदितराश्च मनुष्यान् ॥२८॥

---

१ प्रदक्षिणीचक्रतुरित्यर्थ. ।

यौतके स ददवे किल तस्मै,
भाजनानि रजतस्य च हेम्नः ।
भूषणान्यपि च रत्नमयानि
प्रोल्लसत्सुमणिमौक्तिकहारान् ॥२६॥

कौर्मये चतुरवारणवाहान्,
वाहनानि स पराणि मणींश्च ।
सार्धमेव निजसैन्यजनेभ्यः,
स्वर्णयुक्तवसनान्यददात् स ॥३०॥

हेमपत्ररचित नरयानं,
पट्सुवर्णकलशैरतिरम्यम् ।
रत्नजालजटिताखिलभागं,
दिव्यवस्त्रपरिशोभि यदासीत् ॥३१॥

भूपति स्वतनया किल तत्राऽऽ-
स्थाप्य सार्धमथ सद्युवतीभि ।
कौर्मिराजमभिपूज्य सुयत्नाद्,
दिव्यभूषणवरैश्च सवाहै· ॥३२॥

मारवक्षितिपतिः प्रियपुत्री-
स्नेहसार्द्रहृदय स्त्रवदश्रु· ।
दू टवाडनृपति गमनाय,
दुर्मना निरदिशत् स कथंचित् ॥३३॥

कौर्मिरप्यनुगताखिलसैन्यौ
गीतवाद्यनिनदैर्बहुरूपै ।
मूरसागरमगात् स्वनिवासं,
प्राप्य तत्र मुमुदेऽनुदिनं च ॥३४॥

मूरसागरपदेऽस्य तु राज्ञ-
स्तिष्ठत· किल दिलीनगरेशः ।

चौकिलित्-समभिधं तु नवाबं,
प्राजुहाव सहसा स्वसमीपम् ॥३५॥

उज्जयिन्युषित एष तु तेना-
ऽऽहूत उन्मदमना निजभर्त्रा ।
नर्मदा सु परितीर्य तरीभि-
र्दक्षिणा दिशमभि प्रजगाम ॥३६॥

म्लेच्छनाथ इति तद् विनिशम्या-
ज्ञप्तवांस्तमयितुं स नवाबान् ।
भीमसेननृपमप्यथ कोटा-
धीश्वरं च सह तं किल गन्तुम् ॥३७॥

तेऽप्यवाप्य निजनाथनिदेशं,
सुप्रयाणमथ चक्रुरदीनाः ।
प्रत्यहं विदधतो गमनं च,
नर्मदा त्वरितमेव सुतेरुः ॥३८॥

पारमभ्युपगतान् विनिशम्य,
म्लेच्छनाथवचसाऽथ नवाबान् ।
सत्वरं तदभिसमुखमाप्त्वा,
तैः समं समरमारचयत् सः ३९॥

तान् निहत्य समरेऽखिलसैन्यान्,
सत्वरं विजयमाप स वीरः ।
ब्रह्मपत्तनमुपेत्य पुरस्ताद्,
घाटमाप्तुमित एव ययौ च ॥४०॥

मैयदः पृथुयशाः प्रभुनुन्नः,
शत्रुजित् त्वरितमालमअल्ली ।
तद्वधाय नवरङ्गपुराद्वै,
घाटमेत्य पुरतस्तु स तस्थौ ॥४१॥

रोमहर्षजननः समरो वै,
    सैयदस्य मुगलेन सहासीत् ।
सगरे तिलश एव स ' भूत्वा,
    सत्वर त्रिदशधाम जगाम ।।४२।।

भ्रातर निहतमित्यवगम्य,
    मीरूल प्रतिजगाम दिलीशम् ।
ईश! चीकिलखाननवाबो,
    निर्ययौ प्रति स दक्षिणदेशम् ।।४३।।

सप्रयुध्य समरे निहतो मत्-
    सोदरोऽवरज[2] आलमअल्ली. ।
त निहन्तुमधुनैव हि याम,
    पूर्वजेन सह कुत्बलनाम्ना ।।४४।।

प्रोक्तमित्युपनिशम्य दिलीशो,
    गन्तुमुद्यतमना सहसासीत् ।
आदिशन्मुगलसैयदवर्यान्,
    वह्नियन्त्रसहितानथ पौर्वान् ।।४५।।

सार्धमेव निखिलैश्च नवाबै',
    स प्रयाणमकरोद् यवनेशः ।
प्रत्यह प्रतिचलञ्शनकैश्च,
    शीकरीपुरसमीपमुपागात् ।।४६।।

यत्रापि तस्य वसत. किल तस्या-
    नुज्ञयैव मुगलेषु वरीयान् ।
श्रीमहम्मदअमीति नवाबो-
    ऽमन्त्रयद् मुगलकं रह[3] एवम् ।।४७।।

---

१ सैयद । २ अनुज । ३ विजने । अव्ययमेनत् ।

संगरे तु वयमेनममीरुल्-
सञ्ज्ञकं किमपि हन्तुमशक्ताः ।
हन्म एव कपटेन कथंचिद्,
दृश्यतेऽत्र[1] खलु नान्य उपायः ॥४८॥

कंचिदेव यवनाग्र्यमुपांशु[2],
हृद्गतं न्यगददोमकरोत्[3] सः ।
कर्हिचिद् यवननाथनिवासात्,
सैयद स्वशिबिरं हि निवृत्त ॥४९॥

वञ्चकस्तु[4] पथि तं समवेत्य,
प्राप्य तस्य नरयानमनार्यः ।
स्वेश-सेवननिवेदनपत्रं[5],
तत्करे निहितवानतिनम्रः ॥५०॥

सोऽपि तन्निजकरे विनिधाय,
वाचनाय निरतोऽजनि यावत् ।
तावदुग्रयमदंष्ट्रिकया स,
वञ्चकस्तदुदरे प्रजहार ॥५१॥

घातितं सयद किल दृष्ट्वा-
ऽघातयन् वधकमाशु तदीयाः ।
सैयदो निहत इत्यवबुध्य,
हर्षमाप बहुलं यवनेशः ॥५२॥

अग्रहीद् यवननाथ इतोऽस्यो-
पस्करं[6] च वसुकोशचयादीन् ।

---

१ अस्मिन् मीरुलहननविषये । २ विजनेऽव्ययम् । ३ ओमिति स्वीकारे । ४ सैयदहनननियुक्तो गुप्तचरः । ५ स्वप्रभुसेवाविषयक विज्ञप्तिपत्रम् । ६ गृहोपकरण वस्तुजातम् ।

कुत्बलस्तु परिहृत्य तमीशं,
निर्ययौ च सहसाऽऽप स दिल्लीम् ॥५३॥

म्लेच्छराजनगरीमिति गत्वा,
रत्नपीठमभनक् स च तस्य ।
रत्नकोशमखिलामपि लक्ष्मी,
सैयदेभ्य उचित व्यभजच्च ॥५४॥

म्लेच्छसैन्यनिकरैः सह योद्धु,
प्रोन्नदन्नथ रिपुक्षयमिच्छन् ।
सैयदाधिप उपेद् यवनेश-
समुख स्वयमपेतविलम्ब. ॥५५॥

सैयदस्य मुगलै सह युद्धं,
रोमहर्षणकर हि तदाऽभूत् ।
वह्नियन्त्रवदनोद्गतगोल-
प्रौढवृष्टिरभवत् परितश्च ॥५६॥

तावदाशु मयदेन्द्रभटास्ते,
विद्रुता रणमपोह्य समस्ता. ।
वारणस्थमभितो मुगलास्तु,
सगता. सयदनाथमगृह्णन्[१] ॥५७॥

दुन्दुभिर्विजयशस्युदनादीद्,
हर्षमाप यवनाधिपतिश्च ।
म्लेच्छसैन्यनिकरै. सह दिल्ली,
गन्तुमिच्छुरचिर च ययौ ताम् ॥५८॥

कौमिरप्यतिजहर्ष पुरैवा-
ऽऽलमग्रलीनिहत इत्यवगम्य ।

---

१ वुतुवलम् ।

सन्निशम्य निहतौ सयदाग्र्यौ,
स्वीयदुन्दुभिमवादयदुच्चैः ॥५९॥

सविभज्य गुडमात्मजनेभ्यो,
द्रष्टुमेव यवनेशमथैच्छत् ।
सन्मुहूर्तकमलब्ध स कस्मा-
च्चिद् द्विजादपि च दैवविदग्र्यात् ॥६०॥

वारणं समधिरुह्य च कौर्मि ,
प्रास्थिताप्तुमचिराय स दिल्लीम् ।
सद्य एव निजवाहनसस्थाः,
कौर्मयोऽनुययुरात्मन ईशम् ॥६१॥

प्राग् मरुक्षितिमाप्य नयेना-
नम्य भूमिपतिरित्थमवादीत् ।
म्लेच्छनाथनिकटं नृप[1] यामो,
देहि मारवपते[1] त्वमनुज्ञाम् ॥६२॥

वाक्यमेतदवगम्य नरेन्द्र.,
कौर्मिमाह कथमित्यतिशैघ्रचम् ।
भूपतिं स पुनराह विनम्रो-
ऽद्यैव देव[1] गमनं तु करिष्ये ॥६३॥

गम्यमेव यदि, यातु मुदेति,
प्रोच्य वाजिवसनानि च दत्त्वा ।
'सूनवेऽपि च स मौक्तिकहार'[2] ,
गन्तुमन्वमनुतैव स कौर्मिम् ॥६४॥

योधपत्तनत एव चलित्वा,
कौर्मिरध्वनि चलन्नविरामम् ।

---

१ पुत्र्यै । २ दत्त्वेति पूर्वेन ग्राकृष्यते ।

शीघ्रमेव निजराज्यमवाप्तो-
ऽतिष्ठदिष्टरति कचन कालम् ।।६५।।

आत्मनोऽथ नगरात् स चलित्वा,
सार्वभौमनगरीमपि[1] गत्वा ।
म्लेच्छनाथमभिनम्य विनीतो-
ऽनुज्ञयैव खलु तत्र स तस्थौ ।।६६।।

श्रीमरुक्षितिपतिस्तु विमृश्य,
मेडतापुरमगात्त्वरयैव ।
ओष्य[2] तत्र [3]वसुसख्यकमासान्,
मन्त्रिणा सह सुमन्त्रमकार्षीत् ।।६७।।

मन्त्रवित्-सकलमन्त्रिवरस्य,
श्रीरघो[4] स्वबहुमानपदस्य ।
मन्त्रतो मरुधराधिपवर्य',
प्रस्थितो ह्यजयमेरुमवाप ।।६८।।

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये
एकोनत्रिंशत्तिम सर्ग समाप्त ।

१ दिल्लीम् २ आ+उष्य । निवास कृत्वा । ३ अष्टमासानि यर्थ ।
४ श्रीरघुनाथस्य ।

# त्रिंशः सर्गः

आनासागरपूर्वदिक्-तटगयोर्यद् भूभृतो. स्तोकयो-
मंध्ये शाहजहानसंज्ञयवनाधीशस्य सौधं महत् ।
तस्मिन् स्त्रीजनसंयुतोऽजितनृप. प्रीत्या निवास व्यधा-
दन्ये बाह्यवनेषु भूपसुभटा ऊषुस्तदाज्ञानुगाः ॥१॥

तद्वप्रे स्वभटान्निवेश्य च पुरान्निस्सार्य वै यावनान्,
योधान्, साधु विचार्य चेतसि नृप स्वेनाथ सन्मन्त्रिणा ।
ज्येष्ठ चाभयसिंहसञ्ज्ञकमथात्मीय तनूजं प्रियं,
दत्त्वाज्ञा सह मन्त्रिणापि च भटै. शाकम्भरी[1]प्रैषयत् ॥२॥

राजेन्द्रस्य कुमार एष सहसा शाकम्भरी प्राप्य च,
प्रीत्योवास पुरा जिता क्षितिभुजा संपातुकामो भुवम् ।
तस्माड्डिण्डपुरा भिधाननगरेऽमात्य च कंचिन्निज,
प्राहैषीदशिषच्च याहि सहसैतद्राज्यसात्[2] तत्कुरु[3] ॥३॥

तोडाह्वेऽपि पुरे भटै सह निजान् सप्रैषयद मन्त्रिणो
गत्वा तेऽपि पुर हि तज्जनपदेऽखण्डे प्रसह्याऽभित ।
भूपाज्ञामनुघोष्य तत्र विभया ऊषुर्निजेशाज्ञया,
झाडोद त्वरयाऽभृगह्य च रघुस्त[4] राज्यसाच्चाकरोत् ।४।

मन्त्रीशः पुरमञ्जसाऽमरसर संज्ञ भटैर्दर्पिभि,
संगृह्याथ च तत्र तज्जनपदं राठोडवश्यैर्जनै ।
स्वाम्याज्ञामुदघोषयच्च तदिद मन्त्री शशास स्वय,
तत्रत्या अभवश्च शेखकुलजा राजेश्वराज्ञापरा· ॥५॥

---

१ माभर' इति स्याता पुरीम् । २ एतद्राज्याधीनम् । ३ तद् डिण्डपुरम् (डीडवानानगरम्), एतद्राज्यसाद् एतस्य राज्यस्याधीनम् ।
४ मन्त्रिवरो रघुनाथ । त झाडोदम् ।

तावत् कश्चिदुपेत्य सूचकजनो म्लेच्छेशमाख्यादिति,
    किं नो पश्यसि नाथ[1],यज्जनपदान् गृह्णाति नूयोऽजित ।
श्रुत्वा तत् क्षमसे कथं खलु भवाञ्शक्तोऽपि सन्नीश्वर!
    कचिद् वीरमुपादिश क्षितिपतिं यस्तं प्रतीपं नयेत् ॥६॥

इत्याकर्ण्य पृथक्-पृथक् स यवनाधीशस्तदैवोन्मदं,
    भूपं जेतुमुपादिशन्निजनराांस्तैर्न चाङ्गीकृतम् ।
नव्वाबस्त्वतुलो मुदप्फरअलीखाँ-नामधेयो बली,
    श्रुत्वा म्लेच्छपतेर्निदेशनमिदं स्वे मस्तकेऽधारयत् ॥७॥

बद्ध्वा पाणिपुटं च तस्य पुरतः स्थित्वाऽऽह नम्रः प्रभो!,
    यास्यामि क्षितिपेन सार्धमजिनेनाऽलं[2] च योत्स्ये रणे ।
जित्वा तं ह्युपसंगमिष्य[3] इह च श्रीमत्पुरः सत्वरं,
    नो चेत्तन्निहतस्त्रिविष्टपपदं नूनं व्रजिष्याम्यहम् ॥८॥

म्लेच्छेशस्तु निशम्य तत्प्रकथितं संश्लाघ्य सत्कृत्य तं,
    वाजीभादिभिरेव तत्र सहसा गन्तुं समाज्ञापयत् ।
नत्वा तच्चरणारविन्दयुगलं सद्यः प्रतस्थे ततः,
    सैन्यैः सार्धमगात् पथि प्रतिचलन् सोऽयं मनोहृत्पुरम् ॥९॥

भूपालेन्द्रसुतः पुरैव तमुपायान्तं निशम्य द्रुतं,
    ध्यात्वेष्टं निजमैनिकैः सह भटैः सनह्य, सद्वारणम् ।
आरुह्यानकतूर्यसंघनिनदैस्तन्संमुखं प्रस्थितो
    म्लेच्छः सोऽप्यभयं निशम्य निकटप्राप्तं भ्रमन्निर्ययौ ॥१०॥

नष्टं दूरतरं निशम्य तमिमं भीतं कुमारोऽभय
    स्वीयैः सार्धमुपेक्ष्य सत्वरतया वीरैः परावृत्य च,
आगच्छन्नितरैः सुमन्त्रिभिरयो शाकम्भरीं प्राप्य च,
    वीरः स्वीयनिवासभूमिमुपगम्योवास सम्यक्तया ॥११॥

१ 'अप्रयत्नम्'। २ उपस्याम्य उत्थर्ष। । "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदम् ।

स्वेच्छातो वसतस्तु तस्य नृपतेः सूनोः कदाचिद् महा-
मन्त्री श्रीरघुनाथ एव मनसि क्षिप्रं विमृश्य स्वयम् ।
पत्रेण प्रतिसूच्य सर्वधिपतेराज्ञां च लब्ध्वेहिता,
प्रस्थातुं किल नारनोलनगरं ता प्रैषयत् तं[1] प्रति ॥१२॥

भूपालेन्द्रकुमार एवमभयः प्राप्येदमाज्ञात्मकं,
पत्रं वाचितवानिति "व्रज सुत श्रीनारनोलं पुरम् ।
म्लेच्छावीशितुरङ्ग![2] तत्र खलु चेत् कश्चिन्नबाधो भवे-
द्धत्वा तं समरे विलुण्ठ्य नगरं प्रत्येहि शाकम्भरीम्" ॥१३॥

तत्पत्रार्थमिमं विबुध्य रभसाद् राज्ञः कुमारोऽभयोऽ-
पृच्छद्दैवविदं मुहूर्तमददात् सोऽपि स्वरे शून्यदः[3] ।
तस्मिन्नेव कुमार आहितकटिश्चारह्य सद्वारणं,
सैन्यैः सार्धमगात्तदेव नगरं तच्छासकं ध्वंसितुम् ॥१४॥

श्रुत्वा चारमुखाच्च सोऽपि सहसा संनह्य सैन्यैः समं,
निर्गत्याभयसैन्यमेत्य यवनो गर्वोद्धुरोऽयुध्यत ।
कौमारानथ[4] दुर्जयान् स तु निरीक्ष्यैवाशु मुक्त्वा रणं,
म्लेच्छः स्वीयजनैः समं सुविमुखो भूत्वा विदूरं गतः ॥१५॥

दृष्ट्वा तन्नगरं विसृज्य विगतं म्लेच्छं तदा तद्भटा-
स्तत्राविश्य च सत्वरं किल धनं सलुण्ठ्य सोपस्करम् ।
प्रायच्छन्नभयाय सोऽपि च ततः स्वीयैः प्रतस्थे मुदा,
मार्गे सम्प्रचलन्नरेन्द्रतनयः शाकम्भरीमाययौ ॥१६॥

तं वृत्तान्तमितो[5] लिलेख यवनाधीशाय तल्लेखकः,
श्रुत्वैतल्लिखितं स पत्रमखिलं नोवाच किंचित्तदा ।

---

१ अभयसिंहम् ।  २ अङ्गेत्यामन्त्रणे ।  ३ शून्ये स्वरेऽदो मुहूर्तमददादिति योजना ।  ४ कुमारभटान्निर्हीयान् पुरुषानित्यर्थः ।
५ इतो नारनोलनगरात् ।

नीत्वा कान्यपि वासराण्यथ पुनः स्वीयैस्तु सैन्यैः सहाऽऽ-
रुह्याऽश्वं परिसज्ज्य सत्वरतया वीरः[1] प्रतस्थे ततः ।।१७।।

भण्डारी विजयाह्वय स्वसुभटैरासीत्तदग्रेसरः,
स्वेशेच्छामवगम्य सोऽध्वनि चलन्नून पुरस्तात् तत ।
आप्त्वा शाहजहाँपुर तदधिपेनाऽऽयुध्य, युद्धाच्च तं,
नष्टं वीक्ष्य विलुण्ठ्य तत्पुरधन प्रागात् कुमाराग्रतः ।।१८।।

नत्वा तच्चरणारविन्दमवदत् स्वेनानुभूतं पुरे,
वृत्तान्तं पुनरब्रवीच्छृणु विभो! त्वद्-दृग्निपातेन तु ।
श्रीमद्भिर्यदभीप्सित तदखिल जात, निवृत्याधुना,
गन्तव्य विजयप्रद स्वशिविरस्थान तु शाकम्भरी ।।१९।।

श्रुत्वा तद्वचन नरेन्द्रतनय सश्लाघ्य सत्कृत्य तं,
वीरस्तत्पुरबाह्यभागविपिनादेव प्रतस्थेऽभयः ।
भेरीं भूरि विनादयन् विजयदा सैन्यैः समं च व्रजन्,
घस्रैरेव कियद्भिरप्यथ पुरीं शाकम्भरीं सोऽगमत् ।।२०।।

श्रुत्वा शाहजहापुर कृतमहालुण्ठ च तत्पार्श्वगान्,
ग्रामान् खेटकखर्वटांश्च[2] दलितान्नष्टांश्च दूरे जनान् ।
दिल्लीपत्तनवासिनोऽपि धनिन केचित्तथा श्रेष्ठिन-
स्त्रस्ता केचन पारसीकधनिन किं वर्तिता[3] नन्विति? ।।२१।।

लुप्त शाहजहाँन्सज्ञकपुर म्लेच्छेश्वरो वै तदा,
दिल्लीपत्तनवासिनामपि भय श्रुत्वा स मौनं व्यधात् ।
कौर्मि स्वे हृदये महान्तमुदय दृष्ट्वा मरुक्ष्मापते,
श्रीचन्द्र सचिव स्वमस्य निकटे सधेः कृते प्रैषयत् ।।२२।।

---

१ अभयसिंह  २ खेटको लघुग्रामविशेष, खर्वटस्तु "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम्। मिश्रं तु खर्वटो नाम नदीगिरिसमावृतम्।" इत्युक्तलक्षणो ग्रामविशेष।  ३ नन्विति शङ्कायाम् किं वर्तिता भविष्यतीति (हेतो) अस्मा इति योजना।

स प्राप्याजयमेरसञ्ज्ञकपुरं गत्वा च राज्ञः सभां,
भूपं प्रार्थयत स्थितो विनयतः प्रोक्तं निजस्वामिना ।
तच्छ्रुत्वा निखिलं तदीयवचनं राज्ञा नहि स्वीकृतं,
प्रोक्तं च, प्रकृतौ कदाचन नृणां नोदेति रूपान्तरम् ।।२३।।

श्रुत्वेदं यदिहानुभूतमवदत् तत् स्वामिने कौर्मये,
तच्छ्रुत्वा स विमृश्य चेतसि परं श्रीश्यामसिंहं भटम् ।
आयामल्लमथाग्र्यमन्त्रिणमुपाहूयैतदेवावदत्,
स्यादैक्यं मरुपेण तत् प्रकुरुतं यन्मे हितेच्छू युवाम् ।।२४।।

इत्थं तावुपदिश्य मारवपतेः पार्श्वे स वै प्रैषयत्,
तावेवाजयमेरुमेत्य सहसा राज्ञः सभामापतुः ।
तत्पादावभिवन्द्य तस्य पुरतो भूत्वा विनम्रौ तथा,
प्राप्याज्ञां नृपतेर्निजोचितभुवि प्रीत्यान्वितौ तस्थतुः ।।२५।।

खाँघारिस्त्वथ कौर्मिभूपसुभटः श्रीश्यामसिंहाह्वयः
प्रोवाच स्फुटमेव तन्नृपतये यत्कौर्मिणोक्तं वचः ।
भूपः स्माह भटाग्र्य[1] कौर्मिनरपेणैक्यं कृतं प्राग् मया,
त्यक्त्वा तत्खलु बालवत् स सहसा म्लेच्छेश्वरं संश्रितः ।।२६।।

नूनं तद्वचनं मृषैव नितरामेवानुभूतं मया,
तस्माद् वीर ! विचारय स्वहृदये, यत्स्यात्तदैक्येन किम् ?।
प्राग् नाकारि मया न किं, ननु पुनः कुर्वेऽथ युष्मद्-गिरे-
त्युक्त्वा तद्वचनाद् विनीतिमधुरात् स स्वीचकारैकताम् ।।२७।।

खाँघारे सुरतानसिंह इति यो ज्येष्ठो वरिष्ठ[2] सुत-
स्तस्मै श्रीमरुभूपतिः पुरवरं नारायणाख्यं[3] ददौ ।

---

१ मरुभूप । २ महिष्ठो महामहिमशालीत्यर्थः । ३ 'नराना' इति प्रसिद्धम् ।

वासोभिश्च सुपूज्य तावपि तदा गन्तुं ह्यनुज्ञातवान्,
तौ तत्रोपगतौ प्रभुं जगदतुस्तत्रानुभूतं निजम् ।।२८।।

राजेन्द्रेण समं निशम्य सुतरामैक्यं पुरावत्कृतं,
दुर्गाधिपतिः प्रहर्षमतुलं स्वान्ते तदाऽधारयत् ।
तत्काल मरुभूभुजे प्रहितवास्तद्धन्यवादं शुभं,
भूमीशावितरेतर प्रददतु पत्रं तदारभ्य तौ ।।२६।।

भण्डारि रघुनाथमल्लकमयोद्दिश्यैव कार्यं निजं,
राजेन्द्रोऽजित आह्वयन्निजसुतं प्राक् सूचयित्वाऽभयम् ।
सुप्रीतोऽजयमेरुमेत्य मरुभूपालस्य पार्श्वे तया,
नत्वा तच्चरणारविन्दयुगलं तस्थौ तदीयाज्ञया ।।३०।।

राजेन्द्रेऽजयमेरुनाम्नि नगरे म्लेच्छेशसौधे वस-
त्येव द्वित्रसमा व्यतीयुरथ दिल्लीशस्य दूतोऽभ्यगात् ।
नाम्ना नाहरखां-नवाब इति विख्यातः परं दुर्मदो,
भूपालं स उपेत्य वाक्यमवदत् स्वस्वामिनोक्तं हि यत् ।।३१।।

श्रुत्वा मारवभूपतिस्तदुदितं नामस्त[1] किंचिद् यदा,
म्लेच्छोऽस्य नरपाय दुःसहतरामुक्तिं हि मर्मच्छिदम् ।
प्राहोग्रां किल तां निशम्य नृपतिर्याहीति तं चावदत्
स प्रोत्थाय जगाम वस्त्रनिलयं भूपो भटानादिशत् ।।३२।।

वीरास्तच्छिबिरं प्रविश्य सहसोद्यच्छस्त्रहस्ताः पुनः,
प्रोचुर्हन्तुमुपागताः स्म इह तत् त्वं प्रोद्यतास्त्रो भव ।
नानाहन्[2] किल सोऽपि, तेऽस्त्रपतनात्पारच्य सच्चर्मणा,[3]
स्वीयाम्त्रैस्तमिम निजघ्नुरभितोऽन्याश्चाच्छिदन् दु महान् ।।३३।।

---

१ न स्वीकृतवानित्यर्थः । २ न यवनेन्द्रदूतस्तानजिघ्नत् नाहन् प्राहन्त् । अवर्णस्यापि स्यात्तदर्शस्यापि वाऽजनावान् 'आटा यमहन" इत्यनेन नाऽऽत्मनेपदम् । ३ सत् शोभन चम फलक 'ढाल' इति ख्यातम्, तेन ।

नष्टा केचन पारसीकपतयो दिल्लीमुपेत्य द्रुतं,
म्लेच्छेशस्य पुरो विचुक्रुशुरलं हाहेति-कृत्यापराः[1] ।
स श्रुत्वाऽऽह न किंचनाथ मुगलान् दृष्ट्वा नवावान् पुन-
स्तानाज्ञापयदाशु, तेषु नहि कोऽप्यङ्गीचकारोदितम् ।।३४।।

शस्ताखाँ इति भूतले सुविदितो योऽभून्नवाबस्तदा,
ज्येष्ठस्तत्तनयो गुणैर्गुरुरिरादत्खाँनवाबस्तु यः[2] ।
आहूयाथ तमादिशद् मरुभुजा योद्धुं स दिल्लीश्वरो
वीर त्वं व्रज सत्वरं, तदुदितं नत्वा स शीर्षेऽदधात् ।।३५।।

म्लेच्छेशस्तु निजानुशासनपरं दृष्ट्वा प्रशस्याथ तं,
सत्कृत्योरुगजादिभिर्मरुधरां गन्तुं समाज्ञापयत् ।
सेनानीत्वमुपेत्य सोऽपि गणकं पृष्ट्वा सुविप्रं द्रुतं,
प्रस्थानं सुनवाबयूथतिलको भव्ये मुहूर्तेऽकरोत् ।।३६।।

आगत्याऽस्य बहिर्निजैः सह पुरोपान्ते समीक्ष्य स्थलं,
सार्धं म्लेच्छवरैर्निवासमकरोत् सुस्थापयन् सादिनः ।
आज्ञप्त्या यवनेश्वरस्य च परान् गृह्णन् नवावान् पथि,
गव्यूतिद्वयमेत्य च प्रतिचलस्तस्थौ स सैन्यैः पुनः ।।३७।।

नव्वावं यवनेश्वरस्तदनु वै सप्रैषयत् सत्वरं,
नाम्ना मह्मदवंगशं सुविदितं तं प्रत्यनीकाधिपम् ।
स्थित्वा तत्र सपादमासयुगलं कृत्वा प्रयाणं पुरो
ग्रामं चालहर्बादिनं स[3] पथिकानन्दप्रदं प्राप्तवान् ।।३८।।

श्रुत्वाऽऽयान्तममुं सुमन्त्र्य रघुणा सन्मन्त्रिणा तद्विदा,
प्रेष्य स्त्रीजनमादितो भटपुरं प्रत्यर्भकांश्चात्मजान् ।

---

१ हाहाकार क्रिया क्यप् । २ तं अनीकाधिपं सेनापतिं इरादत्खानवाब प्रतीत्यर्थः ।
३ इरादत्खा नवाब ।

संनह्य स्वभटैः समं च निखिलं. कृत्वा प्रयाणं त्रिभि-
ज्येष्ठै सूनुभिरेष नृपतिवर. शाकम्भरीमन्वगात् ॥३६॥

आहूतस्त्वरया तया च यवनेशेनाप्ययोध्यापुराद्,
विप्राग्र्यस्तु दयावहादुर इति ख्यात' स्वनाम्ना भुवि ।
तत्पार्श्वे गतवास्तदा किल तदाज्ञप्तो मुहूर्ते शुभे,
मासद्वन्द्वमनूष्य[1] चात्र[2] स इरादतखाँ चचाल स्वयम् ॥४०॥

आह्वद् दिल्ल्यधिपोऽय गुर्जरधरापाल निजाज्ञारतं,
नव्वावाग्रसर तु हैदरकुली कृत्वाजमेराधिपम् ।
राज्ञा योद्धुमितो व्रजेति तमशादाज्ञा[3], मुदा प्राप्य स,
सनह्य स्वभटैश्च सादिभिरल साह्याय तं[4] सगत ॥४१

कौमिम्लेच्छपतेर्निदेशत उपायान्तीं तदा यावनीं,
सेना तामवगम्य वीरनिकरान् नृपान्तिके प्रैषयत् ।
राजेन्द्राय च पत्रमेकमददादित्याशयज्ञापि यद्,
"स्व सैन्य भवदीयपार्श्वमखिलं सप्रेषयिष्याम्यहम् ॥४२॥

म्लेच्छोर्वीशपतेर्निदेशत इतो म्लेच्छा समायान्त्यमी,
तस्माद् यूयमुदायुधा अभिमुख ह्यषामुपायात भो ! ।
मत्सेना त्वखिलेव युद्धसमये दृक्-संमुखे दृश्यता-
मित्यालिख्य सुमित्रता प्रकटिताऽम्बावत्यधीशेन वै ॥४३॥

रैवाडीमुपगम्य तत्र स इरादतखाँ-नवाव स्वयं,
तस्थौ ते यवनेश्वरेण च पुन सप्रेषिता' मत्वरम् ।
नव्वावास्तमुपेत्य तत्सहचरा जाता स्वसैन्यान्विना,
तच्छ्रुत्वाऽजितसिंहनृपतिरपि द्राक् प्राप तत्समुखम् ॥४४॥

---

१ निवास कृत्वा ।    २ पूर्वोक्ते स्थाने ।
३ आज्ञापयत् ।    ४ इरादतखाँ-नवाबम् ।

किंचित् किंचिदजस्रमेव चलिता म्लेच्छा हि यावद् ययु-
स्तावद् योधपुरेश्वरोऽप्यनुदिन गच्छस्त्रिवेणीं ययौ ।
गव्यूतित्रयमात्रमेव समभूत् तत्सेनयोरन्तरं,
कौमिस्तावदुपेत्य तत्पृतनयोर्मध्ये ह्युपातिष्ठत[1] ॥४५॥

संनह्याशु ससैनिको मरुपतिर्युद्धाय तत्सम्मुखो
भूत्वाग्रे प्रचलस्तु यावदचिराद् गव्यूतिमात्रं गत ।
तावत्कौमिभटा उपेत्य तमिति प्रोचु प्रणम्याग्रतो
राजन् म्लेच्छनृपेण कौमिरधुनाज्ञप्तोऽग्रगीभूतये[2] ॥४६॥

सेनाग्रेसरता ततो गत इह प्राप्त स तस्याज्ञया,
युष्मत्पादमिता वय, च भवते यत्कौमिणोक्तं शृणु ।
भूपाऽह यवनाधिपेन सहसाज्ञप्तस्त्वमग्रेसरो
भूत्वा सानुनय मरुक्षितिभुजा संधि कुरु स्याद् यथा ॥४७॥

तस्माद् यातु भवानित खलु परावृत्य त्रिवेणीं प्रभो!
म्लेच्छेशेन सम यथा हि भवत संधिर्भवेद् द्राक् तथा ।
पर्याप्तं प्रयतामहे न्वितरथा क्रोधादुदस्तास्त्रयो-
र्युद्धे प्रस्तुत आवयो सुमहती हानिर्नृणां भाविनी ॥४८॥

कौमेर्मुख्यभटो झलायपुरपो यो दौत्यमाप्यागत,
प्रोवाचेति निहत्य मां प्रथमतो योद्धु व्रजेः कौमिणा ।
पश्चात् कौमिनृप जहीह सभट, क्षेप्यन्ति ते त्वद्भटा-
नित्थं म्लेच्छनृप स हिन्दुजनता हन्तुं मिथश्चेष्टते ॥४९॥

प्रोक्तं तस्य निशम्य मारवनृप स्वान्ते विमृश्येति यद्,
हिन्दूनामुदय न तु क्षयमह त्वायोजयेऽस्या भुवि ।

---

१ अत्र उपात् स्थोऽकर्मकत्वात् 'अकर्मकाच्च" इत्यात्मनेपदम् ।
२ सेनाग्रगीभवितुम् ।

तन्नूनं स्वयमेव तद्विहननं[1] जानन् प्रकुर्यां कथं ?
    निश्चित्यैवमतीव साधु स परावृत्याजमेर ह्यगात् ।।५०।।

आगत्य त्वरयाऽजमेरनगरं भूपाल औदावर्ति,
    प्रोचे त्व गिरिवप्रमाश्रय भटै सनह्य सैन्यै समम् ।
श्रुत्वोक्तं तु निजप्रभोरमरसिंहाख्यो भट कौशलि ,
    क्षिप्रं वप्रमुपारुरोह सुभटै. सार्धं सुतेजा स्वयम् ।।५१।।

आरुह्योच्चमहीधर तममर प्राकारमाविश्य च,
    विष्वग् वीक्ष्य च यत्र-तत्र सुभटान् सद्-दह्नियन्त्राण्यपि ।
द्राक् संस्थाप्य सुसज्जितोऽभवदथो म्लेच्छाः पुर प्राविश-
    स्तन्नव्वाववल च तद्-गिरितटप्रान्ताऽवनीमग्रहीत् ।।५२।।

मुञ्चन्तो यवनास्तु गोलनिकरान् यत्नेन वह्नयस्त्रत ,
    प्राकारस्य गिरेरधोऽङ्गणगता केचित्, परे भित्तिगा ।
केचित् केचिदथाऽरक्षव उपर्याविध्य भित्तीर्नवा
    आयुध्यन्त दिवानिश दृढधिया युद्धे जयाभीप्सव ।।५३।।

तद्धित्यन्तरमेत्य तत्र च पुनर्युद्धं प्रचक्रु परे,
    म्लेच्छा यत्नपरा गिरिं तमभितो लग्ना समायुत्सत ।
केचित् तेषु ययुर्विनाशमपरे तत्रैत्य तस्युस्तयाऽ-
    मुञ्चन्नन्वहमग्नियन्त्रमुखनिर्यातास्तु गोलान् परान् ।।५४।।

क्षत्रा [2]वप्रजुषोऽग्नियन्त्रवदनोद्भूतैस्तु गोलैरपि,
    भूमिष्ठान्[3] यवनान् प्रचिक्षिपुरध प्रोड्डीयमानं परम् ।
वप्रस्थैर्बहुशोऽग्नियन्त्रकुहरप्रोद्भूतगोलैरपि,
    प्रक्षिप्ता यवना. स्वसाहमयुता युद्धक्रिया नामुचन् ।।५५।।

---

१ तस्य हिन्दूनामुदयस्य विहनन ज्ञानम् । २ प्राकारस्था ।
३ "अम्बाम्बगोभूमि" इत्यादिना तस्य पत्रम् ।

इत्थ ते यवना अहर्निशमधोभूमिस्थिता वप्रगै-
र्युध्यन्ते स्म, सुदुर्जय च मनसा प्राकारमालोक्य च ।
प्रोचु कौर्मिमुपेत्य, देव कुरु तत्, सधिर्भवेद् भूभुजा[1]
येनास्माकमथो, स वप्रमधुना युद्ध विनैवार्पयेत् ।।५६।।

ढूंढाडाधिपतिर्निशम्य वचन म्लेच्छैर्यदुक्त हि तद्,
ध्यात्वोद्बोध्य[2] च मारवाडपतये सप्रैषयन्मन्त्रिराम् ।
सोऽप्येत्याजितमीश्वरं निजनृपेणोक्त द्रुत ज्ञप्तवान्,
वप्र देहि नरेन्द्र! नो यदि तु मा[3] म्लेच्छ क्षति नेष्यति ।।५७।।

जामातुर्वचन निशम्य नृपतिर्ध्यात्वेति बुद्धया तथा,
'नास्मै म्लेच्छपति प्रकुप्यतु, हित भूयाच्च वप्रेऽर्पिते ।
दत्ते चात्र सुदुष्करं मम नु किं, स्वैर ग्रहीष्ये पुन-'
स्तत्प्रत्यर्पणसूचिनीममरसिंहायाऽददात्पत्रिकाम् ।।५८।।

पत्र प्राप्य निजप्रभोस्तमधिगम्यादेशमौदावति-
र्धृत्वा शीर्ष्णि पुन स्वपत्रमददादेवविध स्वामिने ।
राजेन्द्राजितसिंहभूपतिमरणे[1] वप्र प्रदास्ये मृत ,
प्राग्वद् वप्रगतोऽथ[4] गोलनिकरान् प्रारब्धवान् वर्षितुम् ।।५९।।

दृष्ट्वैवं जयसिंहभूम्यधिपतिस्तूदावनोपेक्षरा,
श्रीचन्द्र निजमन्त्रिरा प्रहितवास्तज्ज्ञप्तये[5] त प्रति ।
नत्वाजिज्ञपदेत्य सोऽपि मरुप प्रोक्त हि यत् कौर्मिणा,
सोऽप्यन्यं भटमाह, साध्वनुनय त्व वीरमेन[6] त्विति ।।६०।।

वप्रं प्राप्य स आह, वीरममर[1] त्वामाह राजेश्वर,
ख्यातं त्वत्सुभटत्वमत्र निखिले भूमण्डले विस्तृतम् ।

---

१ नृपेण (अजितेन) । २ मन्त्रिणमुद्बोध्य स्वाभिप्रेत बोधयित्वेत्यर्थ । ३ ढूंढाराधिपतिमित्यर्थ । ४ पत्रप्रदानानन्तरम् । ५ तज्ज्ञप्तयेऽमरसिंहोदावतकृता तदुपेक्षा सूचयितुमित्यर्थ । त मरुभूपति प्रति । ६ एन अमरसिंहोदावत तु त्व साधु इतीत्थ अनुनयेत्याह ।

अस्मात्ते नहि कोऽपि जित्वरमणे[1] दोषो, ममैवाज्ञया,
प्राकार द्रुतमर्पय स्वकुशलोन्नत्यर्थिने कौर्मये ।।६१।।

गत्वा तेन तथोदितोऽमरभटः प्राप्येश्वराज्ञा पुन ,
प्राहूयान्तिकमाशु कौर्मितिलकं, वप्र प्रदाय स्वयम् ।
वादित्रैर्मु दितोऽवतीर्य मरुपस्योदारतां दर्शयन्,
गच्छन् वै पुरमध्यतो जयरवै प्रागादिरादत्पुर ।।६२।।

वीर. सोऽमरसिंह एत्य हि नवाबस्याग्रत. सत्वर,
तेनाऽल खलु सत्कृत पुनरगाच्छ्रीमेडताख्यं पुरम् ।
प्राप्य स्वेशमथाभिनम्य विनयात् तत्पादपद्म पुन-
र्नीतस्तेन सुमानमप्यनुमतस्तत्रैव तस्थौ तत' ।।६३।।

प्राकार प्रतिपद्य कौर्मिरददात् सम्राड्बलस्वामिने,
वप्र प्राप्य तथा प्रविश्य यवनाश्चक्रुस्तदैवात्मसात्[2] ।
तत्राथाजयमेरुसञ्ज्ञकपुर सप्राप्य तस्थुर्मु दा,
सधि चेच्छव एव तन्नृपतिना कौर्मि मुहु प्रोचिरे ।।६४।।

राजन्! म्लेच्छपतेर्मरक्षितिभुजा सधिर्यथा स्यात्तथा,
यत्न त्व कुरु सद्य एव हि यथा मीरुल्-नवाब सुधी ।
नीत्वैवय स/नृपस्य पूर्वतनय कृत्वा पुरस्तात् स्वय,
सम्राजा सममेलयत् सुमिलितस्वान्तेन सार्धं पुरा ।।६५।।

इत्य सधिविधानमाकलयितु ते कौर्मिमाबोधयन्,
कर्तव्य यतन तथा खलु यथा तत्पुत्र एयादिह ।
श्रुत्वा कौर्मिरपि प्रयत्नमकरोत् तत्पुत्रहेतोस्तथा,
श्रीचन्द्र च पुन. पुन स्वसुहृद नृपान्तिके[3] प्रैषयत् ।।६६।।

---

१ जेतृरत्न ! । २ आत्माधीनम् ।
३ अजितनृपसमीपे ।

सोऽप्यासन्नमुपेत्य मङ्क्षु तमिनि व्यज्ञापयत् सादरं,
राजेन्द्रैवयमखण्डमेव भवता दिल्लीश्वरो वाञ्छति ।
स्वीयं ज्येष्ठसुत यदि प्रहिणुयास्तत्प्रत्ययार्थं[1] मया,[2]
तर्हि स्याद् भवता मदीयमखिल पूर्ण हित वै कृतम् ॥६७॥

कौर्मस्तां नृपतिर्निशम्य नितरां विज्ञप्तिमेतां कृतां
नैव स्वीकरण निराकरणमप्याख्यातवान् किंचन ।
श्रीचन्द्रोऽपि निजानुभूतमखिल स्वस्वामिनेऽवर्णय-
च्छ्रुत्वा सोऽपि[3] सखेदमाह यवनान्, सधिस्त्वभून्नो इति॥६८॥

प्रोक्तं तस्य निशम्य तेऽपि यवनाश्चक्रुः प्रयाण तत-
स्तस्थुः प्राप्य समन्ततश्च बुधवाडाख्ये पुरे तत्र वै ।
एक पक्षमनूष्य[4] सैन्यनिकरैर्मार्गे चलन्त क्रमाद्,
रीयाँनाम पुर प्रपद्य रुचिर तत्र न्यवात्सुमुदा ॥६९॥

रीयाँनाम्नि पुरे निशम्य यवनान् प्राप्तांस्तदा भूमिप,
समन्त्र्याथ सुमन्त्रिणा स रघुणा ज्येष्ठ सुत चाभयम् ।
प्राह त्व रघुणा सम च सुभटैर्गत्वा पुरस्ताद् द्रुत,
रात्रौ तान् परितोऽभिपत्य समर कृत्वा च हत्वाऽऽव्रजे[5] ॥७०॥

प्राप्याज्ञा स्वपितुर्निधाय शिरसा नत्वा तदङ्घ्री अथो,
आरुह्य स्वतुरगमं निजकरे धृत्वा च शक्ति पराम् ।
वीरौघै रघुणा सम च सहसा कृत्वा प्रयाण मुदा,
डाँगावासमुपेत्य वासमकरोद् वीराग्रणीः सोऽभयः ॥७१॥

तच्चारास्तु[6] पृथक् पृथग् निजनिजाध्यक्ष प्रपद्य द्रुत,
तत्स्पष्टाशयमूचुरित्थमभयो रात्राविहायास्यति ।

---

१ दिल्लीश-विश्वासार्थम् । २ मया (कौर्मिणा मह्) ।
३ कौर्मिरपि । ४ अनु+उष्य निवास कृत्वेत्यर्थ ।
५ तान् हत्वाऽऽव्रजेरागच्छ प्रतिनिवर्तस्वेत्यर्थ । ६ तेषा यवनाना चारा ।

तस्मादुद्धतवीरवीर्यनिकरैर्यत्न कुरुध्वं युधे,
ढूँढाडेशमुपेत्य तेऽपि यवना प्रोचु. स्वचाराच्छ्रुतम् ।।७२।।

श्रीचन्द्र निजमन्त्रिण स सहसाहूयोपदिश्य द्रुतं,
राठोरेन्द्रसमीपमेतुमशिषन्नून निशाया मुखे ।
सोऽप्येत्य प्रणिपत्य भूपपुरतो विज्ञप्तवान् युक्तिभि-
र्युद्ध नास्त्विति,तत्तथास्त्विति मतं तेनाऽपि[1] स[2] प्रत्युपैत्[3] ।।७३।।

रात्रौ नो अभयोऽपि भूमिप[4]निराकृत्याऽभियोद्धु गतः,
श्रीचन्द्र पुनरेत्य मारवपति प्राह प्रभो! श्रूयताम् ।
स्वामी नोऽभयमिच्छति प्रभुसुत द्रष्टु यत सोऽधुना,
कन्या दित्सति[5] देव! देहि सहसा ह्याज्ञा कुमाराय तत् ।।७४।।

विज्ञप्ति तु परा निशम्य नृपतेस्तस्याग्रह चापर,
दृष्ट्वेश सुतमादिशद्धि कमठाधीशेन धीमन्! मिल ।
प्राप्याज्ञा स पितुस्तदैव गमनं कृत्वा कुमारो द्रुत,
वीरैं सार्धमियाय, त स नृपति प्रीत्यालिलिङ्ग स्वयम् ।।७५।।

प्राप्ते श्रीजयसिंहपार्श्वमभये म्लेच्छा प्रहर्षान्विता
आगत्य त्वरया तदीयनिकट नैर्मुविनम्रानना ।
गत्वेरादतिखां-नवाव-पुरत कौर्मि कुमार तदा,
प्रीत्याऽमेलयदाशु सोऽपि बहुश संमानयामास तम् ।।७६।।

दत्त्वेभ तुरगान् पटाश्च कनक त्वं मेऽसि भो! भ्रातृज
इत्युक्त्वा बहु मानयन् स[1] शिविर गन्तु तमुत्सृष्टवान् ।
प्रातस्तच्छिविर समं नृपतिनेरादन्नवावोऽप्यगात्,
स्तोकं तच्छिविरं निरीक्ष्य वसनावाम च नव्यं ददौ ।।७७।।

---

१ राठोरेन्द्रेणापि । २ श्रीचन्द्र ।
३ प्रतिनिवृत्त । ४ अजितनरेशम्य निषेधेन ।
५ दातुमिच्छति । ६ इरादतखां ।

म्लेच्छास्ते सह कौर्मिणा नृपकुमारेणाऽपि समन्व्य च,
रीयाँपार्श्वत आशु दूर-गमनं कृत्वाऽजमेर ययु ।
स्थित्वा तत्र तु वासराणि कतिचित् स्वाम्याज्ञया तत्र च,
संस्थाप्याथ नवाबहैदरकुली चेलुस्ततस्ते स्वयम् ॥७८॥

गत्वा प्राक् किल जोवनेरनगर कौर्मिर्जगादाभय,
श्रीमन्नारचयाम्यहं निजपुरेऽभीष्ट[1] विवाहोत्सवम् ।
श्रुत्वोचुर्यवना, न, पूर्वमभय दिल्ली नयामो वय,
द्रष्टु ह्येनमजस्रमिच्छति हृदा दिल्लीश्वरो मह्यद ॥७९॥

श्रुत्वेत्थ क्षितिपालसूनुरभय कौर्मि विनीतोऽवदद्,
राजन् ! प्राग् यवनेश्वरस्य पुरतो गत्वा च दृष्ट्वा च तम् ।
कृत्वैक्य सह तेन देव-रुचितोद्वाहार्थमेव द्रुत,
प्रत्येष्यामि महीपते! पुरवर श्रीमन्निवासाङ्कितम् ॥८०॥

श्रुत्वा कौर्मिरुवाच वीरमभय स्ताद् मङ्गलं गम्यताम्,
कृत्वैवय यवनेश्वरेण सममुद्वाहार्थमागम्यताम् ।
भूपालेन्द्रकुमारकोऽथ यवनं सार्धं तु दिल्लीं ययौ,
कौर्मीन्द्रो मथुरान्तमेत्य च तदा तत्रैव सैन्यै स्थित ॥८१॥

दिल्लीं प्राप्य नवाब एष स मरुक्षोणीश्वरस्यात्मज,
निन्ये म्लेच्छपते समीपमनघं समेलयामास च ।
सोऽदाद्दन्तितुरङ्गवस्त्रनिचय सप्रीति तस्मै ततः,
प्राप्याज्ञा यवनेश्वरात् स तु सुखं तस्थौ निवासे निजे ॥८२॥

इति श्रीभट्टजगज्जीवनविरचिते
अजितोदये महाकाव्ये
एकोनत्रिंशत्तिनम सर्ग समाप्त ।

---

१ भवता सह कन्याया इदमभिप्रेतमित्यर्थ ।

# एकत्रिंशः सर्गः

प्रस्थाप्य स्वकुमारवर्यमभय सूद्वाहहेतोर्मुदा,
    भूपेन्द्र किल मेडतानगरत. कृत्वा प्रयाणं पुन' ।
गत्वा योधपुर प्रपद्य सुमहद् वप्रं प्रविश्योच्छ्रित,
    सौध दीप्ततर ननन्द नितरा प्रोद्यत्प्रतापोऽर्कवत् ॥१॥

मासानामिति सार्धषट्कमगमद् राज्ञ' सुखं तिष्ठत.,
    साँचोरीयनृप. कदापि तनया दित्सुर्नृपाय स्वयम् ।
चौहान समुपेत्य मर्वधिपतिं व्यज्ञापयत् स्वाशय,
    स्वीकृत्याऽस्य स वप्रनिम्नग[2]महासौध तमावासयत् ॥२॥

श्री विष्णो शयन निरीक्ष्य निकट-प्राप्त नरेन्द्रस्तदा,
    स्वोद्वाहाय [3]शुचिस्थशुद्धनवमीमङ्गीचकारेष्टदाम् ।
प्रारम्याथ विवाहकृत्यमखिल ससज्ज्य योग्यैर्जनै,
    सम्यक्कुवङ्मरक्तचारुवसनान् सैन्यास्तदाऽकारयत् ॥३॥

राजेन्द्र शुशुभे सुवर्णरचित वस्त्र वसित्वा पुन-
    र्धृत्वा मूर्ध्नि महर्घ्यरत्नमुकुट[4] दीव्यत्प्रभामण्डितम् ।
मुक्ताहारभराभिशोभिविपुलोरस्को महर्घ्योल्लस-
    न्माणिक्याक्तचतुष्क-दाम[5]परित -प्रोद्भासिवक्ष स्थल ॥४॥

पूर्वीयान् पुरतो विधाय विलसद्वह्लयस्त्रहस्तान् पुन.,
    पश्चाद् धारितकेतनायित-शिखाप्रोल्का-प्रदीपान्नरान् ।
तत्पृष्ठे बहुदुन्दुभिप्रमुख-सद्वादित्रकान् सादिनो
    मत्तेभोपरिगान् कुमारनिचयास्तत्पृष्ठतोऽचालयत् ॥५॥

---

१ शुभविवाहार्थम् ।  २ दुर्गाऽध स्थित महद् राजसदनम् ।
३ आषाढस्य शुक्लनवमीम् ।  ४ महर्घ्याणि रत्नानि यस्मिन्नथोक्त यन्मुकुट तत् ।  ५ चतुष्कदाम चतुष्कोणस्वर्णपत्र-माला (कंठचौकिनी रा कंठरा) तेन परित प्रोद्भासि सर्वतो-भास्वर वक्ष स्थल यस्य स ।

नर्तक्योऽपि च गीतनृत्यनिपुणा नृत्यन्त्य उच्चैस्तरां,
गायन्त्योऽजितसिंह-पार्थिवयशो यान्ति स्म तत्समुखम् ।
तच्चेटा धृतरूप्यलम्बिलकुटाः सत्सादिनोऽनेकशो
भूपालं परितोऽगमन् प्रतिपदं भ्राजिष्णुपीतांशुका ॥६॥

तन्मध्ये किल हेमभूषणलसन्मत्तेभराजोपरि-
स्वर्णाध्यासनगो व्यराजत नृप प्रोद्यत्प्रताप. स्वयम् ।
तद्विष्वग्[1] बहुशो ययु सुवमना दीप्तोच्चदीपा जना-
स्तत्पृष्ठे विकटा भटाः प्रतिदिनं स्वामिप्रियाणोच्छ्रव ॥७॥

भूपालस्तु शनै शनै. प्रतिचलन् पश्यन् समन्ताच्छुचे-[2]
र्हस्ताभ्यां परितो भृश वसुचयानर्थिभ्य उत्सर्जयन् ।
प्रागात् सौधममन्दतोरणमथावन्द्याऽविशद् मध्यतो
मातृणा च गजाननस्य यजन चाकारयत्त द्विजा ॥८॥

सौधान्तश्च सुनीय चत्वरगले सम्यग् महामण्डपे,
ते विप्रा उपवेश्य तत्र मुदितौ तौ दम्पती प्राङ्मुखौ ।
सस्थाप्य ग्रहमण्डलं गणपतिं कुम्भ च वेदोक्तिभि-
र्हुत्वाऽग्नौ च परिक्रमा तदनु वै ताभ्या तदाऽकारयन् ॥९॥

सस्थाप्य क्षितिप पुनर्नववधू तद्वामभागे द्विजा
उक्त्वा सप्तपदीं विमुच्य च करौ पूर्णं प्रचक्रुर्विधिम् ।
पश्चात् सोऽवनिनायको बहिरुपेत्यारुह्य सद्वारण,
साप्यारुह्य नृयानमानकरवैर्दुर्गं ह्यगातामुभौ ॥१०॥

प्राप्याथ क्षितिपालभालतिलको वप्र गिरेरुत्सवं-
र्वादित्रैर्मुदित प्रविश्य सदन तत्र व्यराजत्सुखम् ।

---

१ नृप परित इत्यर्थ ।
२ शुचेर्निश्छन्नस्य पुरुपस्य (हस्ताभ्याम्)।

सद्यः प्रातरसौ प्रबुध्य विहितस्नानोऽर्चयित्वा हरिं,
भक्त्या स्वैर्विकटैर्भटैः परिकरैर्युक्तः स्म भुङ्क्ते मुदा ॥११॥

इत्थं मुनि-गजेन्द्र-वाजि-हरिणाङ्काङ्कोन्मितेऽब्दे[1] शुचौ,
मासेऽस्मिन् नवमीतिथौ परिणये पूर्णे सत्स्वामिनः ।
द्वादश्यां गजवक्त्र-भानु-पुरतस्तस्याभिमुख्यः स्त्रिय-
श्चक्रुर्जागरणं हि गाननिपुणास्त्रीभिः समं संमदात्[2] ॥१२॥

राजस्त्री-परिचारिकाः सुबहुशोऽन्या विप्रपत्न्यस्तथा,
सौधे जागरमित्यकार्षु रजनिं प्रोत्थाय भूपोऽवदत् ।
सर्वा यूयमितो व्रजन्तु निलयं स्वं स्वं शयिष्येऽधुना,
तस्मात्ताश्च विसृज्य ता इति[3] गता स्वयन्तु ययौ मन्दिरम् ॥१३॥

निद्रान् स्वयमेव भो अनुचरा! उद्बुध्य चात्मेच्छया,
प्रोत्थास्यामि न कश्चिदेत्य हि पुमान् मां जातुचिद् बोधयेत् ।
प्रोच्यैवं शयनं चकार नृपतिस्तत्पादपद्मं पुन-
र्दास्यौ द्वे अनुकूलमेव विनयात् संवाहयांचक्रतुः ॥१४॥

किंचिद्रव्युदयेऽथ तस्य वनतोऽवाच्याद् महोपद्रवाद्,
राजेन्द्रस्य हि मृत्युरीदृगभवद् यादृग् न कस्याप्यभूत् ।
जातेऽस्मिन् मरणे बभूव च परः कोलाहलोऽन्तःपुरे,
राज्यः स्वस्वनिवासतो द्रुततरं द्रष्टुं समेयुर्नृपम् ॥१५॥

यावत्तत्र मृतं पतिं[4] प्रददृशू राज्योऽथ सर्वाः स्त्रियः,
तावद् भूरि विचुक्रुशु स्वहृदयं घ्नन्त्यः कराभ्यां मुहुः ।
किं दैवेन दयाविना समपनिनीतोऽधुनैवाद्य हा!
तेनास्मद्विमुखेन हन्त! नु वयं वैधव्यमापादिताः ॥१६॥

---

१ १७८१ तमेऽब्दे ।
२ हर्षाद् ।
३ इत्युक्त्वा गता- सर्वाः ।
४ प्रियं स्वामिनं च ।

सूनु श्रीरघुनाथमन्त्रिण इतोऽभूपस्तदैव द्रुतं,
रौप्याणां शतकं हि सार्धममल सज्जाङ्घिकान्या ददत्[1] ।
उल्लिख्य क्षितिपान्तवृत्तमखिलं दिल्ली प्रति प्रैषयद्,
धावन्तौ त्रिदिनान्तरेण किल तौ तां राजधानीं गतौ ।।१७।।

वप्राध पुरवासिनश्च सुभटा व्यासा. पुरोधोमुखा ,[2]
सप्रापुर्विनिशम्य नृपमरणाऽसद्वृत्तकोलाहलम् ।
तावत्तन्नृपपार्श्वतः स्वनिलयं राज्यो ययुर्दु .खिता
मुख्यास्त्वन्तरमेत्य वीक्ष्य नृपति जाता प्रनष्टा इव ।।१८।।

पौराद्या[3] नृपदेहकृत्यमखिल कृत्वाऽचिरादग्रतो
नूनं दिव्यमलौकिकं सुरुचिर दृब्ध्वा[4] विमान पुन. ।
हैमैरम्बरभूषणैर्नृपशवं सम्भूष्य गन्धादिना,
तस्मिन्न्यस्य बहि सयत्नमनयन् प्राक् स्नातवन्त. स्वयम् ।।१९।।

राज्ञी जैसलमेरनामनगराधीशाऽमरस्यात्मजा,
स्नात्वाऽध्यास्य नृयानमाशु निरगादुत्कण्ठिता[5] मानसे ।
श्रीदेरावरभूपतेस्तु दलमानाम्नि सुताऽऽस्नाय चा-
भूष्य स्वम्बर-भूषणैर्निजतनुं यानेन साऽप्याययौ ।।२०।।

श्रीचौहानमणी-चतुर्भुज-सुता स्नात्वा विभूष्याम्बरै-
र्गात्र सद्य उपाययौ नरमहायानेन सूत्कण्ठिता ।
राज्ञी चावडभूपतेश्चपृथिवीराजस्य पुत्री द्रुत,
स्नात्वाभूष्य विभूषणैर्निजतनूं यानेन तत्राययौ ।।२१।।

अन्या तू वरभूपतेस्तु तनया स्नात्वा स्वयं हर्षत
आभूष्याम्बरभूषणैर्निजतनूं यानेन तत्रागमत् ।

---

१ जाङ्घिकौ जङ्घाजीविनौ शीघ्रगामिनौ सदेशहरौ, ताभ्याम् ।
२ पुरोहितादय । ३ पौर-पुरोहितादय । ४ ग्रथित्वा ।
५ पतिमार्गमनुमर्तुमिति भाव ।

श्रीशेखावतशक्तसिंहनृपतेर्मुख्यात्मजाऽप्युत्सुका,
स्नात्वा वर्ष्म विभूष्य भूषणपटैर्यानेन तत्राव्रजत् ॥२२॥

तासा सत्परिचारिका निज-निज-स्वामिन्युपस्थायिका-[1]
स्तत्रैपु किल या नृपस्य च सदा छन्दानुगा पार्श्वगा ।
अग्रेऽगुः खलु वारणा नृपपताकालंकृताः शोभना-
स्तत्पृष्ठे सतत विचेरुरखिला, ये पाद-सचारिण. ॥२३॥

नर्तक्योऽथ च नृत्यगीतनिपुणा नृत्यन्त्य ऊनाशया
गायन्त्योऽजितसिंहभूपतियशो वाष्पाम्बुवर्षाङ्कितम् ।
दाक्षिण्यादिगुणान् स्वभावममल स्मृत्वा मुहुर्दु खिता
भूपालेन सहैव यातुमखिला जाता समुत्कण्ठिता. ॥२४॥

राजेन्द्रस्य पुरोऽथ वैष्णवजना सद्भाव-सदर्शिन.
सत्पद्यानि पुरातनानि कतिचित् तालानुसार जगु. ।
केचित् पार्श्वगता पठन्त्यनुशव प्रेम्णा स्म रोमाञ्चिता,
पापघ्नानि विमुक्तिदानि च नृणा नामानि विष्णो परम् ॥२५॥

श्रीवृन्दावनचन्द्र। माधव। मुकुन्देन्द्रानुज। श्रीहरे।
श्रीराधारमणाऽच्युतेश। विलसद्-गोपीजनानन्दकृत्। ।
गोपालव्रजनायक[2]। व्रजपते। दीनानुकम्पिन्। विभो!
श्रीगोवर्धननाथ। गोकुलपते। दामोदर। त्व जय ॥२६॥

राजेन्द्रस्य विमानयानमनु तु क्षत्रा. प्रचेलु स्फुटं,
भूपालस्य समन्तत समुदिता[3] सादिन्य एवाचलन् ।
गायन्त्य सुयशासि तस्य नृपते. काश्चित्तु वद्धादरा
गायन्यो[4] नृपसौधवासनिरतास्तत्समुत्सीना. पुन ॥२७॥

---

१ स्वस्वभर्त्रीमिविन्य इत्यर्थ । तृजकाभ्या कर्तरी' ति निषधेऽपि शेषषष्ठ्या समास । २ व्रज समूह । ३ समुदाय-सवद्धा ।
४ गान-कारिण्य । 'ण्युट् च' इति ण्युट् कर्तरि ।

ग्रीष्मग्रीष्मनिवारणाय परितः श्यामाभ्रजालैर्नभ,
प्रच्छाद्य त्वरया ववर्ष च शनैर्देवो निषिञ्चन् धराम् ।
भूपालस्य विमानमग्र्यसुभट स्कन्धे वहन्त क्रमा-
च्छास्त्रेषु प्रथितं सुतीर्थममलं मण्डोवर प्राप्नुवन् ॥२८॥

सर्वे ते तु शनै शनै शवयुता गत्वाऽथ मण्डोवर,
तत्र प्राप्य नदीमघोपशमिनीं नागाधरी-सञ्ज्ञिकाम् ।
तस्या सत्सहकारवृन्दलसित तीर समेत्यामल,
चक्रुर्भू मिविशोधन च सुमहत् काष्ठालय शोभनम् ॥२९॥

भ्राजत्स्वर्णमयाम्बरावृतमथास्तीर्यासन मध्यत-
स्तत्र क्षोणिपतेः शव न्यधुरिमे लोकाश्च, तस्याग्रत ।
राज्ञ्यस्तस्थुरखण्डभाग्यविभवास्ताश्चाभितोऽन्या स्त्रियो
नून वर्षवरौ वरौ तदनु तन्मध्ये पृथक् तस्थतुः ॥३०॥

श्रीनारायणरूपिण निजपति राज्ञीश्रियो हृत्कजे,
दध्युर्ध्यानपरायणास्तमपरा कृष्ण यथा गोपिका ।
गायन्त्यो नृपतेर्यशश्च किल ता- प्रीत्या विरेजु परं,
संस्कारं ज्वलनेन तावदकरोदानन्दसिंहाह्वय ॥३१॥

राज्ञ पदं च तथैव विंशतिमिता दास्यादयो वै तथा
नेदिष्ठा [1] सहचर्य आश्रितपदा वेदोन्मिताश्चापराः [2] ।
सम्यग्गानपरायणा रविमिता [3] नेत्रोन्मिते [4] पार्श्वगे,
नर्तक्य खलु पञ्च पुंस्त्वरहितौ द्वौ चेति सार्धं गता [5] ॥३२॥

या राजाधिपतेर्वरा प्रियतमा राज्यस्तु तासा पुरो
या नित्यं विधृतोच्चवंशलकुटा उत्सारयन्त्यो नरान् ।

---

१ समीपतमा । २ चतस्र । ३ द्वादश ।
४ द्वे । ५ स्वर्गमिति शेष ।

सादिन्य पथि सादरं समचलंस्ता एव नागोन्मिता[1]
दास्य: पञ्चबहिर्गमास्तदपरा राठोडजेत्यप्यगु[2] ॥३३॥

ज्ञात्वोपद्रवमागत दितिभुवा[3] सर्वेषु देवेष्विति,
क्षोणीशाधिपति सतीभिरमलस्वान्ताभिराभि समम् ।
दीव्यद्दिव्यविमानयाननिकरैरिन्द्रोऽप्सरोभिर्यथा,
चञ्चच्चामरवीजितो मरुपतिः स्वर्गं जगाम द्रुतम् ॥३४॥

इति श्रीपण्डितवरजगज्जीवन-
भट्टविरचितेऽजितोदये महाकाव्ये
एकत्रिंशत्तम सर्ग समाप्त ।

---

१ अष्टौ । २ इत्यपि तत्तत्स्वरूपनिर्दिष्टा एता अपीत्यर्थं । अगु मार्धं स्वर्गता । ३ दैत्यानाम् ।

# द्वात्रिंशः सर्गः

संस्कृत्येशं जनास्ते वपनमनुविधायाऽथ संस्नाय सम्यग्,
नागाधर्या सचैला विधिवदपि च दत्वाञ्जलिं कालयोग्यम् ।
दीनास्या साश्रुनेत्रास्तदनु निशि परावृत्य सर्वे समेता
योधद्रङ्गं समेयुर्मरुनृपतिगुणान् कीर्तयन्तो द्विजाद्याः ॥१॥

तावत् तत्पत्तनान्तः क्षितिपतितनया अप्रविश्यैव नूनं,
सार्थाद् भूताः पृथग् वै, विशदमतिरथानन्दसिंहस्तु वीरः ।
भ्रातृश्रीरायसिंह सह दधदनुजेनाथ सार्धं विमातृ-
प्रोद्‌भूतेन प्रभूतप्रकटधृति किशोराह्वयेन प्रतस्थे ॥२॥

यौधिमौंह्लैकमाख्यः मुदृढधृतमतिस्तत्सहायाग्रगोऽभूद्,
यस्तं सत्कृत्य नीत्वा सह सपदि चलन् गोडवाड जगाम ।
श्रुत्वाऽऽयात [1]तमारात्समभिमुखमुपेत्यानयत् पद्मसिंहो
घाणेराव पुरं स्वं, भयरहितमना सोऽपि तत्र न्युवास ॥३॥

तावच्छ्रीभाटिमौलेरमरनरपतेरात्मजा धर्मपत्नी,
श्रीमद्राठौरभर्तुः स्वपतिमनु मृता निर्गमं तत्तुतस्य[2] ।
श्रुत्वा वै मातुलोऽस्य स्वमनसि सुविचार्योरुधाम्ने किशोर-
सिंहाभिख्याय हार्दाददित च विनयाद् भागिनेयाय पत्रम् ॥४॥

विज्ञाप्य[3] म्लेच्छनाथं प्रथमत उचितं तत्कृतेऽनुग्रहार्थं,
तोडासंज्ञं पुरं च त्वरितमपि ततस्तत्फलं चोपलभ्य ।
आहूतः कौमिणाऽन्ते स किल विनयतो भ्रातुराप्य[4] ह्यनुज्ञां,
दिल्लीद्रङ्गं समागादजितनरपतेरात्मजः श्रीकिशोरः ॥५॥

---

१ समीपम् । २ भटियान्यात्मजन्येत्यर्थः । ३ कछावा-जयसिंहेन पूर्वमजितसिंहमहाराजपुत्रं किशोरसिंहं भूमिप्रदानेनानुग्रहीतुं दिल्लीशः प्रार्थितः । तत्फलस्वरूपं टोडापुरं च लब्ध्वा पश्चाज्जयसिंहमहाराजेन स आहूतः इत्याशयप्राधान्यमत्र । ४ अभयसिंहस्य ।

चारौ यौ प्राग् विसृष्टौ त्वरितमथ खु मन्त्रिणं प्राप्य दिल्ल्या
    तत्पत्रं तौ हि तस्मै प्रददतुरपि चोन्मुच्य बुद्ध्वाशयं स ।
सद्य प्रोत्थाय गत्वाऽभयमरुनृपते· पाणिपद्मे च पत्र,
    प्रादादुद्घास्य सोऽपि क्षितिपतिमरणोदन्तमाप्यार्तिमाप[1] ॥६॥

मातृणा च स्वमातु सह तदनुचरीभिर्नृपालोऽभयः स,
    श्रुत्वा पित्राऽजितेनाथ च सह-गतिमुच्छ्वस्य चिन्ता चकार ।
नून शून्यं च पश्यन् भुवनमिदमहो! किं कृत वै विधात्रे-
    त्यश्रूण्यश्रान्तमुज्झन् दिनकरतनयानीरतीरं जगाम ॥७॥

तत्रोर्वीशा प्रभूता उपययुरजिताधीशमृत्यु निशम्य,
    क्षौरं सर्वे नृपाद्या विधिवदपि तथा कारयामासुरन्ये ।
स्नात्वा भास्वत्सुताम्भस्यपि च सुवसनं सम्यगाधारयस्ते,
    पित्रादींस्तर्पयित्वाऽभयनृपतिवरस्तान् विसृज्याप वासम् ॥८॥

नव्वाबा ये तदासन् यवनकुलपते पार्श्वसस्था पृथक् ते,
    गत्वा सर्वेऽपि शोकानुभवमभयराडन्तिके दर्शयन्त ।
प्राक् सश्लाघ्य प्रताप मरुधरणिपते स्वर्गतस्य प्रकाम,
    पश्चाद्धैर्यप्रदानं प्रभुमभिदधतस्त[2] नमन्तो निवृत्ता ॥९॥

कृत्वाद्यं नामगोत्र-ग्रहणपरिगत षोडशश्राद्धकृत्य,
    मध्य त्वेकादशाहे घटितवति वलौ साधु नारायणीये ।
अन्त्य च द्वादशाहे तदकुरुत तत सर्वदानानि चादात्,
    सापिण्ड्य चापि कर्माचरदभयनृपो भूपते स्वर्गतस्य ॥१०॥

इन्द्रप्रस्थीयविप्रान् पुनरपि परितो मण्डलस्थान् द्विजांश्च
    पक्वान्नैर्भोजयित्वा समभिमतपदस्वर्णधेनु-प्रदानै ।

---

१ उदन्तो वृत्तान्त । २ ईश्वर धैर्यप्रदान प्रार्थयमाना इत्यर्थ ।

शय्याहस्त्यश्वदानैः सुहृदरथवृहद्दक्षिणावस्त्रदानै-
भक्तिश्रद्धाननेतो बहुविनययुतस्तोषयामास नृपः ॥११॥

जाते पूर्णे तु कृत्येऽजितनृपतिमरणेर्नू मिपालाभयस्याऽऽ-
वासं म्लेच्छेश्वरोऽगात्, स किल तमिति चाश्वानयत् प्रीतिपूर्णन् ।
राजन्! स्वप्नाभमेतत् सकलमथ विधेश्चेष्टितं चानिवार्यं
यो वेत्तीशं हि सत्यं, स न भवजलधौ मज्जतीहेति विद्धि ॥१२॥

प्रोच्येत्थं म्लेच्छनाथोऽभयनरपतये रम्यहेमाम्बराणि,
रत्नान्याभूषणानि प्रचुरमदगजानब्धिपारोद्भवाश्वान् ।
दत्वा तं मानयंश्चाजितमरनृपते राजपट्टे निवेश्य,
प्राकार्षीत्तस्य भाले तिलकमघटयत्तत्र मुक्ताक्षतांश्च ॥१३॥

दत्वा वै राजराजेश्वरपदमभयेशाय तं च प्रशस्य,
कृत्वात्मीयेषु मुख्यं निजनिलयमगाम्लेच्छराजोऽभिनन्दन् ।
राजेन्द्रस्तत्परेद्युः किल निजनिलयान्म्लेच्छनाथस्य सौध,
गत्वा नत्वा तमेत्याप्रतिमविनयतस्तत्पुरस्तादतिष्ठत् ॥१४॥

दिल्लीनाथोऽपि तस्मै मरुनरपतये रत्नहेमाम्बराणि,
भव्यान्याभूषणानि प्रतिमुदितमना सद्गजं सतुरंगान् ।
प्रीत्यादात्, सोऽपि लब्ध्वा निजनिलयमगाद् म्लेच्छराजं प्रणम्य,
प्रीत्यैवं याति चायात्यपि यवनपतिप्रेमपात्रं स्म वीर ॥१५॥

पार्श्वस्था भूमिपाला अथ यवनवराड्डूरसंस्था नृपा ये
तेऽप्याकर्ण्याऽभयस्याऽखिलमरुवरणेन्द्रस्य राज्याभिषेकम् ।
तत्संतुष्टचर्यमेव द्विरदवररथाश्वान्मुदा प्रेषयन्त,
स्वैः स्वैः सन्मन्त्रिवर्यैः प्रणमत-कथनापूर्वकं सादरं च ॥१६॥

म्लेच्छाधीशेन सार्धं ह्यभयनृपमणेर्नित्यसंदर्शनेन,
प्रोद्भूता स्नेहवल्ली हृदयभुवि गता दृक्सुधापूरसिक्ता ।

शश्वत् संवर्धमानाऽप्रतिमसुखफलाऽभीष्टलाभप्रसूना,
प्राक्पुण्यामोदयुक्ता जगति विजयते विघ्नदावैरगम्या[1] ॥१७॥

प्रोद्यत्प्रौढप्रताप-प्रथितसुयशसो राजराजेश्वरस्य,
नूनं सद्धर्ममूर्तेर्निखिलमरुधराधीश्वरस्याभयस्य ।
एव दिल्लीश्वरस्यान्तिकमधिवसत पुण्यशीलप्रवृत्तेः,
प्राप्तैश्वर्यस्य तस्य प्रमुदितमनसः केऽपि मासा व्यतीयुः ॥१८॥

ढूंढाडाधीश्वरो यो यवननृपतिना सम्प्रदत्ताधिकार,
प्राग् लब्ध्वा शूरसेनं[2] स्म वसति मथुराया तदा स्वीयसैन्यै ।
श्रुत्वा सोऽस्य प्रशसा मरुवरणिपते. स्वीयकन्यां प्रदातुं,
सद्य सम्प्रैषयद्वै करिणमपि तुरङ्गास्तथा नारिकेलम् ॥१९॥

कौर्मिर्दैवज्ञविप्रास्तदनु निकटमाहूय पप्रच्छ कन्यो-
द्वाहीयं सन्मुहूर्तं, तदुदितसमये कार्यमारब्ध चास्य ।
सर्वा तत्सूचना चादिशदभयमहीपाय, सोऽप्युत्सवेन,
प्रारेभे तद्-विवाहोचितमधिकतर मङ्गलार्थं प्रकर्तुम् ॥२०॥

राजेन्द्राधीश्वरो वै परिमुदितमनाः सद्भटै स्वैश्च सैन्यै,
सार्धं नून वसान कनकविरचितान्यम्बराण्युत्सवेन ।
प्राग् गत्वा म्लेच्छनाथं न्यगददधिपते[1] यामि कौर्मेर्हि कन्यो-
द्वाहार्थं देह्यनुज्ञामिति सपदि निशम्यैप मोद विवव्रे[3] ॥२१॥

सद्रत्नाक्त महर्घ्यं मुकुटमवनिभुक्-शीर्ष्णि सम्राड् ववन्ध,
भाले मुक्ताफलाढ्यं रुचिरमरचयच्चोर्ध्वपुण्ड्रं च रक्तम् ।
प्रादाद्धेमाम्बराणि प्रवरमणिमय सच्चतुर्कं[4] स तस्मै
गर्जन्त चेभराजं पुनरपि तुरगान् दुन्दुभीना च पुञ्जम् ॥२२॥

---

१ विघ्नम्पवनाग्नेरगोचरा ।　　२ व्रजमण्डलम् ।　　३ प्रकटयाचकार ।
४ 'चौकी' तिप्रसिद्ध भूषण पुरा मौर्नी राजभिर्धार्यते स्म ।

म्लेच्छेशोऽथाह, राजन् [1]व्रज कुशलयुतो दुन्दुभि मत्पुरस्ताद्,
प्रोच्चैः संवादयन्नित्यथ स किल निशम्यैव नत्वाकरोत् तत् ।
गत्वा वप्राद् बहिश्च त्वरितमपि समारुह्य तस्मिन्पुराग्र्यं,
सैन्यैः सार्धं प्रतस्थे, तदनु च मथुरा सत्पुरीं प्राप वीरः ।।२३।।

श्रुत्वा कौमिस्तमाप्तं मरुधरणिनृपं, स्वं पुरं मृष्टमार्गं,
ससिक्तं पुष्पहारैर्युतमधिकतरं शोभितं वै चकार ।
सम्यग्वादित्रगीतध्वनिभिरभिमुखं चाप्य भक्त्या विनम्रो
भूत्वा वेदोक्तवाक्यैर्विधिवदतितरां पूजयामास भक्त्या ।।२४।।

कृत्वा पौर्वान् पुरोऽसस्फुरितनिजनिजोच्चाग्नियन्त्रांस्ततस्तु,
[2]दीपद्रुभ्राजिशीर्षास्तदनु च पुरुषान् मस्तकन्यस्तदीपान् ।
तत्पृष्ठे वारणेन्द्रस्थितजनविधृतोच्चध्वजां लक्ष्म-लक्ष्मीं,
पश्चाद् मत्तेभसंस्थोऽभय उचितभटैस्तत् पुरं प्राविशत् सः ।।२५।।

श्रुत्वा तं पत्तनान्तर्गतमभयनृपं योषितस्तत्पुरस्था
अन्योन्याऽलक्ष्यभावा निजनिजनिलयान्निर्ययुर्द्रष्टुमत्र ।
कान्तं शुश्रूषमाणा उपययुरपहायैव तं काश्चिदासु,
काश्चित् स्तन्यं पिबन्तं निजलघुशिशुमुत्सृज्य तत्रोपजग्मुः ।।२६।।

काश्चिद् दुग्धं तु चुल्ल्या उपरि समधिकं पच्यमानं विहाय,
त्यक्त्वा गां दुह्यमाना कतिचन च ययुर्वत्स-सौभाग्ययोगात् ।
अश्नन्त्यः काश्चिदन्या किमपि च तदपास्याभिजग्मुः प्रमोदा-
दञ्जत्यः काश्चिदक्षीण्यपि युगपदयानञ्जनं[3] प्रोज्झ्य हर्षात् ।२७।

गच्छन् भूपः पुरान्तर्महति नृपपथे वारणस्थः समन्ताद्,
द्रव्यं प्रोत्सर्जयन् वै नरपतिजयसिंहोच्चसौधं जगाम ।
तावद् वादित्रघोषैरपि युवति-विनिर्गीत-गीतैः पुरोधा[4]
वेदोद्घोषप्रसक्तैर्द्विजजननिकरैः संमुखं शीघ्रमागात् ।।२८।।

---

१ अंसेषु स्कन्धेषु २ दीपद्रुभिः प्रदीपवृक्षैर्भ्राजीनि शोभानि शीर्षाणि येषां ते तथोक्ता, तान् । ३ अयान् अगमन् । ४ पुरोहित ।

तेनालं सत्कृतश्चाभयनरपमणिर्वारणस्थोऽभिसृत्य,
तद्द्वार्युच्चैर्निबद्धं विधिवदपि तथा तोरणं चाभिवन्द्य ।
तस्मादुत्तीर्य[1] सद्योनिजनिखिलजनास्तत्र चैवोपवेश्य,
भूपः स्तोकैः स्वकीयैः सह सपदि तदन्तःपुरं प्राविशत् सः ॥२६॥

नीत्वा विप्रास्तमन्तर्भवनमुपनिवेश्याथ संस्थाप्य कन्या,
मातॄणां साधु पूजामपि च गणपते: कारयामासुरग्रे ।
तद् राज्ञ: पाणिपद्मं न्ययुरथ विधिवत् कन्यकाया: कराब्जं,
प्रोत्थाप्यान्तश्चतुष्के विरचितविलसन्मण्डपे तौ च निन्यु: ॥३०॥

विप्रास्ते मण्डपाग्र्ये विधिवदपि निवेश्याशु तौ दंपती तु,
वह्ने: कुण्डं विधायागममतविधिना वह्निकोणे तु तस्य ।
वेदोद्घोषैर्ग्रहाणां रुचिरमरचयन् मण्डलं [2]मण्डनाभं,
धृत्वा तत्राग्र्यकुम्भं तदनु गणपतिं स्थापयामासुराशु ॥३१॥

कर्मज्ञो विप्रवर्य: श्रुतिपठनपरो वह्निमाधाय कुण्डे,
पालाशीभि: समिद्भिर्ज्वलदनलमुखे तद्धितार्थं जुहाव ।
तेनैवाज्ञापितौ च ज्वलनमकुरुतां [3]दक्षिणं दंपती तौ,
वामाङ्के तां नवोढां मरुनरपतिरास्थाप्य तस्थौ स्वयं च ॥३२॥

विप्रा वेदोक्तवाक्यैर्यदिह च करणीयं हि तत् साधु कृत्वा,
पूर्णं सर्वं प्रचक्रुस्तदनु मरुपतिर्निर्जगामाथ सौधात् ।
आरुह्याग्र्यं द्विपेन्द्रं स्वयमथ च नवोढां नृयाने निवेश्य,
प्रोच्चैर्वादित्रघोषै: सुपथि किल चलन् स्वं निवासं जगाम ॥३३॥

ढूंढाडाधीशेन राज्ञा तदभिमुखमुपेत्याथ नीतौ प्रभाते,
स्वं सौधं, दंपती तौ मरुधरणिजनैः संयुतौ गच्छतः स्म ।

---

१ तस्मात् वारणात् । २ भूषण-सन्निभम् । ३ ज्वलनमग्नि प्रदक्षिणमकुरुतामिति योजना ।

